शैलीमें रचे गये अति प्राचीन संस्कृत ग्रन्थोंमेंसे है। रविषेणने अपना पद्मचरित ई. ६७७ में समाप्त किया था। संस्कृतके जैन पौराणिक काव्योंमें सम्भवतः केवल यही एक ऐसा ग्रन्थ है जो वराङ्गचरितके पूर्वज होनेका दावा कर सकता है। किन्तु अभी यह बात निश्चित रीतिसे नहीं कही जा सकती। संस्कृतमें वराङ्गचरितसे पीछेके बहुतसे जैन पुराण और काव्य वर्तमान हैं। किन्तु मुझे उनपर जटिल-कविका कोई विशेष प्रभाव प्रतीत नहीं होता। वादिराजने अपने पार्श्वनाथ-चरितमें बहुतसे ग्रन्थकारोंका स्मरण किया है किन्तु अचरज है कि उन्होंने जटिलकविका स्मरण नहीं किया। यदि वराङ्ग-चरितकी प्रतियोंका कम परिणाममें पाया जाना किसी बातका सूचक है तो हम अनुमान कर सकते हैं कि यद्यपि जटिल कविकी ख्याति कर्नाटकसे बाहर भी फैली थी, तथापि वराङ्ग-चरितका अधिक प्रचार नहीं हो सका था। जिनसेनने वराङ्गचरितसे बहुत सी बातें लेकर उन्हें आदिपुराणमें अपने शब्दोंमें निबद्ध किया है। उदाहरणके लिये—वरा० १,६–७ और आदि० १,१२२–२४, वरा० १,१०–११ और आदि० १,१२७–३०, वरा० १,१५ और आदि० १,१३९, वरा० १,१६ और आदि० १,१४३–४४ की परस्पर तुलना करनी चाहिये। चामुण्डरायने, जैसा कि हम ऊपर लिख आये हैं, वराङ्गचरितसे कुछ सामग्री ली है। सोमदेवने ( ई. ९५९ ) अपने यशस्तिलकचम्पू ( आ० ७ पृ. ३३२ ) में 'भवति चात्र श्लोकः' लिखकर एक पद्य उद्धृत किया है, जो वराङ्गचरितके पाँचवें सर्गका १०३ वाँ श्लोक है।

**८ वराङ्गचरितमें व्याकरणसम्बन्धी विशेषताएँ**—कुछ विशेष शब्द, जिनका ग्रन्थकारने उपयोग किया है, निम्न प्रकार हैं—'गोण'=बैल ( ६, १५ )। इस शब्दका मूल प्राकृत है। 'फुल्ल' ( २, ७३ ) 'भिण्ड' ( १२, ८५ ) और 'तुम्ब' ( ३१, ३२ ) शब्द भी इसी प्रकारके हैं। 'मैथुन' ( २१, ७५ और २५, ६ ) जो कन्नड़के 'मैदुन' और मराठीके 'मेहुणा' का स्मरण कराता है, प्राचीन संस्कृतमें इस अर्थमें व्यवहृत नहीं हुआ है। बर्कर=बकरा ( २७, १७ ) शब्द भी अप्रसिद्ध है। अद्धा=काल शब्द प्राकृत भाषाके जैन ग्रन्थोंमें काफी मिलता है। 'तिरश्च' शब्द प्राकृत भाषाके 'तिरिच्छ, या 'तिरच्छ' शब्दका स्मरण कराता है। 'सम्पद्'के स्थानमें 'सम्पदा' शब्दका प्रयोग किया है। 'सदन' के लिये 'सादन'

'मृद्वीका' के लिये 'मृद्वीक' और 'अवहिता' के लिये 'आवहिता' का प्रयोग सम्भवतः छन्दकी वजहसे करना पड़ा है, ऐसा मालूम होता है।

कुछ शब्दोंका लिङ्ग ध्यान देने योग्य है - गेह, जाल, भूषण, चूर्ण और चक्र शब्दको पुल्लिंगमें रक्खा है, और अक्षत और वृत्तान्त शब्दको नपुंसक लिङ्गमें। संज्ञा शब्दोंके साथ 'तम' प्रत्ययका प्रयोग किया है यथा—वणिक्तम, बन्धुतम, अर्थतम। एक जगह (४, ११४) 'तरतम' शब्दका प्रयोग विशेषणके तौरपर किया है। बहुतसे संज्ञावाचक और विशेषणवाचक शब्दोंका प्रयोग भाववाचकके रूपमें किया है, फिर भी उसके साथ भाववाचक प्रत्यय नहीं जोड़ा गया है।

कुछ धातुरूप ध्यान देने योग्य हैं—भर्त्सयन्ति, आददुः, आददाति, मृगयामि, प्रसवन्ति इत्यादि। एक दो स्थानोंपर डबल उपसर्गोंका भी उपयोग मिलता है यथा—उपोपविष्ठ, अध्यधिष्ठित। अश्वघोषने भी 'उपोपविष्ट'का प्रयोग किया है और यह रामायणमें भी मिलता है। ऐसा मालूम होता है कि जटिल कविने बहुतसे अनियमित रूपोंका भी व्यवहार किया है यथा–'ससृजुः'के लिये 'ससर्जुः', 'सन्निदधुः'के लिये 'सन्निदध्युः','जघनिथ'के लिये 'जघ्निथ', 'जुहुवुः'के लिये 'जुहुः', 'ममृदुः'के लिये 'ममर्दुः', 'समश्नुवानानाम्' या 'समश्नुवताम्'के लिये 'समश्नुताम्', 'संविभाजयितुम्' या 'संविभक्तुम्' के लिये 'संविभाजितुम्', 'सुसाध्य' के लिये 'सुसाधियत्वा', 'अविगणय्य'के लिये 'अविगण्य' 'रत्वा'के लिये 'रंत्वा' और 'परिमथ्य'के लिये 'परिमंथ्य'। कहीं कहीं मूल धात्वर्थमें णिजन्तका प्रयोग किया है। सजातीय कर्मकारकके साथ नृत् और वच् धातुका सकर्मक रूपसे प्रयोग किया है। किसी किसी श्लोकमें 'एवम्' और 'इत्थम्' तथा 'चेत्' और 'यदि' दोनोंका प्रयोग किया है। आह अथवा उपाहके बदलेमें 'साह' शब्दका व्यवहार किया है। ग्रन्थमें सापेक्ष समासोंका बाहुल्य है। पाणिनिके सूत्र 'आनङ् ऋतो द्वन्द्वे (६-३-२५) की उपेक्षा की गई है। कहीं कहीं ग्रन्थकारने समाहारका प्रयोग नहीं किया है, जो प्राचीनोंके मतसे आवश्यक था। यथा–हस्त्यश्वयानानि, पदातिहस्त्यश्वरथैः। 'सवैजयन्तीकाः' के स्थानमें 'सवैजयन्त्यः' और 'नेतृकयोः' के स्थानमें 'नेत्रोः' का प्रयोग भी ध्यान देने योग्य है। सन्धिके साधारण नियमोंका ध्यान रक्खा गया है। किन्तु ऐसा प्रतीत होता है कि प्रथम और द्वितीय तथा तृतीय और चतुर्थ चरणके मध्यमें

ग्रन्थकार सन्धिको अनिवार्य नहीं समझते थे। अनियमित सन्धिके दो उदाहरण इस प्रकार हैं—सुक्षेत्रे+अज्ञः=सुक्षेत्रयज्ञः और ग्रामे+एकरात्रम्=ग्रामैकरात्रम्। कारकोंके प्रयोगमें भी वैचित्र्य है। उक्त प्रयोगोंकी कुछ विशेषताएँ महाभारत और रामायणके लिये साधारण वस्तु हैं और उनके सम्बन्धमें कहीं कहीं जटिल और अश्वघोषमें ऐकमत्य है।

९ **वराङ्गचरितके छन्द**—वराङ्गचरितमें निम्न छन्दोंका उपयोग किया गया है—अनुष्टुभ्, उपजाति, द्रुतविलम्बित, पुष्पिताग्रा, प्रहर्षिणी, भुजङ्गप्रयात, मालभारिणी, मालिनी, वसन्ततिलका, और वंशस्थ। अश्वघोषकी तरह जटिल कविको भी उपजाति छन्द विशेष प्रिय था, जैसा कि ग्रन्थसे स्पष्ट है। वराङ्गचरितकी उपलब्ध प्रतियोंमें बहुतसे पाद दोषपूर्ण हैं। छन्दसम्बन्धी अनियमितता भी दृष्टिगोचर होती है। यथा—अनुष्टुभ् छन्दके कुछ चरणोंमें नौ मात्राएँ हैं। एक उपजाति छन्दमें एक चरण वंशस्थ वृत्तका है। मालभारिणी पद्योंकी कुछ पङ्क्तियोंमें मात्राएँ कम हैं, और कुछमें अधिक। इत्यादि

१० **वराङ्गचरितकी शैली**—दो कारणोंसे वराङ्गचरितकी शैलीके बारेमें न्यायपूर्वक कुछ कह सकना कठिन है। एक तो उपलब्ध प्रतियाँ ठीक नहीं हैं, उनमें बहुतसे वाक्य बिगड़ गये हैं, दूसरे ग्रन्थके मुख्य भागको सैद्धान्तिक वर्णन और वाद-विवादने घेर रक्खा है। वराङ्गचरितमें कालिदासकी तरह न तो सुन्दर कल्पनाएँ ही हैं, न परिपूर्ण उपमाएँ और न संस्कृतभाषाका सरस प्रवाह। सैद्धान्तिक वर्णनसे ग्रन्थके काव्योचित भावको हानि पहुँची है। प्रथमसर्गमें जिस काव्य-प्रवाहके दर्शन होते हैं, वह अन्त तक एक-सा नहीं बहा है। घटनाक्रमका चित्रण करनेमें तथा नैतिक उपदेश देनेमें जटिल कवि पटु हैं। यद्यपि उनका पालकी और मन्दिरका वर्णन बोजल या क्लिष्ट है, किन्तु युद्धके दृश्य एक महान् पौराणिक कविके अनुरूप हैं। दक्षिणके शिल्पशास्त्रियोंकी तरह जटिल कवि दृश्योंका चित्रण करनेमें खूब आनन्द लेते हैं। ग्रन्थमें जहाँ तहाँ सुन्दर पद्य दृष्टिगोचर होते हैं। कविने बहुत-सी उपमाएँ अपने पूर्वजोंसे ली हैं, किन्तु उनकी अपनी उपमाएँ भी प्रशंसाके योग्य हैं। यथा—

---

१ वरा० २, ५३। २ वरा० २२, ५७।

निदाघमासे व्यजनं यथैव करात्करं सर्वजनस्य याति ।
तथैव गच्छन् प्रियतां कुमारो वृद्धिं च बालेन्दुरिव प्रयातः ॥२८,६०॥

सम्भवतः इस प्रकारकी उपमाओंपर मुग्ध होकर ही जिनसेनने जटिलमुनिकी कवित्वशक्तिका समादर किया था ।

## ७ चार अन्य वराङ्गचरित

### १ वर्धमान कविका संस्कृत वराङ्गचरित

उत्तरकालमें राजकुमार वराङ्गकी कथा बहुत रुचिकर सिद्ध हुई और वर्धमान कविने संस्कृत पद्योंमें दूसरे वराङ्गचरितकी रचना की । यह चरित जटिलके वराङ्गचरितका संक्षिप्त रूप है । अनेक स्थलोंपर दोनोंकी शब्द-रचनामें साम्य है । वर्धमान कविने केवल धार्मिक उपदेशों और विविध वर्णनोंकी काँट छाँट की है, किन्तु कथानककी रूप रेखा ज्योंकी त्यों रहने दी है । वर्धमान कविने लिखा है—

गणेश्वरैर्या कथिता कथा वरा वराङ्गराजस्य सविस्तरं पुरा ।
मयापि संक्षिप्य च सैव वर्ण्यते सुकाव्यबन्धेन सुबुद्धिवर्धिनी ॥

इससे संभवतः उनका यही आशय है कि उन्होंने जटिल कविके ग्रन्थको संक्षिप्त किया है । वर्धमान कविके वराङ्गचरितकी प्रस्तावनामें पं० जिनदासने लिखा है कि यह वराङ्गचरित वही है, जिसका उल्लेख जिनसेनके हरिवंशपुराणमें है । किन्तु यह मान्य नहीं किया जा सकता, क्यों कि ऊपर यह निश्चित रीतिसे प्रमाणित किया गया है कि जिनसेनके द्वारा उल्लिखित वराङ्गचरितके कर्ता जटिल कवि हैं ।

वर्धमान कविका समय निर्णीत करनेके लिये कोई निश्चित प्रमाण नहीं है । क्योंकि उन्होने अपने बारेमें बहुत ही कम लिखा है । वे मूलसंघ, बलात्कारगण और भारती गच्छके भट्टारक थे और परवादिपञ्चानन उनकी उपाधि थी । मैं वर्धमान नामके दो व्यक्तियोंको जानता हूँ । उनमेंसे एक न्यायदीपिकाके कर्ता धर्मभूषणके गुरु थे । यदि यही वर्धमान प्रकृत वर्धमान हैं तो वराङ्गचरित अधिकसे अधिक ईसाकी चौदहवीं शताब्दीके मध्यमें रचा गया है क्यों कि धर्मभूषणका समय विद्याभूषणने ई. १६०० के लगभग और पाठकने ई. १३८५

१ यह चरित मराठी अनुवादके साथ प्रकाशित हो चुका है ।

२ इन्डियन लॉजिक, मिडियावल स्कूल पृ. ५४ ।

३ भाण्डारकर रिसर्च इन्स्टीटयुट पूनाकी पत्रिका, जि. १२, ४, पृ. ३७६ ।

बतलाया है। दूसरे वर्धमान हूमच शिलालेखके रचयिता हैं। उनका समय राईस-सॉहबके अनुसार १५३० ई. के लगभग है। इनके सम्बन्धकी एक बात उल्लेखनीय है कि यह बलात्कारगणके अनुयायी थे। वर्तमान दशामें यह वराङ्गचरित ईसाकी तेरहवीं शताब्दीसे पहलेका नहीं हो सकता। १३ वीं शताब्दीके बाद जटा-सिंहनन्दि और उनके वराङ्गचरितका उल्लेख बहुत कम देखनेमें आता है। यदि यह एक आकस्मिक घटना नहीं है तो इसका संभाव्य कारण यही हो सकता है कि वर्धमान कविके वराङ्गचरितका अच्छा प्रचार हो गया था। आगे वराङ्ग-चरितके जिन कन्नड़ और हिन्दी भाषान्तरोंका उल्लेख किया जाता है उनका आधार वर्धमान कविका ही वराङ्गचरित है।

## २ कन्नड़ वराङ्गचरित

एक वराङ्गचरित कनड़ी भाषामें धरणि पण्डितने बनाया है। ये पण्डित ई० १६५० के लगभग हुए थे, और विष्णुवर्धनपुरके निवासी थे। यह चरित कनड़ी भाषाके भामिनी षट्पदी नामक प्रसिद्ध छन्दमें रचा गया है। रचयिताका कहना है कि पूर्व रचनाओंके आधारपर इसकी रचना की गई है। असलमें ग्रन्थकारने अन्य पूर्ववर्ती ग्रन्थकारोंके साथ साथ एक वर्धमान यतिका भी उल्लेख किया है। इससे प्रतीत होता है कि वर्धमानका वराङ्गचरित उनकी रचनाका आधार है। इस ग्रन्थकी एक प्रति आर० नरसिंहाचार्यको मिली है किन्तु वह अपूर्ण है, उसमें केवल आठ परिच्छेद हैं।

## ३ हिन्दी वराङ्गचरित

लाला पन्नालालजी देहलीकी सज्जनतासे इस ग्रन्थकी एक प्रति मुझे प्राप्त हुई थी। यह प्रति लाला हरसुखराय जैन पुस्तकालय, मन्दिर पञ्चायती, देहलीकी है। इसका लेखन-काल सम्वत् १९०५ है। हिन्दी छन्दोंमें इसकी रचना हुई है। अन्तिम पद्यमें लिखा है कि संस्कृतमें होनेके कारण सब लोग वर्धमान कविके वराङ्गचरितको नहीं समझ सकते, इस लिये इसका भाषानुवाद करनेकी आवश्यकता हुई। भदावर प्रान्तके (ग्वालियर स्टेट) अटेर नामक स्थानमें विश्वभूषण नामके भट्टारक रहते थे। उनके शिष्यका नाम ब्रह्मसागर था। एक बार यात्राके लिये वे गिरनार गये और लौटते समय, मार्गमें, हिंडौनमें ठहरे। वहाँ बहुतसे धार्मिक गृहस्थ रहते थे। उनके एक शिष्य पाण्डे लालचन्द थे।

१ एपिग्राफिका कर्नाटिका ८, नगर नं. ४६।

उन्होंने सबके उपकारके लिये संस्कृतसे भाषासे अनुवाद किया। उनके इस कार्यमें शोभाचन्दके पुत्र नथमलने बहुत सहायता दी और माघशुक्ला पंचमी सम्वत् १८२७ को यह ग्रन्थ समाप्त हुआ।

## ४ दूसरा हिन्दी वराङ्गचरित

कमलनयनके हिन्दी वराङ्गचरितके कुछ प्रासङ्गिक अंश बाबू कामताप्रसादजीके द्वारा प्राप्त हुए थे। अन्तिम सन्धिसे पता चलता है कि वर्धमान कविके संस्कृत वराङ्गचरितका यह छन्दोबद्ध भाषानुवाद है। कमलनयन मैनपुरीके निवासी थे। वे यदुवंशी बुढ़ेले थे। उन्होंने ज्येष्ठ शुद्ध पूर्णिमा सम्वत् १८७२ में इस ग्रन्थको समाप्त किया था।[१]

स्याद्वाद जैन विद्यालय
बनारस
कार्तिकी पूर्णिमा
वी. नि. सं. २४६५

हिन्दी अनुवादक—
कैलाशचन्द्र शास्त्री

---

१ वराङ्गचरितकी अँग्रेजी प्रस्तावनाका यह अविकल अनुवाद नहीं है। इसमें अंग्रेजी न जाननेवाले हिंदी पाठकोंके लिये उसके मुख्य मुख्य आवश्यक अंशोंका सार दे दिया गया है। विशेष विस्तार और प्रामाणिक संकेत आदि जाननेके इच्छुक श्रीयुत उपाध्यायजीकी अंग्रेजी प्रस्तावनासे जान सकते हैं।

—अनुवादकर्ता

# विषयानुक्रमः

## सर्गः १



## सर्गः २



## सर्गः ३



## सर्गः ४

## सर्गः ५

१–४ लोकस्वरूपम् । ५–८ वातवलयाः । ९–१६ नारकी गतिः, नरकाणां नामानि प्रभेदाश्च । १७–२५ तत्र शीतोष्णादिसुखदुःखविचारः । २६–२९ नरकगामिनां निर्देशः । ३०–१०१ नरकेषु जीवानां कर्माणुसारेण दण्डविधानवर्णनम् । १०२–१०३ क्षुद्रमत्स्यस्योदाहरणम् । १०४–११० आयुःप्रमाणं सुखाभावश्च ।

## सर्गः ६

१–३२ तिर्यग्गतेर्भेदास्तत्र दुःखवर्णनं च । ३३–३७ तिर्यग्गतिगामिनां निर्देशः । ३८–४४ शरीराकृतिः, आयुःप्रमाणं च । ४४–५५ कुलयोनिसंख्यादिवर्णनम् ।

## सर्गः ७

१–१३ मानुषजातिविचारे भोगभूवर्णनम् । १४–२३ दशविधकल्पवृक्षाः । २४–२७ भोगभूगामिनां निर्देशः । २८–५४ दानविचारे तद्भेदफलादिवर्णनम् । ५५–६७ भोगभूमौ शरीरलक्षणसुखोपभोगादिवर्णनम् ।

## सर्गः ८

१–४ कर्मभूमावनार्या आर्याश्च । ५–२७ धर्मान्वितस्य मनुष्यजन्मनो दुर्लभत्वम् । २८–३९ अपुण्यभाजां वर्णनम् । ४०–५९ पुण्योपेतानां वर्णनम् । ६०–६९ धर्माचरणस्यावश्यकता शरीरस्वरूपश्च ।

## सर्गः ९

१–११ देवलोका देवलोकवासिनश्च । २२–२४ विमानवर्णनम् । २५–३६ देवलोकगामिनां निर्देशः । ३७–५४ देवानां जन्मवपुर्वेषविलासादिवर्णनम् । ५५–६२ आयुःप्रमाणादिवर्णनम् ।

## सर्गः १०

१–४ मोक्षस्य बाहुल्यादिवर्णनम् । ६–१० मोक्षवर्णनम् । ११–२८ मोक्षगामिनां सोदाहरणं वर्णनम् । २९–४२ सिद्धानामूर्ध्वगमनादिविशिष्टगुणवर्णनम् । ४३–६४ सिद्धानां क्षायिकसुखस्य वर्णनम् ।

## सर्गः ११



## सर्गः १२



## सर्गः १३



## सर्गः १४

द्भटनाम्नो वराङ्गस्य सर्वत्र यशोविस्तारः। ६४–७२ सार्थपतिसागरवृद्धिना सह नगरं प्रति गमनं तत्र सन्मानश्च। ७३–८० स्वगृह इव तत्र वासः सुखेन कालव्ययश्च। ८१–८५ वणिक्कुमारैः कश्चिद्भटस्य वणिक्प्रभुत्वे स्थापनम्। ८६–९८ पुरवासिनां तमधिकृत्य विचारास्तस्य ललितपुरे सुखेन कालगमनम्।

## सर्गः १५

१–२२ अश्वेनापहृते कुमारे राज्ञो दुःखम्, उत्तमपुरे सर्वत्र निराशा च। २३–४७ मातुः प्रियाङ्गनानां च शोकविलापादिवर्णनम्। ४८–६२ प्रियाङ्गनानां पावकप्रवेशनाय श्वशुरान्तिके विज्ञप्तिः। ६३–६९ सर्वज्ञवचननिवेदनेन तासां निरोधनं धर्माचरणाय विज्ञप्तिश्च। ७०–७४ मुनिपतेरुपदेशः। ७५–१०५ संसारस्वरूपवर्णनम्। १०६–१३१ द्वादशव्रतात्मकस्य धर्मस्य तत्फलस्य विवेचनम्। १३२–१४६ व्रतग्रहणानन्तरं तासां जिनपूजादौ कालव्ययः।

## सर्गः १६

१–२९ मधुराधिपललितपुराधिपयोर्गजनिमित्तो विग्रहः। ३०–४५ नरपतिसमेतस्येन्द्रसेनस्य ललितपुरं प्रति प्रयाणम्। ४६–७४ परचक्रभीत्या प्रजानां ललितपुरप्रवेशनं राज्ञो मन्त्रिभिः सह मन्त्रविधिः। ७५–७८ राज्ञः सभासमक्षं युद्धाय शासनं नगरे च घोषणा। ७९–९० अस्मिन् प्रस्तावे कश्चिद्भटस्य विचाराः। ९१–९९ कश्चिद्भटस्य सागरवृद्धिं प्रति युद्धगमनविषये विज्ञप्तिः, तस्योपदेशश्च। १००–१११ सर्वानुमत्या कश्चिद्भटस्य समराय गमनम्।

## सर्गः १७

१–८ कश्चिद्भटे राज्ञो विश्वासस्तस्मै दत्तं चाभिवचनम्। ९–२५ युद्धशासनं प्रयाणवर्णनं च। २६–३५ कश्चिद्भटमुदिश्य पुरवासिनां मनोगतानि। ३६–८६ सैन्यशोभा युद्धवर्णनं च।

## सर्गः १८

१–२४ इन्द्रसेनदेवसेनयोर्युद्धम्, विजयस्य शौर्यं सेनाभङ्गश्च। २५–२८ कश्चिद्भटोपेन्द्रसेनयोः संवादो वाक्कलहश्च। २९–६३ तयोर्युद्धं तस्य वर्णनं च। ६४–१०९ इन्द्रसेनदेवसेनयोः परस्परं युद्धम्, कश्चिद्भटस्यागमनं, इन्द्रसेनबलविनाशश्च। ११०–१३० सर्वत्र जयजयकारः, कश्चिद्भटस्य सानन्दं नगरप्रवेशश्च।

## सर्गः १९

१–७ कन्याप्रदानं प्रति राज्ञा कृतः कश्चिद्भटस्य वंशविमर्शः कश्चिद्भटस्य विनयपूर्णवचांसि च । ८–११ स्ववचनपालनाय राज्ञे मन्त्रिणां विज्ञप्तिः, कश्चिद्भटसुनन्दाविवाहस्य निश्चयश्च । १२–२६ ललितपुर्यां विवाहसंभारादिवर्णनम् । २७-३१ तयोर्दर्शने पुरवासिनां मनोगतानि । ३२-३९ सुनन्दाकश्चिद्भटयोर्विलासः । ४०–४४ कश्चिद्भटदर्शनेन मनोरमायाः कामबाधा । ४५–६१ कश्चिद्भटस्यान्तिके दूतीगमनं तस्य च स्वदारसंतोषव्रते स्थैर्यम् । ६२–७१ परस्परसंलापानन्तरं कश्चिद्भटस्य विवाहायानुमतिः । ७२–८१ दूत्या कृतं मनोरमायाः सांत्वनम् ।

## सर्गः २०

१–६ वाजिनापहृते कुमारे सुषेणस्य यौवनराज्याभिषेकः । ७–११ परचक्रागमे सुषेणपराभवः । १२–२७ वृद्धपितुः शोकः, साहाय्यार्थं ललितपुराधिपतेर्विज्ञप्तिश्च । २८–३८ राज्ञा कश्चिद्भटस्य कृतं निवेदनं, पितुः साहाय्यार्थं गन्तुं विज्ञप्तिश्च । ३९-४५ कन्याशतेन मनोरमया च विवाहः । ४६-६४ सागरवृद्धिना सेनया च सह वराङ्गस्य स्वविषयं प्रति गमनम् । ६५-७४ वराङ्गस्य प्रत्यागमे राज्ञः परमानन्दः । ७५–७८ बकुलेश्वरपरिभवानन्तरं पुरप्रवेशाय वराङ्गस्य निश्चयः । ७९–८० बकुलेश्वरस्य पलायनम् । ८१–९१ वराङ्गस्य पुरप्रवेशः स्वजनसमागमश्च ।

## सर्गः २१

१–४ पूर्वार्जितकर्मशक्तिः । ५–१७ देवसेनस्य प्रतिनिवर्तनं वराङ्गस्य च न्यायमार्गेण राज्यपालनं क्षमाभावश्च । १८–२५ नवराज्यनिवेशनाय पितुः समीपे इच्छाप्रदर्शनं तत्संमतिश्च । २६–३१ सरस्वतीनदीतीरे आनर्तपुरस्थापनम् । ३२–४९ आनर्तपुरादिवर्णनम् । ५०–५४ सागरवृद्धेरपि नृपाभिषेकः । ५५–७५ राज्यविभजनं, बकुलेश्वरपुत्रीग्रहणेन तस्यानुग्रहः । ७६–८१ वराङ्गस्य सुखेन राज्यपालनम् ।

## सर्गः २२

१–२० धर्मेण भूमिं पालयतो वराङ्गस्य षड्ऋतुषु सुखोपभोगवर्णनम् । २१-२६ आत्मकर्तव्यमुद्दिश्य राज्ञे देव्या कृतः प्रश्नः । २७–५४ गृहिधर्मवर्णनं तत्रापि जिनपूजामहत्त्वं च । ५५–७९ जिनालयकरणं तद्वर्णनं च ।

## सर्गः २३

१-४७ विधिपूर्वकं जिनेन्द्रबिम्बस्थापनपूजादिवर्णनम् । ४८-७३ तत्काले नगरशोभा राज्ञो जिनालयं प्रति गमनं, जिनपूजाप्रतिमास्थापनादिवर्णनं च । ७४-८३ मुनिमुखेन पूजाफलवर्णनम् । ८४-८७ मुनेः स्तुत्यान्वितमाशीर्वचनम् । ८८-९३ राज्ञो दानादिधर्माचरणम् । ९४-१०७ अष्टाह्निकादिपूजावर्णनम् ।

## सर्गः २४

१-१४ राज्ञो विषयोपभोगादिवर्णनम् । १५-२० पुरुषादिवादमधिकृत्य राज्ञो मन्त्रिवर्गस्य पृच्छा । २१-५३ दैवनियोगदेवकालग्रहस्वभावेश्वरनियति-पुरुषशून्यवादादिनिराकरणम् । ५४-६१ कर्मवादस्य स्थापनमनेकान्तयुक्त्या विवेचनं च । ६२-७७ शुभाशुभकर्मफलवर्णनम् ।

## सर्गः २५

१-११ ईश्वरकर्तृत्ववर्णादिवादविचाराः । १२-२७ वेदोपदिष्टयज्ञहिंसायाः सोदाहरणं निराकरणम् । २८-४९ द्विजातिश्रेष्ठत्वस्य वैदिककर्मणां विविधलोक-वादानां च वैयर्थ्यम् । ५०-५९ विविधतीर्थानां वर्णनम् । ६०-७० द्विजाति-दानपितृबलीत्यादीनां वैयर्थ्यम् । ७१-७३ हेतुवादविचारः । ७४-९८ आप्त-मीमांसायां परदेवतानां दोषाविष्करणेन जिनानामर्हतामाप्तत्वसिद्धिः ।

## सर्गः २६

१-३ द्रव्यगुणपर्यायनिर्देशः । ४-१३ षड्द्रव्यप्रस्तावे जीवविचारः । १४-२२ षड्विधपुद्गलविचारः । २३-३२ धर्माधर्मकालाकाशविचारः । ३३-४४ परिणामत्वादिद्रव्यलक्षणविवेचनम् । ४५-७५ प्रमाणनयविवेचनम् । ७६-९० अनेकान्तात्मकस्याद्वादस्य विवेचनम् । ९१-१०७ रत्नत्रयस्य विवेचने दर्शनस्य श्रेष्ठत्वम् ।

## सर्गः २७

१-३० प्रथमानुयोगप्रस्तावे कालसंख्याभेदादिविवेचनम् । ३१-३२ त्रिषष्टि-कारणमानुषाः । ३२-३६ षोडश मनवः । ३७-३९ चतुर्विंशति तीर्थकराः । ४०-४१ द्वादश चक्रवर्तिनः । ४२-४४ नव वासुदेवा नव प्रतिप्रतिवासुदेवाश्च । ४५-४८ चक्रवर्तिना तीर्थनिर्देशः । ४९-६३ तीर्थंकराणामुत्सेधायुरान्तर-

कालविवरणम् । ६४–६५ तीर्थव्युच्छेदनिर्देशः । ६६–७० तीर्थंकराणां पूर्वजन्मविमाननामानि । ७१–७३ पितृनामानि । ७४–७७ जिनमातरः । ७७–८० दानपतयः । ८१–९४ जन्मस्थानवंशवर्णगोत्रमुक्तिस्थानादिनिर्देशः ।

## सर्गः २८

१–५ अनुपमादेव्याः सुगात्रस्य जन्म । ६–१३ सुगात्रस्य वर्णनं राजपुत्रैश्च कलाशिक्षणम् । १४–२३ वराङ्गस्य वैभवादिवर्णनम् । २४–३० उल्कापतनदर्शनेन वैराग्योत्पत्तिः । ३१–५६ द्वादशानुप्रेक्षाभावनम्, मृत्योर्ध्रुवत्वं संसारानित्यता च । ५७–६४ सुगात्ररक्षणाय सागरवृद्धये विज्ञप्तिः, तपश्चरणे च निश्चयः । ६५–६९ परिपाकतिक्तमिदमिति सागरवृद्धिवचनानि । ७०–७८ वराङ्गस्य पुनरुपदेशः, सागरवृद्धिरपि तपश्चरणाय सिद्धः । ७९–८८ वराङ्गस्य वैराग्यश्रवणेऽन्तःपुरस्य विलपनानि वचनानि च । ८९–१०८ वराङ्गवचनश्रवणेन देवीनां प्रव्रजनम् ।

## सर्गः २९

१–९ वराङ्गं वैराग्यान्निवर्तयितुं उपदेशः । १०–३० तपश्चर्याया अयमेव काल इति वराङ्गस्य प्रत्युत्तरेण पितुः प्रबोधनम् । ३१–४२ सुगात्राय वराङ्गस्योपदेशवचनानि । ४३–४८ सुगात्रस्य राज्याभिषेकवर्णनम् । ४९–५५ जिनपूजानन्तरं शिबिकायां वराङ्गस्य परिनिष्क्रमणम् । ५६–७२ पौरजनानां निन्दास्तुतयः । ७३–९९ वराङ्गस्य सहपरिवारस्य वरदत्तमुनेः सन्निधौ प्रव्रजनं तपश्चरणं च ।

## सर्गः ३०

१–९ जीवादिविवेचनात्मको मुनेरुपदेशः । १०–२५ वराङ्गस्य कषायादिविजयवर्णनम् । २६–७५ तस्य विहारवसतिव्रतध्यानयात्रोपवासभिक्षालब्ध्यादिवर्णनम् ।

## सर्गः ३१

१–१५ वराङ्गपत्नीनां तपोवर्णनम् । १६–१९ वराङ्गस्य महाव्रतग्रहणं स्वाध्यायादितपश्चरणं च । २०-४३ तस्य रत्नत्रयाराधनकषायविजयेन्द्रियसंयमादि-

वर्णनम् । ४४–५५ तस्य विहारवसतियोगप्रतिमादिवर्णनम् । ५६–६७ आलोचनावन्दनादिपूर्वकं प्रायोपयानग्रहणं चतुर्विधाराधनासेवनं च । ६८–७४ सम्यक्त्वशुद्धिर्विविधतपश्चरणानि च । ७५–८० पञ्चमहाव्रतानि तेषां पञ्चविंशतिभावनाश्च । ८१–८५ व्रतसमितिगुप्त्यादिपालनम् । ८६–९८ द्वादशानुप्रेक्षाः । ९९–१०८ ध्यानप्रस्तावे वराङ्गस्य आत्मतत्त्वचिन्तनं शुक्लध्यानं च । १०९–११३ वराङ्गस्य निर्वाणप्राप्तिरन्येषां सुरलोकादिगमनम् । ११४–११५ उपसंहारः ।

## [ प्रथमः सर्गः ]

अर्हंस्त्रिलोकमहितो हितकृत्प्रजानां
धर्मोऽर्हतो भगवतस्त्रिजगच्छरण्यः ।
ज्ञानं च यस्य सचराचरभावदर्शि
रत्नत्रयं तदहमप्रतिमं नमामि ॥ १

येनेह मोहतरुमूलमभेद्यमन्यै-
रुत्पाटितं निरवशेषमनादिबद्धम् ।
यस्यर्द्धयस्त्रिभुवनातिशयास्त्रिधोक्ताः
सोऽर्हञ्जयत्यमितमोक्षसुखोपदेशी ॥ २

प्राप्येत येन नृसुरासुरभोगभारो
नानातपोगुणसमुन्नतलब्धयश्च ।
पश्चादतीन्द्रियसुखं शिवमप्रमेयं
धर्मो जयत्यवितथः स जिनप्रणीतः ॥ ३

ज्ञानेन येन जिनवक्त्रविनिर्गतेन
त्रैलोक्यभूतगुणपर्ययसत्पदार्थाः ।
ज्ञाताः पुनर्युगपदेव हि सप्रपञ्चं
जैनं जयत्यनुपमं तदनन्तरं तत् ॥ ४

अर्हन्मुखागतमिदं गणदेवदृष्टं
सद्धर्ममार्गचरितं परया विशुद्ध्या ।
संशृण्वतः कथयतः स्मरतश्च नित्य-
मेकान्ततो भवति पुण्यसमग्रलम्भः ॥ ५

---

१ क श्रीमदादिब्रह्मणे नमः । निर्विघ्नमस्तु ।, ख श्रीवासुपूज्याय नमः ।.

द्रव्यं फलं प्रकृतमेव हि सप्रभेदं
क्षेत्रं च तीर्थमथ कालविभागभावौ[1] ।
अङ्गानि सप्त कथयन्ति कथाप्रबन्धे
तैः संयुता भवति युक्तिमती कथा सा ॥ ६

द्रव्याणि षड् भगवताभिहितानि तानि
क्षेत्रं तथा त्रिभुवनं विविधश्च[2] कालः ।
तीर्थं जिनेन्द्रचरितं प्रकृतं हि वस्तु
ज्ञानक्षयोपशमजौ फलभावकल्पौ[3] ॥ ७

धातुः स काञ्चनमयः क्रियया विहीनः
कालान्तरादपि न याति सुवर्णभावम् ।
एवं जगत्यमितभव्यजनाश्चिरेण
नालं भवाद् व्रजितुमत्र विनोपदेशात् ॥ ८

दीपं विना नयनवानपि संदिदृक्षु-
र्द्रव्यं यथा घटपटादि न पश्यतीह ।
जिज्ञासुरुत्तममतिर्गुणवांस्तथैव
वक्त्रा विना हितपथं निखिलं न वेत्ति ॥ ९

सर्वज्ञभाषितमहार्णव[4]धौतबुद्धिः
स्पष्टेन्द्रियः स्थिरमतिर्मितवाङ्मनोज्ञः ।
मृष्टाक्षरो जितसभः प्रगृहीतवाक्यो
वक्तुं कथां प्रभवति प्रतिभादियुक्तः ॥ १०

---

१ म °विभागभागा. २ [ त्रिविधश्च ]. ३ भ °शमजा‥कल्पा. ४ म महार्णव.

सत्कारमैत्र्यवनभैषजसंश्रयादी-
न्वक्ताऽनपेक्ष्य जगतां[1]त्युपकारहेतुम् ।
निष्केवलं हितप[2]थं प्रवदन्वदान्यः
श्रोतात्मनोरुपचिनोति फलं विशालम् ॥ ११
जन्मार्णवं कथमयं तरतीति योऽत्र
संभावयत्यतुलधीर्मनसा दयालुः ।
संसारघोरभयदुःखमनादिवद्धं
तस्य क्षयं व्रजति साध्विति वर्णयन्ति ॥ १२
श्रेयोऽर्थिना हि जिनशासनवत्सलेन
कर्तव्य एव नियमेन हितोपदेशः ।
मोक्षार्थिना श्रवणधारणसत्क्रियार्था
योज्यास्तु ते मतिमता सततं यथावत् ॥ १३
शुश्रूषताश्रवणसंग्रहधारणानि
विज्ञानमूहनमपोहनमर्थतत्त्वम् ।
धर्मश्रवार्थिषु सुखाभिमुखे[3]न नित्य-
मष्टौ गुणान्खलु विशिष्टतमा वदन्ति ॥ १४
मृत्सारिणीमहिषहंसशुकस्वभावा
मार्जारकङ्कमशकाजजलूकसाम्याः ।
सच्छिद्रकुम्भपशुसर्पशिलोपमाना-
स्ते श्रावका भुवि चतुर्दशधा भवन्ति ॥ १५
श्रोता न चैहिकफलं प्रतिलिप्समानो
निःश्रेयसाय मतिमांश्च मतिं विधाय ।

१ [ जगदत्युपकारहेतुम् ]. २ क हितपदं. ३ म सुखादिमुखेन.

यः संश्रृणोति जिनधर्मकथामुदारां
पापं प्रणाशमुपयाति नरस्य तस्य ॥ १६
प्राज्ञस्य हेतुनयसूक्ष्मतरान्पदार्थान्
मूर्खस्य बुद्धिविनयं[1] च तपःफलानि ।
दुःखार्दितस्य जनबन्धुवियोगहेतुं
निर्वेदकारणमशौचमशाश्वतस्य ॥ १७
लुब्धस्य शीलमधनस्य फलं व्रतानां
दानं क्षमा च धनिनो विषयोन्मुखस्य ।
सद्दर्शनं व्यसनिनो जिनपूजनं च
श्रोतुर्वशेन कथयेत्कथको विधिज्ञः[2] ॥ १८
संसारसागरतरङ्गनिमग्नजीवान्
सज्ज्ञाननावमधिरोप्य सुखेन नीत्वा ।
सद्धर्मपत्तनमनन्तसुखाकरं यत्
तत्प्रापयन्ति गुरवो विदितार्थतत्त्वाः ॥ १९
जन्माटवीषु कुटिलासु विनष्टमार्गान्
येऽत्यन्तनिर्वृतिपथं प्रतिबोधयन्ति ।
तेभ्योऽधिकः प्रियतमो वसुधातलेऽस्मिन्
कोऽन्योऽस्ति बन्धुरपरः परिगण्यमानः ॥ २०
राज्यार्धराज्यपृथुचक्रधरोरुभोगान्
भौमेन्द्रकल्पपतिनामहमिन्द्रसौख्यम् ।
क्लेशक्षयोद्भवमनन्तसुखं च मोक्षं
संप्राप्नुवन्ति मनुजा गुरुसंश्रयेण ॥ २१

---

१ म विनयश्च. २ म कथकोविदज्ञः.

तेभ्यो नमः प्रयतकायमनोवचोभिः
कृत्वा जगत्त्रयविभूतिशिवंकरेभ्यः ।
धर्मार्थकामसहितां जगति प्रवृत्तां
वक्ष्ये कथां शृणुत मोक्षफलावसानाम् ॥ २२
आसीद्दिवो निजगुणैर्ह्रियमादधानः
पुंसां समुन्नतधियां स निवासभूमिः ।
भोगाश्रियः[1] कुरुभुवः प्रतिबिम्बभूतो
नाम्ना विनीतविषयः ककुदं पृथिव्याम् ॥ २३
लोकस्य सारमखिलं निपुणो[2] विचिन्त्य
सत्संनिवासभुवनैकमनोरथेन ।
यं निर्ममे स्वयमुदाहृतरत्नसारं
धर्मार्थकामनियमाच्च निधिं विधाता ॥ २४
यस्मिन्दिशश्च रहितालि[3] विपिञ्जराभा
यन्नार्त[4] इक्षुवनपीलितदुःप्रचाराः (?) ।
रक्तोत्पलामलदलैरुपहारितास्ते
कालागरुप्रततधूपवहाश्च गेहाः ॥ २५
यस्मिन्वनानि फलपुष्पनताग्रशाखा-
विभ्राजितानिलविकम्पिमहीरुहाणि ।
स्वाद्वम्बुकोमलतृणानि दिवा निशीथे
घोषाः प्रतिध्वनितमन्द्रगुणा गुणाढ्याः ॥ २६
सन्तो नरा युवतयश्च विदग्धवेषा
रागोत्तरासु सकलासु कलास्वनाद्याः ।

---

१ म भोगश्रिया. २ [ निपुणं ]. ३ [ हरिताल° ]. ४ [ पन्थान ].

अन्योन्यरञ्जनपराः सततोत्सवाश्च
सौख्येन किन्नरगणानतिशाययन्ति ॥ २७
देशान्विहाय हि पुराध्युषितान्कलज्ज्ञाः[1]
शिल्पावदातमतयश्च नटा विटाश्च ।
रङ्गोपजीवनपराः पुरुषाः स्त्रियश्च
यस्मिन्पुनर्बहुविशेषगुणा वसन्ति ॥ २८
रत्नोपलाग्रपरिचुम्बितमेघमालो
नानादरीमुखविनिःसृतनिर्झरौघः ।
सौम्याचलः फणिमणिक्षपितान्धकार-
स्तस्मिन्बभूव हिमवानिव तुङ्गकूटः ॥ २९
यस्मिन्सदा गरुडकिन्नरपन्नगानां
गन्धर्वसिद्धतुषितामरचारणानाम् ।
आक्रीडनानि विविधानि मनोहराणि
सोद्यानकाननगुहागहनेष्वभूवन् ॥ ३०
तस्मात्पतङ्गजे[2]विषाणविपाटितोरु-
पाषाणगह्वरविजृम्भितपन्नगेन्द्रान्[3] ।
कादम्बसारसगणैरुपसेव्यमाना
रम्या नदी प्रभवति प्रथिता धरायाम् ॥ ३१
वाताहतद्रुमपतत्कुसुमोपहारे
मत्तभ्रमद्भ्रमरगीतरवाभिधाने ।
तस्यास्तु दक्षिणतटे समभूमिभागे
रम्यातटं पुरमभूद्भुवि विश्रुतं तत् ॥ ३२

१ [ कलाज्ञाः ]. २ [ तस्मान्मतंगज° ]. ३ [ पन्नगेन्द्रात् ].

रम्यानदीतटसमीपसमुद्भवत्वाद्
   रम्यातटं जगति रम्यं[1] हि नाम रूढम् ।
तस्यैव नाम कृतवृद्धिगुणान्[2]समीक्ष्य
   अन्वर्थमुत्तमपुरं पटुभिर्द्वितीयम् ॥ ३३

अभ्यन्तरस्य नगरस्य वहिःप्रदेशः
   कान्तो यतो भवति कान्तपुरं तदेव ।
पद्मालया सततमारमतीति यस्मा-
   ल्लक्ष्मीपुरं बुधजनैः कथितं पुरं तत् ॥ ३४

उद्यानपर्वतवनान्तरितप्रदेशै-
   र्वापीतडागवरपुष्करिणीह्रदैश्च ।
दिग्देवदेवगृहरम्यसभाप्रपाभि-[3]
   र्बाह्यं पुरः परपुरश्रियमादधार ॥ ३५

आवेष्ट्य तत्पुरवरं परिखाऽवतस्थे
   द्वीपं यथा जलनिधिर्लवणाम्बुगर्भः ।
माहीमयोऽभ्युदितशैलसमानशालः
   प्रोद्भिद्य भूतलमिवाभ्यधिकं रराज ॥ ३६

प्रासादकूटवलभीतटगोपुरैः स्वै-
   रत्युच्छ्रितध्वजविचित्रचलत्पताकैः ।
आरामकल्पतरुगुल्मलताप्रतानै
   रुद्धातपं पुरमभूद्गिरिभित्तिभिश्च ॥ ३७

संगीतगीतकरतालमुखप्रलापै-
   र्वीणामृदङ्गमुरजध्वनिमुद्गिराद्भिः ।

---

१ [ यस्य ]. २ [ कृतवृद्धिगुणान् ]. ३ म °प्रभाभि.

हर्म्यैरनेकपरिवर्धितभूमिदेशै
　विन्यस्तचित्रबलिभिः सततं रराज ॥ ३८

भूशैलतोयविविधाकरजातपर्ण्यं[1]
　मुक्ताप्रवालतपनीयमनेकभेदम् ।
यद्यच्च दुर्लभतमं परराजधान्यां
　तस्मिन्पुरे प्रतिवसत्सुलभं च वस्तु ॥ ३९

न्यायार्जितद्रविणनैककुटुम्बपूर्णं
　सर्वर्तुसौख्यसहितं परमर्द्धियुक्तम् ।
उद्घाटितापणमुखेषु निरन्तरेषु
　नक्तं दिवं क्रयपरिक्रयसक्तमर्त्यम् ॥ ४०

नैकप्रकारमहिमोत्सवचैत्यपूजा-
　दानाक्रियास्नपनपुण्यविवाहसंगः ।
अन्योन्यगेहगमनागमनो जनौघ-
　स्तस्मिन्पुरे प्रतिदिनं ववृधे यथावत् ॥ ४१

शब्दार्थहेतुगणितादिविशेषयुक्ता
　ज्ञानप्रभावितिमिरीकृ[2]तधीमनस्काः ।
सद्धर्मशास्त्रकुशलाः सुलभा मनुष्या
　यत्रारराजुरधिकं सततप्रमोदाः ॥ ४२

वृद्धाः समेषु तरुणाश्च गुरूपदेशे
　वेश्याङ्गनाः[3] सुललिताः समदा युवानः ।

१ क °पुण्यं. २ क °प्रभावितमिरी°, म °प्रभावातिमिरी°. ३ [ वेश्याङ्गनासु ललिताः ].

त्यागेष्वथार्जितधनाः प्रमदाः प्रियेषु
वस्त्वन्तरे रतिमुपेयुरथानुरूपम् ॥ ४३
पाषण्डशिल्पिबहुवर्णजनातिकीर्णं
रत्नापगाजलनिधिः सुरलोककल्पम्[1] ।
प्रज्ञातिमुग्धधनिनिर्धनसज्जनेष्टं
चोरारिमारिपरचक्रकथा न तत्र ॥ ४४
नीरोगशोकनिरुपद्रवनिर्भयत्वा-
दस्मिञ्जनः सुरसुखं मनसाऽवमेने[2] ।
किं वा पुरस्य बहुवर्णनया नराणा-
मिष्टेन्द्रियार्थपरिभोगसुखावहस्य ॥ ४५
तस्येश्वरः प्रथितभोजकुलप्रसूतो
धर्मार्थकामनिपुणो विनिगूढमन्त्रः ।
न्यायेन लोकपरिपालनसक्तबुद्धिः
श्रीधर्मसेन इति भूपतिरास नाम्ना ॥ ४६
यः कामिनीजनमनोहरचारुमूर्ति-
र्नैकाबहप्रथितलब्धविशुद्धकीर्तिः ।
शक्तित्रयप्रतिविशेषहतप्रजार्तिः
शास्त्रोपदिष्टवचसाऽप्रतिमानवृत्तिः ॥ ४७
श्रीमान्प्रभिन्नकटवारणतुल्यगामी
रक्ताम्बुजच्छविहरामलपाणिपादः ।
आख्यायिकागणितकाव्यरसाद्यभिज्ञो
नित्यं पराभिगमनीयगुणावतंसः ॥ ४८

---

१ म जलनिधेः सुरलोकजल्पनू. २ म नीराग...निर्भयत्वान्दास्मिन्.

वृद्धोपसेवनरतिर्दृढसौहृदश्च
त्यक्तप्रमादमदमत्सरमोहभावः ।
सत्संग्रहः स्थिरसखः प्रियवागलोभः
प्रागल्भ्यदाक्ष्यसहितो हितबन्धुवर्गः ॥ ४९
रूपेण काममथ नीतिबलेन शुक्रं
कान्त्या शशाङ्कममरेन्द्रमुदारकीर्त्या ।
दीप्त्या दिवाकरमगाधतया समुद्रं
दण्डेन दण्डधरमप्यतिशिश्य एव ॥ ५०
यस्याज्ञया स्वपथमुत्क्रमितुं न शेकु-
र्वर्णाश्रमा जनपदे सकले पुरे वा ।
पाषण्डिनः स्वसमयोपविनीतमार्गाः
सोऽतीव बालबुधवृद्धतमान्वभार ॥ ५१
यस्याहितं प्रकुरुते मनसापि कश्चित्
किंचित्कचित्पुरुपमर्थमनर्थकं वा ।
क्षुत्क्षीणभुग्ननयनोदरवक्त्रदण्डः
स्थातुं हि तस्य विपये न शशाक मर्त्यः ॥ ५२
युद्धेषु भिन्नकटवारणगण्डलेखा-
संप्रस्रुतैः शमितधूलिपु दानतोयैः ।
वाक्येषु बृंहितमदान्प्रतियोद्धुकामान्
यः सद्य एव हि रिपून्विमदीचकार ॥ ५३
चेतांसि बद्धदृढवैरवतां नराणा-
मभ्यन्तरप्रकृतिकस्य जनस्य वापि ।

१ म युक्तं. २ [ °परुप° ].

स्वाभाविकैर्विनयजैश्चरितैरुदारै-
र्योऽरञ्जयद् भृशमथ स्वगुणैर्नरेन्द्रः ॥ ५४
ताराधिपः कुमुदषण्ड[1]विकासदक्षैः
शीतैः करैर्नभसि संविवभौ यथैव ।
नित्यं प्रियाकुमुदषण्डवचोमयूखै-
र्मह्यां तथैव वसुधाधिपपूर्णचन्द्रः ॥ ५५
आफुल्लचारुविमलाम्बुरुहाननस्य
आजानुलम्बपरिपीनभुजद्वयस्य ।
श्रीवक्षसः खलु मृगेन्द्रपराक्रमस्य
स्वान्तःपुरं पुरपतेस्त्रिशतीवभूव ॥ ५६
युक्ताधिरोहपरिणा[2]हसमन्विताङ्ग्यो
हंसीस्वनाः सुगमनग्रहणस्वभावाः ।
लज्जावपूर्विनयाविभ्रमचारुवेषा-
स्तुल्यावलोकननिरन्तरसौहृदाश्च ॥ ५७
फुल्लारविन्दवदना वरचारुनेत्राः
फुल्लारविन्दकुसुमोरुशुचित्वगन्धाः ।
फुल्लारविन्दवरकान्तिगुणावदाताः
फुल्लारविन्दवरकोमलपाणिपादाः ॥ ५८
सर्वाः स्त्रियः प्रथमयौवनगर्ववन्त्यः
सर्वाः स्वमातृपितृगोत्रविशुद्धवन्त्यः ।
सर्वाः कलागुणविधानविशेषदक्षाः
सर्वा यथेष्टमुपभोगपरीप्सयिन्त्यः ॥ ५९

---

१ म कुमुदखण्ड. २ क 'परिणाम'.

चातुर्यहावगतिविभ्रमसत्क्रियाभी
रूपेण ता द्युतिमतातिमनोहरेण।
सत्यन्तरे समनुकूलतयानुभूय
राज्ञो मनस्यधिगता वनितास्तदासन् ॥ ६०

हासेन वा मधुमदेन सगर्वितेन
रागेण वाथ कलुषीकृतचेतसा वा।
अन्योन्यमर्मपरिहासकथाभिरामा
राज्ञः स्त्रियस्त्विति कथा न वभूव लोके ॥ ६१

धर्मप्रियस्य रतिनीतिविशारदस्य
सामान्यदृष्ट्यभिनिवि[ष्ट ⏑-⏑] तायात् ?
नात्युद्धताः सम[2]मुखाः पतिवत्सलाश्च
शीलानुरक्तहृदया वनिता विनीताः ॥ ६२

तासु क्षितीन्द्रहृदयप्रियकारिणीषु
माधुर्यकान्तिललितप्रतिभान्वितासु।
रेजे भृशं गुणवती क्षितिपाङ्गनासु
तारागणेषु विमलेष्विव चन्द्रलेखा ॥ ६३

शुद्धान्वया रुचिरभूषणभूषिताङ्गी
[1]कामेकभारवतिकर्कशजातरागा (?)।
स्निग्धा हिता शुचिमती मितवाक्सुदक्षा
भूमीश्वरस्य हृदयं स्वगुणैर्ववन्ध ॥ ६४

या धर्मसेननयनामृतरूपशोभा
तस्मै वचःश्रवणपथ्यहितानुवाक्या।

---

१ [ कामैकभारपति॰ ]. २ [ समसुखाः ].

तद्गात्रचित्तरतिकारणवेषचेष्टा
तेनाभवत्सुरतनाटकनायिका सा ॥ ६५

तस्यास्तदाङ्गममलेन्दु[1]निभाननायाः
पीनोन्नतस्तनतटार्पितचन्दनायाः ।
आश्लिष्य कामशरताडनविह्वलायाः
प्रीतिं परामुपजगाम पतिर्धरायाः ॥ ६६

सा चापि तस्य वदनं नयनातिकान्त-
माकृष्य सीधुरसिना वदनाम्बुजेन ।
भूयश्चुचुम्ब मदनातुरमन्दचेष्टा-
पूर्वं प्रियव्रणितपाटलविभ्रमोष्ठी ॥ ६७

ताभ्यां यथेष्टमभिसंहितमन्मथाभ्यां
तुल्यानुरागरतिवर्धनसत्क्रियाभ्याम् ।
अन्योन्यचित्तपरिपोषणतत्पराभ्यां
प्राप्तं नृजन्मचिरजीवितयोः फलं तत् ॥ ६८

अनुपरतमृदङ्गमन्द्रनादे
मणिकिरणैरवभासितान्धकारे ।
षड्ऋतुसुखगृहे विशालकीर्ति-
र्वरवनिताभिररंस्त राजसिंहः ॥ ६९

इति नगरनरेन्द्र·[ –˘ ] भार्याः
प्रथमतरं कथिताः कथाप्रबन्धात् ।

---

१ म °मनलेन्दु°.

श्रुतिपथसुखदं निगद्यमानं
ततं उपरि प्रकृतं निशामयध्वम् ॥ ७०

इति धर्मकथोद्देशो चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
जनपदनगरनृपतिनृपपत्नीवर्णनो नाम
प्रथमः सर्गः

---

## [ द्वितीयः सर्गः ]

धर्मेण संप्राप्तमनोरथस्य श्रीधर्मसेनस्य नरेश्वरस्य ।
प्रियाङ्गनायां स वराङ्गनामा जज्ञे कुमारो गुणपूर्वदेव्याम् ॥ १
यस्मिन्प्रसूतेऽभिननन्द राष्ट्रं पितुश्च मातुर्ववृधे प्रहर्षः ।
भयं रिपूणामभवत्तदैव दुद्राव शोकः स्वजनस्य तस्य ॥ २
अन्योन्यहस्तैः प्रतिनीयमानो बालेन्दुवद् वृद्धिमुपाजगाम ।
कलाप्रलापं[1] वदनारविन्दं संप्रेक्ष्य भूपो न ततर्प लोकः ॥ ३
अनेकसल्लक्षणलक्षिताङ्गः प्रतापकान्तिद्युतिवीर्ययुक्तः ।
विद्वत्सहायो मतिमान् दयालुः प्रजाहितार्थाय कृतप्रयासः ॥ ४
देवेषु पूजां गुरुषु प्रणामं पराक्रमं शत्रुषु सत्सु मैत्रीम् ।
पात्रेषु दानं च दयां प्रजासु विद्यासु रागं सततं चकार ॥ ५
शब्दार्थगन्धर्वकलालिपिज्ञो हस्त्यश्वशास्त्राभ्यसनप्रसक्तः ।
व्यपेतमायामदमानलोभस्तत्याज सप्त व्यसनानि धीमान् ॥ ६
कदाचिदभ्यस्य गजाश्वशास्त्रमृद्ध्या महत्या नगरीं प्रविश्य ।
प्रणम्य भक्त्या पितरौ यथावत्तस्थौ पुरस्ताद्विनयानताङ्गः ॥ ७

---

१ [ कलप्रलापं ].

समीक्ष्य तौ पुत्रगुणानुदारान् रूपं वपुस्तन्नवयौवनं च ।
[1]काचिद्भवेदस्य समानरूपा वपुष्मतीति स्मरतः स सद्मः ॥ ८
[2]तस्मिन्स्वकाले स्वयमेव कश्चिच्छ्रेष्ठी पुरस्यास्य कुमारभक्त्या ।
अतर्कितोपस्थितजातरागः समाहितात्मेत्थमुवाच वाचम् ॥ ९
कुलेन शीलेन पराक्रमेण ज्ञानेन धर्मेण नयेन चापि ।
समृद्धपुर्याः पतिरुत्तमश्रीर्भवत्समानो धृतिषेणराजा[3] ॥ १०
अतुल्यनामा (?) किल तस्य भार्या विशालवंशा वरधर्ममूर्तिः ।
तयोः सुता कीर्तिगुणोपपन्ना बभूव नाम्नानुपमा विनीता ॥ ११
विभूषणानामतिभूषणेन विरूपतामानवयौवनेन[4] ।
किमत्र तद्वर्णनयातिमात्रं सा देवकन्या स्वयमागतेव ॥ १२
श्रुत्वा वचस्तस्य वणिक्तमस्य सोऽत्यर्थमर्थानुगतं मनोज्ञम् ।
तं पूजयित्वा विधिवत्ततस्तां स्वां मन्त्रशालां पुनराविवेश ॥ १३
ते मन्त्रिमुख्या विदितार्थतत्त्वा अनन्ताचित्राजितदेवसाह्वाः[5] ।
आहूतमात्रा वसुधेश्वरेण यथाविधस्थानमुपोपविष्टाः ॥ १४
सत्कृत्य तान्स्मेरमुखः स राजा प्रोवाच वाचं मधुरार्थगर्भाम् ।
आपूर्यते यौवनमात्मसूनोः कृष्णेतरे पक्ष इवेन्दुबिम्बम् ॥ १५
व्यायामविद्यासु कृतप्रयोगो [6]नीतौ [7]कृती सर्वकलाविधिज्ञः ।
वृद्धोपसेवाभिरतिर्हितात्मा सुबुद्धिमान् पौरुषवान्कुमारः ॥ १६
संभाव्यरूपः स्वगुणैर्महीनः पुष्पैः फलानामिव जन्मवेत्ता ।
रूपश्रियानङ्ग इव द्वितीयस्तदस्य चिन्त्यं खलु दारकर्म ॥ १७

---

१ म काचिद्भवेदप्यसमान° २ [ तस्मिंश्च काले ]. ३ [ धृतिषेणराजः ]. ४ [ विरूपताया नव° ]. ५ म अनन्ताचित्रांजित°, [ °धीवराह्वाः ]. ६ म नीतौ. ७ म कृतिः.

श्रुत्वा वचस्तस्य नराधिपस्य ते मन्त्रिणो राजसुतानुरक्ताः ।
प्रीत्या नरेन्द्रं प्रशशंसुरुच्चैः[1] समञ्जसं साधु वचस्तवेति ॥ १८
तेषां पुरस्तात्स्वमनोगतार्थं राज्ञे तदा व्याहृतवाननन्तः ।
अन्या न तुल्याभिजनानुरूपां तां देवसेन्यां[2] प्रविहाय कन्याम् ॥१९
वैवाहिकी नः कुलसंततिः सा स्थिरा च मैत्री ननु मातुलत्वात् ।
तस्मादहं योग्यतया तयाशु सुनन्दयेच्छामि विवाहकर्म ॥ २०
श्रुत्वा ततोऽनन्तवचोऽजितस्तु जगाद वाक्यं पुनरन्यदेव ।
यत्प्रोक्तमेतेन वचस्तदस्मान्न प्रीणयत्येवमयुक्तिमत्त्वात् ॥ २१
जनस्य सर्वस्य हि भर्तृबन्धुः स्वाभाविकं मित्रमकृत्रिमत्वात् ।
यत्कृत्रिमं स्यात्फलवच्च मित्रमुदारमेतत्करणीयमस्य ॥ २२
वचोऽजितेनाभिहितं निशम्य स चित्रसेनो गिरमित्युवाच ।
को देवसेनादितरः पृथिव्यां नरेश्वरः पक्षबलर्द्धिमान्स्यात् ॥ २३
असंहितं प्राक्कुलमुत्तमं च संधित्स्यमानं बलिना परेण ।
नोपैति विश्रम्भमुपैति शङ्कां प्रयोजने विक्रियते च भूयः ॥ २४
न सा सुनन्दा परिणीयते चेत्स्यान्मित्रभेदः स हि दोषमूलः ।
यस्यापचारेण च यान्ति मित्राण्यमित्रतां[3] वै न तु कार्यवित्सः ॥ २५
तां चित्रसेनाभिहितां विचित्रां वाणीं निशम्योत्तमधीश्चतुर्थः ।
प्रत्यब्रवीन्नीतिमतानुसारी वचोऽर्थसंपत्तिगुरुत्वबुद्ध्या ॥ २६
अभूतपूर्वोत्तमसौहृदस्य बलीयसस्तुल्यबलेन योगे ।
दोषा यतस्तेन खलूपदिष्टास्ते दूरनष्टा नयमार्गवृत्त्या ॥ २७
दारेषु मातर्यथ भृत्यवर्गे सुते पितर्यन्यतमे जने वा ।
विश्रम्भयोगो न तु तादृशः स्याद्यादृग्दृढे मित्र उदारबुद्धौ ॥ २८

१ क प्रशशेकुरुच्चैः. २ [ देवसेनां ]. ३ क अमन्त्रतां.

मित्रं वलीयः स्वनुरागि पुंसामलभ्यमन्यत्र हि दैवयोगात् ।
तल्लभ्यते चेद्बलिना समग्रा वसुन्धरा हस्तगतैव तस्य ॥ २९

विरक्तभृत्यान्यतिदीर्घसूत्राण्यल्पानि मित्राण्यतिदूरगानि ।
संवन्धमात्राभिनिविष्टबुद्धेः कियच्चिरं[1] तस्य नृपस्य राज्यम् ॥ ३०

अष्टाविमे भूपतयः प्रधाना धर्मार्थषड्भागभुजः[2] पृथिव्याम् ।
यैर्भ्राजते संनिहितैर्धरित्री द्यौरष्टभिस्तैरिव दिग्गजेन्द्रैः ॥ ३१

महीमहेन्द्रोऽथ महेन्द्रदत्तो द्विषंतपश्चापि यथार्थनामा ।
सनत्कुमारो मकरध्वजोऽपि समुद्रगुप्तो विनयंधरश्च[3] ॥ ३२

वज्रायुधश्चक्रभृता समानः पराक्रमैश्वर्यवपुर्गुणेन ।
मित्रंसहश्चापि हि देवसेनात्किं वाधिकास्ते न भवेयुरीशाः ॥ ३३
वचांसि तेषां स निशम्य राजा स्वतर्किताक्रान्तविजृम्भितानि ।
प्रशस्य तान् राज्यधुरंधरांश्च वैदेहकोक्तं पुनराचचक्षे ॥ ३४
ते चापि राज्ञां समुदीरितार्थां गिरं निशम्यानुमतिं प्रकृत्यै[4] ।
विवाहतन्त्राविकृतान्सलेखान्प्रत्येकशो दूतवरान्ससर्ज (?) ॥ ३५
तेषामथैको गुणवांस्तु दूतः पतिं समासाद्य समृद्धपुर्याः ।
प्रदर्श्य लेखं प्रियवाक्यगर्भं व्यजिज्ञपद्वाचिकमर्थयुक्तम् ॥ ३६
निशाम्य लेखं च वचो निशम्य मुदाब्रवीत्तच्च तथेति राजा ।
विज्ञाय वागिङ्गितदानमानैः स्वकार्यसिद्धौ मतिमादधे सः ॥ ३७
ततो नृपेणाप्रतिपौरुषेण वचोहरः सामयुतैर्वचोभिः ।
विसर्जितः साधु कृतात्मकृत्यो येनागतस्तेन पथा निवृत्तः ॥ ३८

---

१ म कियच्चरं. २ म धर्मार्थि. ३ म विनयंवरश्च. ४ म प्रकृत्वा.

दूताः परे तेऽपि च संनिवृत्ताः पतिः स्वमारोपितकार्यभाराः[1] ।
राज्ञे समूचुः स्वमतप्रसिद्धिं[2] प्रमोदपूर्वां गमनप्रतीक्ष्णाम्[3] ॥ ३९
प्रत्यागतानां स वचोहराणां निशम्य वाणीं च समीक्ष्य लेखम् ।
स्वान्मन्त्रिणो मन्त्रविनिश्चयज्ञान् शशास राजा धृतिषेणपार्श्वम् ४०
तैः संव्रजद्भिर्बहुबन्धुमित्रैः सहैव याता नरदेवसेना ।
बभौ चतुर्भिर्नृपमन्त्रिमुख्यैः सुरेन्द्रसेनेव च लोकपालैः ॥ ४१
व्यतीत्य देशान्बहुरत्नकोशं पुरं समासाद्य गुणप्रकाशम् ।
विलोकमाना विविशुर्विभूत्या विलोक्यमानास्त्वथ पौरवर्गैः ॥ ४२
संप्राप्य राजालयमुत्तमर्द्धौ सामन्तसेनानिचितान्तरालम् ।
तद्द्वारपालैरुपनीयमानाः सिंहासनस्थं ददृशुर्नरेन्द्रम्[4] ॥ ४३
अभ्यागतानाप्ततमान्विलोक्य वाग्दानमानैरभिपूज्य सम्यक् ।
नराधिपः प्रश्नकुतूहलेन पप्रच्छ तान्प्राग्विदितार्थतत्त्वः ॥ ४४
श्रीधर्मसेनेन यथोपदिष्टाः पृष्टाः पुनस्ते धृतिषेणनाम्ना ।
सामप्रयोगैरुपनीतमर्थं[5] स्वकार्यसिद्ध्यर्थममुं समूचुः ॥ ४५
नृपोत्तमः शान्तरिपुर्जितात्मा वयोऽधिकस्तुल्यतमः कुलेन ।
श्रीधर्मसेनो धृतराजवृत्तः स सादरः कौशलमाचचक्षे ॥ ४६
तस्यात्मजः कान्ततमः प्रजानामुदारवृत्तः शुचिमान्नयज्ञः ।
जामातृतां प्राप्तुमनाः कुमारो महीपते ते चरणौ ननाम ॥ ४७
तेषां वचो वाक्यविदां निशम्य समर्थ्य सम्यङ्नृपतिस्तदानीम् ।
संचिन्त्य कन्यावयसस्समाप्तिं तेभ्योऽनुमत्यै[6]वमवोचदित्थम् ॥४८

१ [ पत्या समारोपित° ]. २ म स्वमतप्रसिद्धं. ३ [ गमनप्रतीक्षाम् ]. ४ क नृपेन्द्रम्. ५ [ संमथ्य ]. ६ क अनुमित्येवम्.

कन्यापि तेनैव समानकल्पा कलागुणैश्चापि वयोवपुर्भ्याम् ।
स चापि तस्या यदि युक्तरूपः किमन्यदिष्येत तयोर्नृलोके ॥ ४९

इत्येवमुक्त्वा नृपतिः सहर्षो दित्सुः सुतामुत्पलपत्रनेत्राम् ।
पुरोहितामात्यसमान्विदग्धानाह्वाययाह्वार्यविदो[1] बभूव ॥ ५०

समेत्य तैर्मन्त्रितमन्त्रिभिश्च कन्याप्रदानं प्रति निश्चितार्थः ।
यथाधिकाराधिकृतान्स भृत्यान् शशास कल्याणमहोत्सवाय ॥५१

कृत्वा स कल्याणविधिं विधिज्ञो दरिद्रदीनेषु धनं विसृज्य ।
स्वया विभूत्या परया नरेन्द्रः कन्यां पुरस्कृत्य मुदा प्रतस्थे ॥ ५२

जलप्रभाभिः कृतभूमिभागां प्राचीनदेशोपहितप्रवालाम् ।
सर्वार्जुनोपात्तकपोतपालीं वैडूर्यसव्यानवतीं परार्ध्याम् ॥ ५३

हेमोत्तमस्तम्भवृतां विशालां महेन्द्रनीलप्रतिबद्धकुम्भाम् ।
तां पद्मरागोपगृहीतकण्ठां विशुद्धरूपोन्नतचारुकूटाम् ॥ ५४

द्विजातिवक्त्रोद्गलितप्रलम्बधां[2] मुक्ताकलापच्छुरितान्तरालाम् ।
मन्दानिलाकम्पिचलत्पताकामात्मप्रभाह्वेपितसूर्यभासम् ॥ ५५

नानाप्रकारोज्ज्वलरत्नदण्डां विलासिनीधारितचामराह्वाम्[3] ।
आरुह्य[4] कन्यां शिबिकां पृथुश्रीः पुरीं विवेशोत्तमनामधेयाम् ॥ ५६

श्रीधर्मसेनप्रहितैश्च दूतैर्निवेदिताः प्रागवनीन्द्रचन्द्राः ।
आकृष्यमाणास्तु वराङ्गपुण्यैः प्रतस्थिरे स्वाभिरमा सुताभिः ॥५७

सुवर्णकक्षोपहितान् गजेन्द्रान् रथांश्च नानाकृतिचित्रवर्णान्[5] ।
सचामरापीलधरांस्तुरङ्गान्नृपाः समारुह्य पथि प्रजग्मुः ॥ ५८

---

१ [ आह्वाय्य ( आहूय वा ) बह्वर्थविदो ]. २ [ °गलितगन्ध° ].
३ [ °चामराढ्याम्° ]. ४ [ आरोह्य ]. ५ म नानाकृति°.

वपुष्मती विन्ध्यपुरेश्वरस्य महेन्द्रदत्तस्य सुता बभूव ।
द्विपंतपः सिंहपुराधिपस्तु यशोवती तस्य सुतेन्दुवक्त्रा ॥ ५९
सनत्कुमारस्य मनोज्ञरूपा वसुंधरापीष्टपुराधिपस्य ।
अनङ्गसेना मकरध्वजस्य राज्ञः सुता श्रीमलयेश्वरस्य ॥ ६०
प्रियव्रता चक्रपुराधिपस्य समुद्रदत्तस्य समग्ररूपा ।
वज्रायुधो नाम गिरिव्रजेशस्तस्य प्रियायामभवत्सुकेशी ॥ ६१
मित्रंसह[1]कोशलराजकन्यापतिः स्मृता तस्य हि विश्वसेना ।
अङ्गाधिपस्य प्रियकारिणीति बभूव पुत्री विनयंधरस्य[2] ॥ ६२
नरेन्द्रकन्या धृतिषेणपुत्र्या सहैव रूपादिगुणैः समानाः ।
दिग्भ्यस्तथाष्टाभ्य उदारवृत्ता आजग्मुरष्टाविव दिक्कुमार्यः ॥ ६३
नृपाज्ञया राजगृहस्य मध्ये नरेन्द्रसूनोरभिषेचनाय ।
श्रीमण्डपं कामकरण्डकाख्यं सत् कारितं नेत्रमनोऽभिरामम् ॥ ६४
महेन्द्रनीलैर्मणिभिर्विनद्धं[3] महीतलं हेममयी च भित्तिः ।
कपोतपाली रजतैरुपेता सौवर्णमन्तःफलकं प्रक्लृप्तम् ॥ ६५
स्तम्भास्तु सर्वे तपनीयगर्भा वहिर्बृहद्रत्नमणिप्रकल्प्याः[4] ।
द्वारं सुबद्धं खलु सर्वरत्नैर्जाम्बूनदाविष्कृतमिन्द्रकूटम् ॥ ६६
क्वचित्क्वचिल्लम्बितहेममालं प्रवालरत्नद्युतिमिश्रजालम् ।
मुक्ताकलापाश्रितदामलीलं रराज पर्यन्तविचित्रसालम् ॥ ६७
प्रवालमुक्तामणिभिर्विचित्रैर्विन्यस्तनानाविधभक्तिचित्रा ।
भ्रमद्द्विरेफाहतकेसरेण पुष्पोपहारेण रराज भूमिः ॥ ६८

---

१ क मित्रंसहा, [ मित्रंसहः ]. २ म विनयंवरस्य. ३ म विनन्दं. ४ [ प्रक्लृप्ताः ].

स्वाभाविकश्चामतिकान्तरूपो माङ्गल्यकर्मण्यभिसंस्कृताङ्गः।
सिंहासनस्योपरि संनिषण्णो बभौ शशीवोदयपर्वतस्थः[1] ॥ ६९

अष्टाभिराभिर्भुवि सुन्दरीभिर्मनोहराङ्ग्या सुतया सदृश्या।
श्रेष्ठ्यग्रपुत्र्या धनदत्तया च समं कुमारो दशाभिर्वराङ्गः[2] ॥ ७०

हैमैर्घटैर्गन्धविमिश्रतोयैर्ग्रीवाभिसंवेष्टितदामलीलैः।
पद्मोत्पलाच्छादितवक्त्रशोभैर्वसुन्धरेन्द्राः स्नपयांबभूवुः ॥ ७१[3]

अन्ये च तेषां नृपमन्त्रिमुख्या अनन्तचित्राजितदेवसाह्वाः[4]।
कुम्भैर्ज्वलद्रत्नमयैरनेकैः शुद्धाम्बुपूर्णैश्च समभ्यषिञ्चन् ॥ ७२

पौरप्रधाना नरदेवभक्त्या ते पार्थिवैः फुल्लफलाक्षमिश्रैः।
घटैश्च नानाविधवर्णतोयैः पदाभिषेकं सुतनोः प्रचक्रुः ॥ ७३

समेत्य सम्यग्बहुबन्धुवर्गा रागोद्धता मङ्गलजातहर्षाः।
यन्त्रैरनेकैर्वरवर्णपूर्णैरन्योन्यगात्राण्यभिचिक्कुदुस्ते[5] ॥ ७४

केचिच्छशंसुर्नृवरं वराङ्गं महीपतीनां तनयाश्च केचित्।
अन्योन्ययोग्या इति केचिदूचुराश्चर्यमन्ये परमं प्रजग्मुः ॥ ७५

वराङ्गनामानमनङ्गलीलं क्षितीन्द्रपुत्र्यश्च मनोज्ञरूपाः।
समीक्ष्य बन्धूनपि हर्षपूर्णान्पौरान्समेतान् कथयांबभूवुः ॥ ७६

इमे वयं चापि हि जीवलोके समाननेत्रोदरपाणिपादाः।
ऐश्वर्यकान्तिद्युतिवीर्यरूपैः कथं विशिष्टा इति केचिदूचुः ॥ ७७

किं न श्रुतं वाक्यमिदं भवद्भिर्जगत्यसाधारणहेतुभूतम्।
स्वकर्मनिष्पत्तिफलप्रपञ्चं दुःखं सुखं वेति च लोकसिद्धम् ॥ ७८

---

१ म शरीरोदय°. २ [समं कुमारं दशाभिर्वराङ्गम्]. ३ [सुस्नन्]. ४ [°धीवराह्वाः]. ५ [अभिचिक्लिदुस्ते].

धर्मात्सुखं पापफलाच्च दुःखं सुखं स्वपञ्चेन्द्रियकामलब्धिः ।
दुःखं पुनस्तद्विपरीतमुक्तमितीह सर्वैरपि किं न वेद्यम् ॥ ७९
पूर्वं त्वकृत्वा सुकृतं नरा ये पराश्रियं प्राप्तुमटन्ति मूढाः ।
तेषां श्रमं केवलमेव लोके हास्यं महत्तच्च विपाकतिक्तम् ॥ ८०
तथापि कर्माणि बहूनि तानि शुभप्रदानान्यशुभप्रदानि ।
ऐकान्तिकं यन्निरुपद्रवं च सुखं लभन्ते कथमत्र जीवाः ॥ ८१
दानं तपः संयमदर्शनानि शौचं दमो भूतदया च मैत्री ।
क्षान्तिश्च सत्यं समता ह्यसंग इत्येवमाद्यं सुखहेतुभूतम् ॥ ८२
जन्मान्तरे तप्ततपःप्रभावात्सत्पात्रदानाज्जिनपूजनाच्च ।
प्राणानुकम्पोद्भवभावनाया जन्मन्यथास्मिन्सुखिनो भवन्ति ॥ ८३
किमत्र चित्रैर्बहुभिः प्रलापैः सुखार्थिभिः पापरतिर्विहेया ।
पापं पुनर्जीवविहिंसनेन तन्मूलतो दुःखमवाप्नुवन्ति ॥ ८४
श्रुत्वा वचो धर्मपथोनपेतं[2] निरुत्तरं सर्वजगावगम्यम् ।
तं श्रद्दधुर्धर्मफलं मनुष्याः प्रत्यक्षसद्दर्शनजातरागाः ॥ ८५ ॥
प्रशस्तनक्षत्रमुहूर्तयोगे ग्रहेषु सर्वेषु समन्वितेषु ।
स्वोच्चस्थिते[3] चन्द्रमसीष्टपक्षे चकार पाणिग्रहणं वधूनाम् ॥ ८६
श्रीधर्मसेनः सकलत्रपुत्रः सन्मानदानैरभिसंप्रपूज्य ।
लोकोपचारग्रहणानुवृत्त्या विसर्जयामास वसुंधरेन्द्रान् ॥ ८७
संप्राप्य[4] कल्याणमहाविभूत्या विराजमाना दुहितॄर्निरीक्ष्य ।
जामातरं चायितराजलक्ष्म्यों वसुंधरेन्द्राः प्रययुः स्वदेशान् ॥ ८८

---

१ म अशान्ति. २ म धर्मपथा न भीतं. ३ क सोच्चस्थिते, [ सूच्चस्थिते ]. ४ [ संप्राप्त° ]. ५ [ चागत° ].

निवर्तमानान्स्वपुरान्कुमारः प्रीत्या महेन्द्रप्रतिमान्विधिज्ञः ।
प्रयाप्य[1] दूरं विदितत्रिवर्गः स्वच्छन्दवृत्त्यानुबभूव भोगान्[2] ॥ ८९
प्रियाङ्गनाभिर्वरवर्णिनीभिः प्रफुल्लनीलोत्पललोचनाभिः ।
चन्द्राननाभिः सह राजपुत्रो रेमे चिरं पीनपयोधराभिः ॥ ९०
तासां वधूनां रमणप्रियाणां क्रीडानुषङ्गक्रमकोविदानाम् ।
आलापसल्लापविलासभावैः कालो व्यतीतो धरणीन्द्रसूनोः ॥ ९१
ताश्चापि भास्वद्रमणीयवेषाः स्वाम्येकभावप्रतिबद्धरागाः ।
मनोज्ञरूपद्युतिकान्तिमत्यः[3] सर्वास्तु सर्वेन्द्रियरत्यधिष्ठाः ॥ ९२
सत्यार्जवक्षान्तिदयोपपन्नाः पैशून्यमायानृतलोभहीनाः ।
व्यपेतमात्सर्यमदाभ्यसूया महीन्द्रपुत्रस्य मनोऽपि जह्रुः ॥ ९३

देवेन्द्रो गगनचरीभिरप्सरोभिः
शैलेन्द्रे स्फुटमणिभासुरे यथैव ।
कान्ताभिर्भवनवरे परार्ध्यसारे
भूमीन्द्रप्रियतनयस्तथाभिरेमे ॥ ९४

इत्येवं नृपतनयस्य पुण्यमूर्तेः
कल्याणं कथितमिदं समासतस्तु ।
कः शक्तः सुकृतफलं समासहस्रैः
संस्तोतुं मतिरहितः पुमानशेषम् ॥ ९५

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
विवाहवर्णनो नाम द्वितीयः सर्गः ।

---

१ [ प्रस्थाप्य ]. २ म लोकान्. ३ म कान्तमत्यः.

## [ तृतीयः सर्गः ]

अरिष्टनेमिर्वरधर्मभूमिः[1] प्रणष्टकर्माष्टकभूरिवन्धः ।
विशिष्टनामाष्टसहस्रकीर्तिर्द्वाविंशतीर्थाधिपतिर्वभूव ॥ १
तस्याग्रशिष्यो वरदत्तनामा सदृष्टिविज्ञानतपःप्रभावात् ।
कर्माणि चत्वारि पुरातनानि विभिद्य कैवल्यमतुल्यमापत् ॥ २
उदारवृत्तैरुरुसत्तपस्कैर्नानर्द्धिभिः साधुगणैरनेकैः ।
महात्मभिस्तैर्विजहार देशान् धर्माम्बुवर्षं जगते च वर्षन् ॥ ३
पुराकरग्राममडम्वखेडान्विहृत्य भव्याम्बुजवालभानुः ।
धर्मप्रभावं व्यपदेष्टुकामः पुरं क्रमेणोत्तममाजगाम ॥ ४
तस्मिन्पुरे सर्वजनाभिगम्यं उद्यानमत्यन्तसुखप्रदेशम् ।
मनोहरं नाम मनोऽभिरामं कृतानुनादं मधुकृद्द्विरेफैः ॥ ५
तस्यैकदेशे रमणीयरूपे शिलातले जन्तुविवर्जिते च ।
दयापरैर्दान्तमदेन्द्रियाश्वैः सहोपविष्टो मुनिभिर्मुनीन्द्रः ॥ ६
एकैकशः केचन पिण्डिताश्च केचित्स्थिताः केचन संनिषण्णाः ।
स्वाध्यायमन्दध्वनिरक्तकण्ठा वाचंयमाः केचन साधुवर्याः ॥ ७
तेषां यतीनां हि तपोधनानां जाज्वल्यमानोत्तमशीलभासाम् ।
मध्ये वभासे वरदत्तनामा ज्योतिर्गणानामिव पूर्णचन्द्रः ॥ ८
उद्यानपालः प्रविलोक्य साधूंस्तपोभिरुद्भासितपुण्यमूर्तीन् ।
प्रहृष्टचेतास्त्वरयाभिगम्य विज्ञापयामास वसुंधरेन्द्रम् ॥ ९
पुरे वने वापि गृहे सभायां तिष्ठन्स्वयं जाग्रदपि व्रजंश्च ।
दिवा निशायामथ सन्ध्ययोश्च यान्भावतश्चिन्तयति क्षितीन्द्रः॥१०

---

१ क °वरदत्तभूमिः.

तान् साधुवर्गान्स्वगुणोपपन्नान्प्रशान्तरूपान्विदितत्रिलोकान् ।
मनोहरोद्यानशिलातलेषु सुखोपविष्टानहमभ्यपश्यम् ॥ ११
उद्यानपालस्य वचो निशम्य प्रोत्थाय सिंहासनतः पृथुश्रीः ।
पदानि सप्त प्रतिगम्य राजा ननाम मूर्ध्ना विनतारिपक्षः॥ १२
आनन्दिनी नाम महाभ्रनादा माङ्गल्यकर्मण्यभिसंप्रताड्या ।
जनस्य सर्वस्य विबोधनार्थं प्रताडिता भूपतिशासनेन ॥ १३
अमात्यसेनापतिमन्त्रिणश्च पुरोहितश्रेणिगणप्रधानाः ।
तस्याः पुनर्मेघनिनादकल्पं रवं निशम्याशु समाययुस्ते ॥ १४
प्रहृष्टरोमः परितुष्टभावो दत्त्वा दरिद्रार्थिजनाय दानम् ।
सान्तःपुरः सर्वसमृद्धियुक्तो जगाम साधूनभिवन्दितुं सः ॥ १५
बहुप्रकारान्पुरवासिनोऽर्थान् विचिन्तयन्तः स्वमनोऽनुनीतान् ।
अनेकवेषाकृतिदेशभाषा निरीयुरुर्वीपतिना सहैव ॥ १६
नृपाज्ञया केचिदभिप्रजग्मुर्गन्तुं प्रवृत्तानपरे समीयुः ।
निश्चक्रतुः केचिदुदारशोभाः स्वां स्वां च संदर्शयितुं विभूतिम्॥१७
निर्जग्मुरेके नरदेवभक्त्या समीयुरेके मुनिदेवभक्त्या ।
उत्तस्थुरेके गुरुलोकभक्त्या उपेयुरेके वरधर्मभक्त्या ॥ १८
प्रदित्सवः केचन पात्रदानं निनंसवः केचन संयतेन्द्रान् ।
शुश्रूषवः केचन धर्मसारं सुराङ्गनाभिस्तु रिरंसवोऽन्ये ॥ १९
रुरुत्सवः केचन मोहसेनां जिघांसवः केचन मोहराजम् ।
युयुत्सवोऽन्ये च कषायमल्लैर्बिभङ्क्षवः केचन कामदर्पम् ॥ २०
मुमुक्षवः केचन कर्मपाशांस्तितीर्षवोऽज्ञानमहासमुद्रम् ।
शुश्रूषवः साधुगुणानुदारांश्चिचित्सवैः संशयजातमर्थम् ॥ २१

१ म प्रभ्रान्तरूपान्. २ [ निश्चक्रमुः ]. ३ [ चिचित्सवः ].

पुपूषवः पापरजांसि केचिच्चिचीषवः[1] पुण्यजलानि केचित् ।
चिकीर्षवो[2] घोरतपांसि केचित्तिष्ठासवः मूत्रपथे च केचित् ॥ २२
चिकित्सवः केचन दुःखजालं विभित्सवः केचन दुःखबीजम् ।
सिशंसवः[3] केचन दुःखवह्निं जिज्ञासवो द्रव्यगुणस्वभावान् ॥ २३
आधित्सवः केचन पुण्यकीर्तिं विवप्सवः केचन पुण्यबीजम् ।
सिष्णापवः[4] केचन पुण्यतीर्थे लोकोत्तरं सौख्यमभीप्सवश्च ॥ २४
गृहस्थधर्मं प्रतिपित्सवश्च गृहस्थधर्मं प्रजिहासवश्च ।
तित्यक्षवो लोककुधर्ममार्गं मुनीन्द्रधर्मं प्रजिघृक्षवश्च ॥ २५
व्रतातिपातप्रतिबोधनाय गृहीतपूर्वव्रतवर्धनाय ।
महाव्रतानुग्रहकारणाय केचिद्ययुः प्राग्विदितार्थतत्त्वाः ॥ २६
अन्ये पुनः प्राक्तनुकर्मबन्धाः संसारनिःसारविकारदोषान् ।
अवेत्य निर्वेदपरायणास्ते दीक्षाभिलाषाः प्रययुर्गृहेभ्यः ॥ २७
मदप्रभिन्नार्द्रकटद्विपानामन्तर्निनादै[5] रथनेमिघोषैः ।
तुरङ्गमानामपि हेषितैश्च पदातिवृन्दप्रतिबद्धवाक्यैः ॥ २८
नानाविधैस्तैः पटहैर्बृहद्भिः शङ्खस्वनैर्बन्दिमुखप्रलापैः ।
प्रावृट्पयोदध्वनिमादधाना नरेन्द्रसेना विबभौ प्रयान्ती ॥ २९
आरुह्य रत्नोज्ज्वलमौलयस्ते हस्त्यश्वयानानि पृथग्विधानि ।
वरा वराङ्गप्रमुखाः कुमारा वसुंधरेशस्य ययुः पुरस्तात् ॥ ३०
मत्तद्विपस्यायतपीनबाहुः स्कन्धाधिरूढः ससितातपत्रः ।
अष्टार्धसच्चामरवीज्यमानो व्रजन् बभौ शक्र इव द्वितीयः ॥ ३१

---

१ क चिचीर्षवः. २ म चिचीपवो. ३ [ शमिष्णवः ]. ४ [ सिस्नासवः ].
५ क मन्त्रार्निनादैः, [ मन्द्रैर्निनादैः ].

यथैव पूर्वं भरतेश्वरस्तु हिरण्यनाभाय नमस्क्रियायै ।
व्रजन् बभासे वरदत्तपार्श्वं श्रीधर्मसेनो वसुधाधिपश्च ॥ ३२
अदूरतः साधुगणान्विलोक्य मत्तद्विपेन्द्रादवतीर्य सद्यः ।
अपोह्य वालव्यजनातपत्रं मुदाश्रितो वन्दितुमायतश्रीः ॥ ३३
ज्योतिर्गणैरिन्दुरिवाचलेन्दुं[1] प्रदक्षिणीकृत्य वसुंधरेन्द्रः ।
सपुत्रदारः सहमित्रबन्धुर्ननाम पादावृषिसत्तमस्य ॥ ३४
ज्वलत्किरीटः प्रविलम्बिहारो विचित्ररत्नाङ्गदघृष्टबाहुः ।
रराज राजा मुनिपुङ्गवस्य पादौ पतन् भानुरिवोदयस्य ॥ ३५
आपृच्छ्य भूपः कुशलं यतीनामविघ्नतां ज्ञानतपोव्रतेषु ।
स्वनामगोत्रं चरणं निवेद्य स्तोत्रैश्च मन्त्रैर्विविधैः प्रणुत्य ॥ ३६
शेषांश्च सर्वान्मुनिपुङ्गवांस्तांस्त्रिभिर्विशुद्धः क्रमशोऽभिवन्द्य ।
एत्यादरात्केवलिपादमूलं सुखं निषद्येममपृच्छदर्थम् ॥ ३७
सर्वप्रजाभ्यो ह्यभयप्रदाता सर्वप्रजानां शरणं गतिश्च ।
सर्वप्रजानां हितदेशकस्त्वं धर्मामृतं मे दिश वीतमोह ॥ ३८
त्वं केवलज्ञानविशुद्धनेत्रः सर्वार्थवित्सर्वगुणोपपन्नः ।
सर्वेन्द्रवन्द्यः प्रविधूतपाप्मा आचक्ष्व जीवादिपदार्थभेदान् ॥ ३९
जीवाश्च केचिन्नरकेषु तीव्रं केनाप्नुवन्त्यप्रतिमं हि दुःखम् ।
तिर्यक्षु नानाविधवेदनां वा मनुष्यलोकस्य च कारणं किम् ॥ ४०
सुराधिवासस्य चतुर्विधस्य सौख्यं कथं वाष्टगुणादियुक्तम् ।
क्लेशक्षयोद्भूतमनन्तकालनिर्वाणसौख्यं कथयस्व केन ॥ ४१
कर्माणि वा कानि सुखप्रदानि दुःखप्रदानान्यथ कानि नाथ ।
सुखासुखोन्मिश्रफलानि कानि कर्मान्तक ब्रूहि च संशयो मे ॥ ४२

---

१ [ अचलेन्द्रं ].

एवं स पृष्टो भगवान्यतीन्द्रः श्रीधर्मसेनेन नराधिपेन ।
हितोपदेशं व्यपदेष्टुकामः प्रारब्धवान्वक्तुमनुग्रहाय ॥ ४३
येऽर्थास्त्वया प्रश्नविदा नरेन्द्र चतुर्गतीनां सुखदुःखमूलाः ।
पृष्टा यथावद्विनयोपचारैरेकाग्रबुध्द्या शृणु ते ब्रवीमि ॥ ४४
संभाव्य सम्यं¹ज्ञतिभाजनेन सद्धर्ममार्गश्रुतितोयधाराम् ।
श्रद्धान्विताः साधु पिबन्ति ये तु ते यान्ति जन्मार्णवदूरपारम् ॥४५
धर्मश्रुतेः पापमुपैति नाशं धर्मश्रुतेः पुण्यमुपैति वृद्धिम् ।
स्वर्गापवर्गप्रवरोरुसौख्यं धर्मश्रुतेरेव न चान्यतस्तु ॥ ४६
तस्माद्धि धर्मश्रवणानुरागा भवन्तु सर्वे शुभमाप्तुकामाः ।
जित्वा जरारातिरुजश्च मृत्युं भवन्ति वन्द्या भुवनत्रयस्य ॥ ४७
धर्मानुबन्धा दुरितानुबन्धा मिश्रानुबन्धाश्च यथाक्रमेण ।
त्रिधा विभिन्नाः श्रुतयश्च लोके तासां फलं त्रैधमुदाहरन्ति ॥ ४८
धर्मानुबन्धात्सुखमेव नित्यं पापानुबन्धादथ दुःखमेव ।
मिश्रानुबन्धात्सुखदुःखयोगः संक्षेपतस्ते त्रिविधं मयोक्तम् ॥ ४९
क्षीराणि वर्णेन समानि लोके रसेन नानागुणवन्ति तानि ।
ऐ²कानि निघ्नन्ति निपीतमात्रमन्यान्यथारोग्यवपुःकराणि ॥ ५०
एवं हि धर्माश्च बहुप्रकारा नाम्ना समाना गुणतो विशिष्टाः ।
दुःखार्णवे केचन मज्जयन्ति सुखार्णवे केचन निक्षिपन्ति ॥ ५१
केचित्पुनस्ते नरकं नयन्ति नयन्ति तिर्यग्गतिमेव केचित् ।
मनुष्यलोकं गमयन्ति केचित्स्वर्गापवर्गौ च नयन्ति केचित् ॥ ५२
एकान्ततो निम्बरसश्च तिक्त इक्षोर्विकारो मधुरस्वभावः ।
यश्चाधिको येन विमिश्रितः स्यादाधिक्यतः सन्स्वरसं ददाति ५३

१ म सम्यग्गति°. २ म एतानि.

तत्रैव पापाधिकतोऽतिदुःखं पुण्याधिकात्सौख्यमुदाहरन्ति ।
सुखासुखे ते च समे समत्वान्निम्बेक्षुहेतुप्रतिदर्शनेन ॥ ५४
अज्ञानमूढा[1] दुरनुष्ठिता ये धर्माशयात्क्लेशगणान्भजन्ते[2] ।
विपन्नमार्गाः परितप्य पश्चात्ते तीव्रदुःखं नरकं व्रजन्ति ॥ ५५
नाज्ञानतोऽन्यद्भयमस्ति किंचिन्नाज्ञानतोऽन्यच्च तमोऽस्ति किंचित्
नाज्ञानतोऽन्यो रिपुरस्ति कश्चिन्नाज्ञानतोऽन्योऽस्ति हि दुःखहेतुः
निरङ्कुशो मत्त इव द्विपेन्द्रो यथा प्रविश्य प्रतिशत्रुसेनाम् ।
नेत्रा सहैवाशु विनाशमेति जीवस्तथा ज्ञानविहीनचेताः ॥ ५७
यथैव तीक्ष्णाङ्कुशवान् गजेन्द्रो मृद्नात्यरीणां पृतनाः प्रसह्य ।
तथैव मोहारिमहोग्रसेनां ज्ञानाङ्कुशो निर्जयति क्षणेन ॥ ५८
यथा दवाग्नेरपसर्तुकामो धावंस्तु तत्रैव पतत्यचक्षुः ।
अज्ञाननीलीवृतलोचनस्तु तथैव दुःखानलमभ्युपैति ॥ ५९
यथा दवाग्नेरपसृत्य पङ्गुः स्वदेशमाप्नोति शनैरुपायैः ।
सज्ञानचक्षुश्च तपांसि कृत्वा तथा बुधो निर्वृतिमभ्युपैति ॥ ६०
इत्येवमादीनि निदर्शनानि जगत्प्रवृत्तान्यवलोक्य बुद्ध्या ।
अल्पश्रमादेव विशुद्धदृष्टिः स मोक्षसौख्यं लभते च विद्वान् ॥ ६१

कुमतिदुरुपदेशाद्धर्मसद्भावकृत्ये
जगति न हि विदन्ति क्षीणपुण्या नरा ये ।
अविदितपरमार्थास्ते पुनर्जन्मवासे
चिरतरमपि कालं दुःखभाजो भवन्ति ॥ ६२

अत इह मतिमन्तो धर्ममग्र्यं जनानां
त्रिभुवनसुखसारप्रापकं संभजध्वम् ।

---

१ क अज्ञानमूर्खा. २ क क्लेशगुणान्.

त्यजत[1] वितथशून्यं श्यामलं लोकधर्मं
शृणुत तदुपरिष्टात्कर्मणां च प्रभेदम् ॥ ६३

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
धर्मप्रश्नो नाम तृतीयः सर्गः ।

---

[ चतुर्थः सर्गः ][2]

संसारे प्राणिनः सर्वे सुखदुःखानुवर्तिनः ।
इष्यते कारणं कर्म तयोश्च सुखदुःखयोः ॥ १
तदेकं कर्म सामान्याद्भेदादष्टकमुच्यते ।
चतुर्धा भिद्यते बन्धान्निमित्ताच्च चतुर्विधम् ॥ २
ज्ञानावरणमाद्यं हि द्वितीयं दर्शनावृतम् ।
तृतीयं वेदनीयाख्यं चतुर्थो मोह उच्यते ॥ ३
आयुश्च पञ्चमं प्रोक्तं नाम षष्ठमुदाहृतम् ।
सप्तमं गोत्रमित्युक्तमन्तरायोऽष्टमः स्मृतः ॥ ४
मूलप्रकृतयस्त्वेता नामतः परिकीर्तिताः ।
आद्ये कर्मणि पञ्चैव द्वितीये नवधा स्मृतम् ॥ ५
तृतीये द्विप्रकारं तु चतुर्थेऽष्टौ च विंशतिः ।
चतुष्प्रकारमायुष्कं द्विचत्वारिंशन्नामनि ॥ ६

---

१ क त्यजथ, म त्यजतथ (?). २ क श्रीमदभिनवचारुकीर्तिपण्डिताचार्यमुनये नमः.

गोत्रे तु द्विविधं प्रोक्तमन्तरायस्तु पञ्चधा ।
उत्तरप्रकृतयः सर्वाः संख्याता हि समासतः ॥ ७
आद्ये द्वे मोहनीयं च दुःखदान्यन्तरायिकम् ।
वेद्यायुर्नामगोत्राणि सुखदुःखानि नित्यशः ॥ ८
मतिश्रुतावधिज्ञानं मनःपर्ययकेवलम् ।
अभिभूय स्ववीर्येण तमः समवतिष्ठते ॥ ९
चतुर्विधं मतिज्ञानं तदेवाष्टौ च विंशतिः ।
द्वात्रिंशत्पुनरन्येन स्मृतिमावृत्य तिष्ठति ॥ १०
अवग्रहेहावायानां धारणानां च संततिः ।
शुश्रूषामार्गणापेक्षाधारणानि[1] रुणद्धि सा ॥ ११
पर्यायाक्षरसंघातः पदं संघात एव च ।
प्रतिपत्तिश्च योगश्चानियोगद्वारमेवं[2] च ॥ १२
प्राभृतं प्राभृतं चैव प्राभृतं वस्तुपूर्वकम् ।
श्रुतज्ञानावृतिस्तत्र समासेन च विंशतिः ॥ १३
ग्रन्थार्थौ च न जानाति ज्ञात्वा चोपदिशन्पुनः ।
अशक्तः प्रतिपादयितुं श्रुतज्ञानावृतेः फलम् ॥ १४
द्विभेदमवधिज्ञानं गुणतो जन्मतश्च यत् ।
तज्ज्ञानं व्रियते येन सावधिज्ञानसंवृतिः ॥ १५
तद्विनाशोऽवधिज्ञानं[3] प्राणिपूत्पद्यते पुनः ।
देवानां नारकाणां च भवप्रत्ययकं स्मृतम् ॥ १६

---

१ म °मार्गणोपेक्षा°. २ म योगश्च नियोग°, [ योगश्चानुयोग° ]. ३ [ तद्विनाशेऽवधिज्ञानं ].

तिरश्चां मानुषाणां च गुणप्रत्यय इष्यते ।
अवधिः परमो नॄणां नेतरेषां प्रकल्प्यते ॥ १७
क्षयोपशम एवास्मिन्नवधिज्ञानकारणम् ।
संक्लेशपरिणामेन तद्द्वयं च विनश्यति ॥ १८
ऋजुमतिश्च विज्ञेया विपुला तदनन्तरा ।
तयोरावरणवत्स्यान्मनःपर्ययसंवृतिः ॥ १९
यद्योजनपृथक्त्वे च प्राणिनां चेतसि स्थितम् ।
न शक्तो येन विज्ञातुमृजुमत्यावृतेर्बलात् ॥ २०
अर्धतृतीयद्वीपस्य प्राणिनां हृदि वर्ति[1] तत् ।
नास्ति शक्तिः परिज्ञातुं विपुलावृतिवीर्यतः ॥ २१
उत्कृष्टादप्यसंख्येयान् द्वित्रान्नाथ जघन्यतः ।
मनःपर्ययावरणाद्भवान् ज्ञातुं न शक्तवान् ॥ २२
सर्वद्रव्यस्वभावानां विज्ञात्रीं सर्वदा पुनः ।
संवृणोत्यात्मविज्ञप्तिं केवलज्ञानसंवृतिः ॥ २३
निद्रानिद्रा च निद्रा च प्रचलाप्रचला चला ।
स्त्यानगृद्धिश्च चक्षुश्च अनेत्रावधिदर्शनम् ॥ २४
केवलेन समाख्यातो दर्शनावृतिकर्मणः ।
सातासाते पुनर्द्वे च वेदनीयस्य ते स्मृते ॥ २५
असातवेदनीयेन नरके तीव्रवेदना ।
तिर्यङ्मानुषयोर्मिश्रां[2] सुखं सातात्सुरालये ॥ २६
द्विविधं मोहनीयं स्याद्दृष्टेश्च चरितस्य च ।
दर्शनं त्रिविधं प्रोक्तं सम्यङ्मिथ्यात्वमिश्रकम् ॥ २७

१ [ हृद्विवर्ति ]. २ क. तिर्यग्मानुषयोन्मिश्रं.

नोकषायः कषायश्च चारित्रावरणं द्विधा ।
नोकषायो नवविधः कषायः षोडशात्मकः ॥ २८
हास्यरत्यरतिशोका जुगुप्सा भयमेव च ।
स्त्रीपुंनपुंसवेदाश्च नोकषाया नव स्मृताः ॥ २९
क्रोधो मानश्च माया च लोभोऽनन्तानुबन्धिनः ।
विघातयन्ति सम्यक्त्वं चारित्रं च विशेषतः ॥ ३०
क्रोधो मानश्च माया[1] लोभः प्रत्याख्याननामकाः ।
गृहीतव्रतशीलस्य दयासंयमघातिनः ॥ ३१
क्रोधो मानश्च माया च लोभः संज्वलनात्मकाः ।
ते यथाख्यातचारित्रं नाशयन्ति न संशयः ॥ ३२
चतुष्प्रकारमायुष्कं नारकं दैवमेव च ।
तिर्यग्योनिं च मानुष्यं स्थितिसत्कारणं[2] स्मृतम् ॥ ३३
आयुष्कं नारकं दुःखं तिर्यग्योनिं च मानुषम् ।
सुखदुःखविमिश्रं तं दैवमैकान्तिकं सुखम् ॥ ३४
द्विविधं नाम तत्प्राहुः शुभाशुभसमन्वितम् ।
द्विचत्वारिंशदन्येन नवतिस्त्र्युत्तराण्यथ ॥ ३५
उच्चनीचद्वयं गोत्रमुच्चनीचं च मानुषम् ।
तिर्यङ्नारकयोर्नीचमुच्चमेवामरं स्मृतम् ॥ ३६
दानलोभौ च भोगश्चोपभोगो वीर्यमेव च ।
पञ्च प्रकृतयस्तस्य अन्तरायस्य कर्मणः ॥ ३७
उत्तरप्रकृतयः प्रोक्ता अष्टानामपि कर्मणाम् ।
शतमष्टोत्तरं चैव चत्वारिंशत्प्रमाणतः ॥ ३८

१ क माया च लोभः. २ क स्थितेस्तत्कारणं.

आदितस्तु त्रयाणां च अन्तरायस्य कर्मणः ।
कोटीकोट्यस्तथा त्रिंशन्मोहनीयस्य सप्ततिः ॥ ३९
चत्वारिंशच्चरित्रस्य गोत्रनाम्नस्तु[1] विंशतिः ।
आयुष्कस्य त्रयस्त्रिंशत्सागराश्च परा स्थितिः ॥ ४०
द्विपण्मुहूर्ता वेद्यस्य तथाष्टौ नामगोत्रयोः ।
अन्तर्मुहूर्तिकी शेपे जघन्या स्थितिरिष्यते ॥ ४१
तेपामथ दुरन्तानामष्टानां घोरकर्मणाम् ।
मिथ्यात्वासंयमौ योगाः कपाया वन्धहेतवः ॥ ४२
ज्ञानविद्वेपिणो ये च प्रतिपक्षप्रशंसिनः ।
असादने[2] रता भूयो ज्ञानविघ्नकराश्च ये ॥ ४३
निह्नवं ये च कुर्वन्ति अवज्ञामप्यविस्मयाः ।
ज्ञानावृतिकरं कर्म वध्नन्ति नियमेन ते ॥ ४४
उत्सूत्रं ये च कुर्वन्ति अकालेऽधीयते च ये ।
विनयादिक्रियाहीनास्ते श्रुत्यावृतिवन्धकाः ॥ ४५
यथा नभसि संपूर्णं शशाङ्कं प्रावृडम्बुदः ।
संवृणोति क्षणेनैव जीवं ज्ञानावृतिस्तथा ॥ ४६
हस्तविक्षोभविक्षिप्तः सचलः[3] क्षणतः पुनः ।
प्रावृणोत्युदकं यद्वत्तद्वद् ज्ञानावृतं स्मृतम् ॥ ४७
द्रव्याण्यशक्तः पुरुपो द्रष्टुं तिमिरलोचनः ।
अशक्तस्त्वावृतज्ञानः सत्स्वभावान्परीक्षितुम् ॥ ४८
नव प्रकृतयः प्रोक्ता दृष्ट्यावरणकर्मणः ।
ज्ञानावृतिनिमित्तानि तान्येवोक्तानि तस्य च ॥ ४९

१ [ गोत्रनाम्नोस्तु ]. २ [ आसादने ]. ३ म स च लक्षणतः, [ शैवलः ].

वृक्षाग्रे वाथ रथ्यायां तथा जागरणेऽपि वा ।
निद्रानिद्राप्रभावेन न दृष्ट्युद्धाटनं भवेत् ॥ ५०

स्यन्दते[1] मुखतो लाला[2] तनुं चालयते मुहुः ।
शिरो नमयतेऽत्यर्थं प्रचलाप्रचलाक्रमः ॥ ५१

स्वपित्युत्थापितो भूयः स्वपत्कर्म करोति च ।
अवद्धं लभते[3] किंचित्स्त्यानगृद्धिक्रमो मतः ॥ ५२

यान्तं संस्थापयत्याशु स्थितमासयते शनैः ।
आसीनं शाययत्येव निद्रायाः शक्तिरीदृशी ॥ ५३

किंचिदुन्मिषितो[4] जीवः स्वपित्येव मुहुर्मुहुः ।
ईषदीषद्विजानाति प्रचलालक्षणं हि तत् ॥ ५४

चक्षुर्दर्शनावरणं दृष्टिवीर्यं हिनस्ति तत् ।
शेषेन्द्रियाणां वीर्याणि हन्त्यचक्षुः स्ववीर्यतः ॥ ५५

अवधिः परमाह्वश्च स्वनामावरणावृतौ[5] ।
केवलप्रेक्षणावृत्त्यावृतं केवलदर्शनम् ॥ ५६

दुःखशोकवधाक्रन्दबन्धनाहाररोधनम् ।
असातवेदनीयस्य कर्मणः कारणं ध्रुवम् ॥ ५७

दानधर्मदयाक्षान्तिशौचव्रततपोन्विताः ।
शीलसंयमगुप्ताश्च सातं बध्नन्ति जन्तवः ॥ ५८

यद्दुःखं त्रिषु लोकेषु शारीरं वाथ मानसम् ।
समस्तं तदसातस्य कर्मणः पाक उच्यते ॥ ५९

---

१ क स्पन्दते. २ म लोला. ३ [ लमते ]. ४ म किंचिदुन्मिलो, क किंचिदु ( न्मि ) म्मितो. ५ क स्वनामावरणं वृतौ.

यत्सुखं त्रिषु लोकेषु शारीरं वाथ मानसम् ।
तत्सर्वं सातवेद्यस्य कर्मणः पाक उच्यते ॥ ६०
केवलिश्रुतधर्माणां गुरूणामर्हतां सदा ।
चातुर्वर्णस्य संघस्य अवर्णावद्धवादिनः ॥ ६१
मार्गसंदूषणं कृत्वा अमार्गं देशयन्ति ये ।
दृष्टिमोहं प्रवध्नन्ति जीवाः संसारभागिनः[2] ॥ ६२
दृष्टिमोहवृता जीवाः सद्भावं न च जानते ।
अलब्धकर्मसद्भावा लभन्ते नैव निर्वृतिम् ॥ ६३
तीव्रक्रोधाहिसंदष्टा मानस्तम्भितचेतसः ।
मायाविष्टान्तकलुषा लोभरागान्धदृष्टयः ॥ ६४
चारित्रमोहं बध्नन्ति जीवा दुरितवुद्धयः ।
तेन कर्मविपाकेन क्लिश्यन्ते भववर्त्मसु ॥ ६५
आद्यः क्रोधोदयस्तीव्रः शिलाभेदसमो मतः ।
नोपैत्युपशमं तेन जीवो जन्मान्तरेष्वपि ॥ ६६
क्रोधोदयो द्वितीयस्तु मध्यक्षेत्रदरीसमः ।
उपैत्युपशमं कालाच्छ्रुतितोयार्द्रचेतसः[1] ॥ ६७
क्रोधोत्थानस्तृतीयस्तु सिकतालेखसंनिभः ।
ज्ञानानिलेन संस्पृष्टो गतावेकीकरोत्यसौ[3] ॥ ६८
क्रोधोदयश्चतुर्थो यो जललेखासमो[4] मतः ।
स पुनः कारणाज्जातः क्षिप्रमेवोपशाम्यति ॥ ६९

१ म श्रुति°. २ क संसारभोगिनः. ३ क गतावेरिकरोत्यसौ, [ गर्तामेकी° ]. ४ म जले लेखा°.

आद्यो मानोदयस्तीव्रः शैलस्तम्भनिभो मतः ।
नोपैति मार्दवं यस्माज्जीवः कालान्तरादपि ॥ ७०
मानोदयो द्वितीयस्तु समोऽस्थ्नेत्यभिधीयते ।
उपैति मार्दवं तस्माज्ज्ञानाग्निपरितापितः ॥ ७१
मानोत्थानस्तृतीयस्तु आर्द्रकाष्ठसमो मतः ।
ज्ञानस्नेहसमाभ्यक्तस्ततो याति हि मार्दवम् ॥ ७२
मानोदयश्चतुर्थो यो वालवल्लीनिभो मतः ।
श्रुतिहस्तसमास्पृष्टो मृदुत्वं याति तत्क्षणात् ॥ ७३
आद्यो मायोदयस्तीव्रो वेणुमूलसमो मतः ।
वक्रशीलो भवेत्तेन नोपयात्यार्जवं सदा ॥ ७४
मायोदयो द्वितीयस्तु मेषशृङ्गसमो मतः ।
हृद्यन्यच्च समादाय तेनान्यत्प्रकरोति सः ॥ ७५
मायोत्थानस्तृतीयस्तु गोमूत्रि[1]कसमो मतः ।
अर्धमर्धमृजुत्वं च अर्धं मायाकृतं भवेत् ॥ ७६
मायोदयश्चतुर्थो यश्चमरीरोमसंनिभः ।
प्रत्येति प्रकृतिस्तेन ज्ञानयन्त्रप्रपीडितः ॥ ७७
आद्यो लोभोदयस्तीव्रः क्रिमिराग[2]समो मतः ।
श्रुतानलप्रदग्धोऽपि लोभो न परिहीयते ॥ ७८
लोभोदयो द्वितीयस्तु नीलीवर्णसमो मतः ।
ज्ञानपानीयसंधौतस्तेनात्मा[3] कल्मषायते ॥ ७९
लोभोत्थानस्तृतीयस्तु आर्द्रपङ्कसमो मतः ।
श्रुततोयविनिर्धौतस्तेन वैमल्यमृच्छति ॥ ८०

---

१ [ °मूत्रित ]. २ क कृमि°. ३ क तेनात्माऽकल्मषायते.

लोभोदयश्चतुर्थो यो हरिद्रारागसंनिभः ।
श्रुतिसूर्यांशुसंतप्तः क्षणाद्रागः प्रणश्यति ॥ ८१

चारित्रमोहनीयेन चारित्रं न च लभ्यते ।
अचारित्रः पुनर्घोरे नरके पच्यते चिरम् ॥ ८२

हर्षे रोपे त्ववज्ञायामेकाकी वान्यसंश्रितः ।
निष्कारणं च लपते हास्यकर्मोदयावृतः ॥ ८३

पापक्रियाभियुक्तेषु अफलेष्वहितेषु च ।
रतिकर्मोदयान्नित्यं रमते दुर्जनेषु सः ॥ ८४

ज्ञानं व्रतं तपः शीलं दैन्यान्यसुखकारणम् (?)[1] ।
लब्ध्वा न रमते तत्र अरतेः कर्मणः फलात् ॥ ८५

एकं भयं समासृत्य भयस्थानेषु सप्तसु ।
वेपिताङ्गः स्खलद्वाक्यो भयकर्मोदयाद्भवेत्[2] ॥ ८६

निर्विण्णो दीर्घनिश्वासः सर्वत्रगतमानसः ।
क्षीण[3]बुद्धीन्द्रियवलः शोककर्मोदयाद्भवेत् ॥ ८७

इन्द्रियाणां च पञ्चानां योऽर्थाल्लब्ध्वा मनोरमान् ।
जुगुप्सते विपुण्यात्मा जुगुप्साकर्मपीडितः ॥ ८८

स्त्री चेवँ[4] पुंस्त्वसंदर्शात्पुमांसमभिलष्यति ।
लाक्षेवानलसंस्पर्शात्क्षणेनैव विलीयते ॥ ८९

पुंवेदः स्त्र्यभिसंदर्शात्स्त्रियं समभिलष्यति ।
यथाग्नेर्घृतकुम्भस्तु क्षणेनैव विलीयते ॥ ९०

---

१ क शीलथ्यैन्योन्य°, [ शीलाद्यन्योन्यसुख° ], [ शीलं धन्योऽन्यसुख-कारणम् ]. २ म भयः. ३ म क्षण°. ४ [ स्त्रीवेदः ].

इष्टकापाकसंदर्शं विफलं मदनाश्रितम् (?) ।
दौरूप्यं गर्हितं याति स नपुंसकवेदतः ॥ ९१

नवभिर्नोकषायैस्तु स्वकर्मफलवर्तिभिः ।
आत्मा चरत्यनाचारं स तेन क्लेशमृच्छति ॥ ९२

व्रतशीलगुणैः शून्या बह्वारम्भपरिग्रहाः ।
बध्नन्ति नरकायुस्ते मिथ्यामोहितदृष्टयः ॥ ९३

मायातिवञ्चनप्रायाः कूटमानतुलारताः ।
बध्नन्त्यायुस्तिरश्चां ते रसभेदश्चकारिर्णः[1] ॥ ९४

शीलसंयमहीना ये मार्दवार्जवदानिनः ।
बध्नन्ति मानुषायुस्ते प्रकृत्याल्पकषायिणः ॥ ९५

सरागसंयमो[2]कामसंयमासंयमव्रताः ।
सद्दृष्टिज्ञानचारित्रा[3] बध्नन्त्यायुर्दिवौकसाम् ॥ ९६

मनोवाक्कायकुटिला विसंवादपरायणाः ।
बध्नन्त्यशुभनामानि दुर्वर्णादीनि देहिनः ॥ ९७

ऋजवो वाङ्मनःकायैरविसंवादतत्पराः ।
सौरूप्यादिविपाकानि बध्नन्ति शुभनामतः ॥ ९८

ये जात्यादिमदोन्मत्ताः परनिन्दापरायणाः ।
नीचगोत्रं निबध्नन्ति जीवाः परमदारुणम् ॥ ९९

ज्ञानधर्मार्हतां भक्ताः परनिन्दाविवर्जिताः ।
उच्चैर्गोत्रं निबध्नन्ति जीवाः परमदुर्लभम् ॥ १००

---

१ [ रसभेदस्य कारिणः ], [ रसभेदप्रकारिणः ]. २ [ सरागसंयमाकाम° ].
३ [ °चारित्राद् ].

दानविघ्नकरा ये ते निःस्वा जन्मसु जन्मसु ।
लाभविघ्नकराश्चापि निराशा धनलब्धिषु ॥ १०१
भोगविघ्नकरा जीवा भोगहीना भवन्ति ते ।
नालं भोक्तुं सति द्रव्ये उपभोगविघातिनः ॥ १०२
वीर्यविघ्नकरा नित्यं वीर्यहीना भवाध्वसु ।
धर्मविघ्नकरा ये ते सर्वविघ्नकरा मताः ॥ १०३
अष्टानां कर्मणां राजन्फलमेतदुदाहृतम् ।
एतैर्विमुच्यते[1] जीवः संसारे कर्मभिश्चिरम् ॥ १०४
वध्नात्यष्टविधं कर्म एकप्राणिविहिंसनात् ।
नानायोनिषु तेनात्मा दुःखान्याप्नोत्यनन्तशः ॥ १०५
एकेन मुच्यते जीवः कर्मणान्येन बध्यते ।
घटीयन्त्रस्य घटवद्वाहोऽस्मिन्मन्थरज्जुवत् ॥ १०६
वीजादिव परं वीजं वर्धयत्कर्म कर्मणा ।
जीवो भ्रमति संसारे क्लेशाननुभवंश्चिरम् ॥ १०७
अथाष्टौ तानि कर्माणि अनादीनि महीपते ।
विनिपातसहस्राणि प्राणिनां प्रापयन्ति च ॥ १०८
एतान्येव नरके घोरे तिर्यङ्मानुषयोः सदा ।
देव दुर्गतिदुःखाब्धौ मज्जयन्ति पुनःपुनः ॥ १०९
तान्येव प्रियसंयोगं विप्रयोगं प्रियाज्जनात् ।
जातिं मृत्युं जरां चैव कुर्वन्ति प्राणिनां सदा ॥ ११०
दुःखवीजानि तान्येव तान्येवोग्राश्च शत्रवः ।
शोककर्तॄणि तान्येव तान्येव सुखहेतवः ॥ १११

---

१ [ विमुह्यते ].

तान्येव कर्मभाण्डानि समादायात्र जन्तवः ।
सुखदुःखानि विक्रेतुं प्रयान्ति गतिपत्तनम् ॥ ११२

इति बहुविधकर्मदोषजालं समुदयसंग्रहकारणं सबन्धम् ।
जननमरणरोगशोकमूलं यतिपतिना कथितं यथार्थतत्त्वम् ॥ ११३

पुनरपि यतिराडधःप्रयातां दुरितवशेन समश्नुतां फलानि ।
कथयितुमुरुधीश्चकार बुद्धिं तरतमदुःखयुतानि तानि राज्ञे ॥

इति धर्मकथोद्देशे चतुर्वर्गसमान्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
पापफलप्रकथनो नाम
चतुर्थः सर्गः ।

---

## [ पञ्चमः सर्गः ]

अनन्तसर्वमाकाशं[१] मध्ये तस्य प्रतिष्ठितः ।
सुप्रतिष्ठितसंस्थानो लोकोऽयं वर्णितो जिनैः ॥ १

वेत्रासनाकृतिरधो मध्यमो झल्लरीनिभः ।
ऊर्ध्वो मृदङ्गसंस्थानो लोकानामियमाकृतिः ॥ २

तिर्यग्लोकप्रमाणेन रज्जुरेका प्रमीयते ।
तया चतुर्दश प्रोक्तास्त्रिलोकायामरज्जवः ॥ ३

अचलेन्द्रादधः सप्त ऊर्ध्वं सप्त विभाजिताः ।
ऊर्ध्वाधोलोकयोराहुर्मध्यमष्टप्रदेशिकम् ॥ ४

---

१ [ अनन्तं सर्वमाकाशं ].

घनोदधिर्घनवातस्तनुवातश्च ते त्रयः ।
वायवो घनसंघाता लोकमावेष्ट्य धिष्ठिताः ॥ ५
मूले षोडश संख्याता मध्ये द्वादश संमिताः ।
दशोनयोजनास्त्वेते तयोर्बाहुल्यतः स्थिताः ॥ ६
घनोदधेस्तु सप्तैव घनवातस्य पञ्च वै ।
तनुवातस्य चत्वारि योजनान्याहुरादितः ॥ ७
पञ्च चत्वारि च त्रीणि योजनान्यथ मध्यमे ।
योजनार्धं च गव्यूतिं गव्यूत्यर्धं[1] च मस्तके ॥ ८
नारकी वाथ तैरश्ची मर्ती दैवी च निर्वृतिः ।
गतयः पञ्च निर्दिष्टा मुनिभिस्तत्त्वदर्शिभिः ॥ ९
तासां गतीनां पञ्चानां नारकी प्रथमा गतिः ।
हिंसाद्यभिरता जीवास्तां विशन्त्यशुभप्रदाम् ॥ १०
अधोगतिश्च सामान्यात्सैवं[2] सप्तप्रभेदतः ।
सप्तानां सप्त नामानि वर्णितान्यृषिसत्तमैः ॥ ११
घर्मा वंशा शिलाख्या च अञ्जनारिष्टका तथा ।
मघवी माघवी चेति यथाख्यातमुदाहृताः ॥ १२
अन्तयुक्तप्रभाशब्दा रत्नशर्करवालुकाः ।
पङ्को धूमस्तमश्चैव सप्तमश्च तमस्तमः ॥ १३
प्रस्तारैः कुतपश्चाशादिन्द्रका(?) नरकालये ।
त्रयोदशैव घर्मायां द्वौ द्वावूनतरावधः ॥ १४
त्रिंशत्पञ्चकवर्गश्च पञ्चादश दशत्रयः ।
पञ्चोनं शतसहस्रं पञ्च चैव यथाक्रमम् ॥ १५

---

१ क गव्यूतोर्ध्वं. २ [ सामान्या ].

चतुःशतसहस्राणि अशीत्यभ्यधिकानि च ।
नरकाणां तु सप्तानां प्रभेदा वर्णिता जिनैः ॥ १६
तेषामत्यल्पनरका जम्बूद्वीपसमा मताः ।
सर्वेभ्योऽभ्यधिका ये तु ते त्वसंख्येययोजनाः ॥१७
नरकाः पुरसंस्थाना इन्द्रकाख्या नराधिप ।
श्रेणीबद्धास्तथाष्टासु दिक्ष्वथात्र प्रकीर्णकाः[1] ॥ १८
अधोऽधो नरका रुन्ध्रो[2] अधोऽधस्तीव्रवेदनाः ।
अधोऽधोऽभ्यधिकायुष्का अधोऽधस्तु घनं तमः ॥ १९
षष्ठसप्तमयोः शीतं शीतोष्णं पञ्चमे स्मृतम् ।
चतुर्थेऽत्युष्णमुद्दिष्टं तेषामेव महीगुणाः ॥ २०
नारकाणां च दुःखस्य तेषां शीतोष्णयोः पुनः ।
वर्णगन्धकृतीनां च उपमान्या न विद्यते ॥ २१
मेरुप्रमाणोऽयःपिण्ड उष्णे क्षिप्तो[3] यदृच्छया ।
विलीयते क्षणेनैव एवं तस्योष्णता मता ॥ २२
तावत्प्रमाणोऽयःपिण्डः शीते क्षिप्तो यदृच्छया ।
सहसैव हिमीभावमुपयाति न संशयः ॥ २३
जम्बूद्वीपं निमेषेण यो गन्तुं शक्तिमान्सुरः ।
षड्भिर्मासैर्व्रजेदन्तं महतो नरकस्य सः ॥ २४
या गतिर्दुःखभूयिष्ठा वर्णिता मुनिपुङ्गवैः ।
तां गतिं ये प्रपद्यन्ते तान् वक्ष्यामि विशेषतः ॥ २५
हिंसायां निरता नित्यं मृषावचनतत्पराः ।
परद्रव्यस्य हर्तारः परदाराभिलङ्घिनः ॥ २६

१ म प्रवीर्णताः, [ प्रकीर्तिताः ]. २ [ रौद्राः ]. ३ क उष्णक्षिप्तो.

मिथ्यातिमिरसंछन्ना बह्वारम्भपरिग्रहाः ।
कृष्णलेश्यापरिणताः[1] श्वाभ्रीमाधिवसन्ति ते ॥ २७
पञ्चानामिन्द्रियाणां हि पञ्चार्था रतिहेतवः ।
तेषां प्राप्तिनिमित्ताय कर्म चिन्वन्ति दारुणम् ॥ २८
अयःपिण्डो जले क्षिप्तो नादं[2] प्राप्य न तिष्ठति ।
कर्मभारसमाक्रान्ता जीवाश्च नरकालये ॥ २९
पिष्टपाकमुखोष्ट्रिके(?) उष्ट्रिकास्वपरे पुनः ।
उत्पद्यन्ते ह्यधोवक्त्राः पापिष्ठा वेदनातुराः ॥ ३०
उत्पद्य हि दुराचारा अत्युष्णात्परिपीडिताः ।
पतन्त्युत्पत्त्य तत्रैव तप्तभ्राष्ट्रे तिला इव ॥ ३१
नारका भीमरूपास्ते दुर्बलाः पूतिगन्धिनः ।
अव्यक्तहुण्डसंस्थानाः पण्डकाश्[3]चण्डभाषिणः ॥ ३२
उत्पन्नान्सहसा दृष्ट्वा विभङ्गज्ञानदृष्टयः ।
स्मरन्तः पूर्ववैराणि आधावन्ति समन्ततः ॥ ३३
त्रासयन्तोऽथ गर्जन्त आक्रोशन्तोऽस्त्रपाणयः ।
जन्मान्तरे कृतान् दोषान् ख्यापयन्तः श्रयन्ति तान् ॥३४
पूर्वापराधानात्मीयान् ज्ञात्वा तु दुरनुष्ठितान् ।
भयत्रस्तविषण्णाङ्गा आरभन्ते पलायितुम् ॥ ३५
दृष्ट्वा पलायमानांस्तान्त्रोद्भुकामास्त्वरान्विताः ।
भीषयन्तः प्रचण्डाश्च अनुधावन्ति धावतः ॥ ३६
संप्राप्य भयवित्रस्ताननाथान् शरणागतान् ।
मुसलैर्मुद्गरैः शूलैस्ताडयन्तोऽथ मर्मसु ॥ ३७

---

१ क कृष्णलेश्याः परिणताः. २ [ नाधः ]. ३ क षण्ढकाः.

विलपन्तो रुषन्तश्च[1] ताड्यमाना दुरात्मभिः ।
पतन्ति भिन्नमूर्धानो धरण्यां वेदनार्दिताः ॥ ३८

सिंहव्याघ्रमृगद्वीपो[2](?) गृध्रोलूकाश्च वायसाः ।
अयस्तुण्डैर्नखैर्दन्तैः पतितान्भक्षयन्ति तान् ॥ ३९

केचिल्लोहेषु निक्षिप्य तुदन्तो लोहयष्टिभिः ।
मांसमृष्टरसासक्तान्मांसवत्खादयन्ति तान् ॥ ४०

जिह्वान्त्राणि[3] च नेत्राणि केचिदुत्कृत्य[4] निर्दयाः ।
ग्रथित्वाथ शिरासूत्रैः शोषयन्ति शिलातले ॥ ४१

छित्त्वा ये परगात्राणि प्रादुर्घ्यूपितकाँ[5](?) मुहुः ।
तेषां वक्त्राण्यधःकृत्वा धूपयन्ति मुहुर्मुहुः ॥ ४२

हस्तपादमथ च्छित्वा कर्णनासापुटानि च ।
रुधिरार्द्राणि संगृह्य क्रूराः कुर्वन्ति दिग्बलिम् ॥ ४३

केचिच्छूलेषु निक्षिप्य भ्रामयन्त्यभिधावतः ।
निक्षिप्योलूखले कांश्चिच्चूर्णयन्त्यधमा भृशम् ॥ ४४

पिषन्ति गन्धवत्कांश्चिन्मृद्नन्ति निर्दयाः ।
क्रकचैर्दारयन्त्यन्यानक्षीण्युत्पाटयन्ति च ॥ ४५

पिबन्ति रुधिराण्यन्ये शस्त्रैर्विद्धा[6] शिरः पुनः ।
ग्रसन्ति मुखतः कांश्चित्पादतस्त्वपरे परान् ॥ ४६

छिन्दन्त्यसिभिरङ्गानि क्षुरिकाभिर्द्रुणन्ति च ।
टङ्कैः शिरःकपालानि वासिभिर्वदनानि च ॥ ४७

---

१ [ रुदन्तश्च ]. २ [ द्विपाः ]. ३ म जिह्वां प्रागे. ४ क उद्धृत्य. ५ क प्राधर्घूपितका (?). ६ क शस्त्रैर्विद्धं.

तृणैरावेष्ट्य सर्वाङ्गं ज्वालयन्त्यग्निना भृशम् ।
शङ्कूर्मूर्धस्वथोत्खन्य तुदन्त्यक्षीणि चोल्मुकैः ॥ ४८
मक्षिका मशकाश्चैव वृश्चिकाश्च पिपीलिकाः ।
खादयन्ति व्रणान्यन्ये स्रवद्रुधिरपूतिनः ॥ ४९
ये हत्वा प्राणिनः पूर्वं मांसभक्षणतत्पराः ।
तान्मुहुर्यातनाभिश्च दण्डयन्ति परस्परम् ॥ ५०
लोभाद्रागात्प्रमादाद्वा राजवाक् लम्भ्यते मदात् ।
प्रभुत्वाच्च कुसामर्थ्यादसदुक्त्वान्यहिंसकान् (?) ॥ ५१
इदानीं तव सामर्थ्यानं[1] पश्याम इति नारकाः ।
उत्कोटबन्धनं कृत्वा तोदयन्ति मुहुर्मुहुः ॥ ५२
दन्तानुत्पाट्य यन्त्रेण विच्छेद्य दशनच्छदान् ।
प्रवेशयन्ति वक्त्रेषु श्वसद्भीमभुजङ्गमान् ॥ ५३
जिह्वाश्चोत्पाटयन्त्यन्ये भवसंबन्धिवैरिणः ।
मूषातप्ततरं ताम्रं पाययन्त्यनृतप्रियान् ॥ ५४
शूलैस्तीक्ष्णतरैर्घोरैः क्रोधविभ्रान्तदृष्टयः ।
चरणेषु प्रविध्यन्ति रुदन्तान्करुणस्वनैः[2] ॥ ५५
[3]रुदन्त्याक्रन्दतामन्ये अयस्सूचिभिरङ्गुलीः ।
अपरानतिवैरेण खण्डशः कल्पयन्ति च ॥ ५६
ऊरू परशुभिश्छित्त्वा खादयन्ति परे परान् ।
वध्वान्ये पाणिपादं च क्षिपन्ति चितकाग्निषु[4] ॥ ५७

---

१ क सामर्थ्यात्, [ सामर्थ्यं ]. २ [ रुदतः करुणस्वनैः ]. ३ [ रदन्ति ].
४ [ चितिकाग्निषु ].

एवं बहुविधैर्दण्डैः खण्डयन्त्यकृतात्मनः ।
वैभङ्गज्ञानविज्ञानां[1]स्तेयानन्दपरायणान् ॥ ५८
आर्द्रचन्दनकल्कानि विषाक्तानि ससंभ्रमात् ।
लिम्पन्त्यन्तर्विदाहीनि परस्त्रीसुरतप्रियान् ॥ ५९
माल्याभरणवस्त्राणि तप्तताम्रमयानि च ।
धारयन्ति परस्त्रीणां रतिसंगमकर्कशाः ॥ ६०
सोपचारैरुपास्थत्य सुरताहवकोविदान् ।
हावभावविलासिन्यो ब्रुवन्त्यः स्वागतक्रियाः ॥ ६१
पूर्वजन्मकृतस्नेहात्संबन्धाच्च विशेषतः ।
भावयन्ति स्त्रियः पुंस आश्लिष्यन्ति प्रिया इव ॥ ६२
ताभिराश्लिष्यमाणाश्च दग्धसर्वाङ्गयष्टयः ।
घृतवत्प्रविलीयन्तेऽन्याङ्गनाङ्गप्रसाङ्गिनः ॥ ६३
तस्मिन् देशे तथा विद्धि आवयो रतिविभ्रमः ।
इति ब्रुवन्तः पापिष्ठा बाधन्ते बाधितान्पुरा ॥ ६४
स्त्रीणां पुरुषरूपाणि स्त्रीरूपाणि नृणां पुनः ।
सुतप्तैरायसैस्ताम्रैर्विकुर्वन्ति परस्परम् ॥ ६५
कुक्कुटान्मेषमार्जारान्नकुलाँल्लावकाञ्शुनः ।
उपभोगे त्वकर्मण्याननर्थान्पोषयन्ति ये ॥ ६६
सर्वेषां भोगिनां यास्तु सर्वा द्रविणसंपदः ।
ता ममैव न चान्येभ्यो भवन्त्वित्यतिश्रद्धयः ॥ ६७
आसामनर्थमूलान्ये कुर्वन्ति स्पृहया नराः ।
दुःखस्यान्तं न पश्यन्ति चिरं श्वाभ्र्यां वसन्ति ते[2] ॥ ६८

१ क विज्ञाना(:)स्तेयानन्द. २ [ अतिस्पृहया ].

कुम्भीपाकेषु पच्यन्ते केचिदत्युष्णभस्मसु ।
भृज्यन्ते तिलवत्केचिच्चूर्ण्यन्ते तुषवत्परे ॥ ६९
क्रकचैस्तुल्यनिर्भिन्ना[1] खण्ड्यन्ते मर्मसन्धिषु ।
निस्तुद्यन्ते पुनः शूलैस्ताड्यन्ते मुसलैः परे ॥ ७०
पीड्यन्ते तिलयन्त्रेषु इक्षुयन्त्रे तथापरे ।
चक्रयन्त्रैरथोद्भ्राम्य पातयन्ति रसातले ॥ ७१
शतधा खण्डखण्डानि भूत्वान्ते[2] क्लेशभागिनः ।
पतन्ति चण्डवेगेन पातालेष्वथ मूर्च्छिताः ॥ ७२
पुनः पर्याप्तसर्वाङ्गाः सहसैव समुत्थिताः ।
विद्रवन्तो भयत्रस्ताः समारोहन्ति पर्वतान् ॥ ७३
ते शैलाच्छीर्यमाणाङ्गाश्चूर्णयन्त्यभिधावतः (?) ।
खादन्ति व्याघ्रसिंहर्क्षा गुहाभ्यस्तु विनिर्गताः ॥ ७४
ततोऽवतीर्य पश्यन्तो भुञ्जानान्पिबतो जनान् ।
याचमानाः शनैर्यान्ति क्षुत्तृष्णापरिमर्दिताः ॥ ७५
तेऽभ्युत्थाय सुसंभ्रान्ताः पाद्यार्घ्याद्यैर्यथाविधि ।
उपचारान्बहून्कृत्वा प्रयच्छन्त्युष्णपीठिकाः ॥ ७६
सुतप्तकृष्णलोहस्य गुलिकाः खण्डशः कृताः ।
यन्त्रैर्विदार्य वक्त्रेषु क्षिपन्ति त्रस्तचेतसाम् ॥ ७७
शुष्कताल्वोष्ठजिह्वास्यान्निष्कृपास्तृपयार्दितान् ।
प्रतप्तताम्रमापात्य क्रन्दतः पाययन्ति तान् ॥ ७८
केचिदुष्णप्रतीकारं कुर्वन्त इव निर्दयाः ।
गलग्रहेण संगृह्य मज्जयन्त्युष्णवारिषु ॥ ७९

१ म कृतजैस्तुल्य°, [ °शूल° ]. २ म भूत्वा ते.

अनेकोपद्रवाकीर्णां विषक्षारजलाविलाम् ।
नदीं वैतरणीं घोरां तारयन्ति समन्ततः ॥ ८०

तां नदीं क्लेशतस्तीर्त्वा वनं पश्यन्ति पुष्पितम् ।
तद्वनान्तेषु यातेषु वायुरेकः प्रकुप्यति ॥ ८१

प्रपतन्त्यसिपत्त्राणि अयःपिण्डफलानि च ।
विषमिश्राणि पुष्पाणि सद्यः प्राणहराणि च ॥ ८२

विशीर्णछिन्नभिन्नाङ्गा अधिरुह्योग्रवेदनाः ।
पतन्ति कण्टकाकीर्णे विषदग्धे[1] महीतले ॥ ८३ ॥

विषैर्निर्दह्यमानाङ्गा रसन्तैः[2] करुणस्वनैः ।
भिन्दन्ति क्रिमयोऽङ्गानि दशन्ति च पिपीलिकाः ॥ ८४

कृष्णाः श्वानो विलुम्पन्ति कर्पन्त्यसितवायसाः[3] ।
दशन्ति कृष्णसर्पाश्च चूपयन्त्यथ मक्षिकाः ॥ ८५

पुनरन्तर्मुहूर्तेन सर्वपर्याप्तविग्रहाः ।
असातवेदनीयस्य पाकतः संभवन्ति ते ॥ ८६

नेत्रैः पश्यन्त्यनिष्टानि श्रोत्रैः शृण्वन्ति दुःस्वरान् ।
घ्राणैर्जिघ्रन्ति दुर्गन्धान् स्पृशन्त्यङ्गैश्च कर्कशान् ॥ ८७

आस्वादन्ते[4] निरास्वादान् जिह्वाभिर्गतसत्क्रियाः ।
इन्द्रियार्थैरकल्याणैर्व्याकुलीकृतचेतसः ॥ ८८

नोदासीना न मित्राणि न प्रिया न च बान्धवाः ।
सर्वत्र नरकावासे सर्व एवापकारिणः ॥ ८९

---

१ [ विषदिग्धे ]. २ म रुशन्तः करुणास्वरैः. ३ म दर्पन्त्यसितवायसाः. ४ क आस्वादन्ति, [ आस्वदन्ते ].

विनिपातसहस्राणि प्रापयन्तः कृतागसः ।
बाधन्ते क्रोधसंरब्धा आचतुर्थ्यादितोऽसुराः ॥ ९०
आसुरं भावमाश्रित्य रागविष्टब्धचेतसः ।
एकत्र स्थापयित्वा तान्योधयन्ति परस्परम् ॥ ९१
कांश्चिच्छाल्मलिमारोप्य जन्मसंबन्धवैरिणः ।
अधश्चोर्ध्वं च कर्षन्तः पातयन्ति भृशं मुहुः ॥ ९२
उदारा रुरुवक्षांसि तेषां भिन्दन्ति कण्टकाः ।
अधस्ताज्ज्वालयन्त्यग्निं ग्रसन्त्युपरि राक्षसाः ॥ ९३
कङ्कैः काकैश्च तुद्यन्ते मशकाश्च दशन्ति तान् ।
भीपयन्ते पिशाचाश्च भर्त्सयन्त्यसुराः पुनः ॥ ९४
एवं पापविपाकेन दुःखान्येषां समश्नुताम् ।
नारकाणां पुनस्तत्र शीतोष्णमतिदुस्सहम् ॥ ९५
नरकादुष्णबाहुल्यान्नारकश्चेद्विनिर्गतः ।
प्रावेक्ष्य(?) ग्रीष्ममध्यान्हे वन्हिं सुखमलप्स्यतं[१]ः ॥ ९६
तथैव शीतबाहुल्यात्प्रावेक्ष्य चेद्विनिर्गतः ।
तुषारराशिहेमन्ते वरं सुखमलप्स्यतं[१]ः ॥ ९७
लभेत जलधीन्सर्वान्पिबेदत्युष्णतृष्णया ।
उदरं यदि गृण्हीयान्नोपशाम्यति तत्तृषा ॥ ९८
यानि लोकेषु सर्वेषु फलपर्णतृणानि च ।
भक्ष्यन्ते चेत्तथा चापि क्षुदग्निर्नोपशाम्यति ॥ ९९
एवं बहुप्रकारैस्तु दुःखान्याप्नुवतां भृशम् ।
सुखनामापि भूपाल नारकाणां न विद्यते ॥ १००

१ [ अलप्स्यत ].

पालयित्वा महीं कृत्स्नामुपभुञ्ज्यात्मनः श्रियम् ।
चक्रवर्ती प्रयातीति नरकं कोऽत्र विस्मयः ॥ १०१
मनसैव विचिन्त्यात्र विविधा भोगसंपदः ।
मनश्चक्रधरं[1] श्वाभ्रीं प्रयातीत्येष विस्मयः ॥ १०२
क्षुद्रमत्स्यः किलैकस्तु स्वयंभुरमणोदधौ[2] ।
महामत्स्यस्य कर्णस्थः स्मृतिदोषादधोगतः ॥ १०३
सप्तम्यां तु त्रयस्त्रिंशत् षष्ठ्यां द्वाविंशतिः स्मृताः ।
पञ्चम्यां दशसप्तैव चतुर्थ्यां दश वर्णिताः ॥ १०४
तृतीयायां तु सप्तैव द्वितीयायां त्रयः स्मृताः ।
प्रथमायां भवत्येकः सागरः संख्ययायुषः ॥ १०५
दशवर्षसहस्राणि प्रथमायां जघन्यतः ।
उपर्युपरि योत्कृष्टा सैवाधोऽधो जघन्यकः ॥ १०६
चिरकालं तु दुःखानि नारका नरकालये ।
अपवर्त्यायुषो यस्मात्प्राप्नुवन्ति ततो भृशम् ॥ १०७
सुखं निमेषतन्मात्रं नास्ति तत्र कदाचन ।
दुःखमेवानुसंबन्धं[3] नारकाणां दिवानिशम् ॥ १०८
इत्येवं नरकगतिः समासतस्ते
संप्रोक्ता बहुविधयातनामिदानीम् ।
तैरश्चीं गतिमत उत्तरं प्रवक्ष्ये
निर्व्यग्रः शृणु नरदेव सत्त्वबुद्ध्या ॥ १०९
श्वाभ्रीणां तिमिरगुहासु तासु दुःखं
पापिष्ठाश्चिरमनुभूय कर्मशेषात् ।

१ म चक्रधरः. २ [ स्वयंभूरमणोदधौ ]. ३ [ °संबद्धं ].

तैरश्चीं पुनरथ संभजन्त्यभद्रा-
स्तत्रापि प्रतिभवदुःखमेव शश्वत् ॥ ११०

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
नरकगतिभागो नाम पञ्चमः सर्गः ।

---

## [ षष्ठः सर्गः ]

अथैवमुर्वीपतये मुनीन्द्रः प्रारब्धवान्वक्तुमतास्तिरश्चाम् ।
गतेर्विभागं बहुदुःखघोरमीषल्लघुत्वं नरकादसह्यात् ॥ १
तिर्यक्त्वसामान्यत एकमेव स्थानप्रभेदाच्च[1] चतुर्दशाहुः ।
कायात्षडेवेन्द्रियतश्च पञ्च गुणाश्च[2] पञ्चैव वदन्ति तज्ज्ञाः ॥ २
एकेन्द्रियाः स्थूलतमाश्च सूक्ष्माः पर्याप्तकास्तद्विपरीतकाश्च ।
द्वित्रीन्द्रियास्ते चतुरिन्द्रियाश्च पर्याप्त्यपर्याप्तियुतास्त्रयस्तु ॥ ३
पर्याप्त्यपर्याप्तकसंज्ञ्यसंज्ञाः पञ्चेन्द्रियास्ते च चतुष्प्रकाराः ।
भूम्यम्बुवाय्वग्निवनत्रसानां कायाश्च षड्जीवनिकायमाहुः ॥ ४
भूम्यम्बुवाय्वग्निमयास्तु जीवा भवन्ति लोके गणनाव्यतीताः ।
वनस्पतीनामसवस्त्वनन्ताः स्पर्शात्सुखं दुःखमथो विदन्ति ॥ ५
शङ्खाक्षकुक्षिक्रिमिशुक्तिकाद्यास्ते द्वीन्द्रियाः स्पर्शरसौ विदन्ति ।
पिपीलिकामत्कुणवृश्चिकाद्यास्ते त्रीन्द्रियाः स्पर्शरसौ च गन्धम् ॥६
पतङ्गषट्पान्मधुमक्षिकाद्याः स्पर्शं रसं गन्धमथापि रूपम् ।
मृगोरगाण्डोद्भवतोयजाद्याः शब्देन पञ्चेन्द्रियजातयस्ते ॥ ७

---

१ क °प्रभेदाश्च. २ [ गुणाच्च ].

एकेन्द्रियत्वं प्रतिपद्य जीवा नानाविधाश्छेदनभेदनानि ।
विमर्दनोत्तापनहिंसनानि सवेदनादीन्यवशाः सहन्ते ॥ ८
प्रपिष्यमाणाश्च विदार्यमाणा विशीर्यमाणा विविधप्रकारैः ।
प्रपीड्यमाना बहुशोऽपि जीवा द्वित्रीन्द्रियाद्या वधमाप्नुवन्ति ॥ ९
ज्वलन्महादीपशिखां प्रविश्य प्रदह्यते नेत्रवशात्पतङ्गः ।
घ्राणेन्द्रियेष्टान्विषपुष्पगन्धानाघ्राय नाशं भ्रमराः प्रयान्ति ॥१०
क्रव्यादगीतध्वनिनावकृष्टा मृगा वराकाः खलु वागुरासु ।
निपात्य घोरैरुपहन्यमानास्त्यजन्ति सद्यः प्रियजीवितानि ॥११
प्रसन्नतोयेषु सरस्सु मत्स्याः संक्रीडमाना रसनप्रसक्ताः ।
ग्रस्तामिषास्त्रस्तशरीरचित्रास्सवेदनास्ते सहसा म्रियन्ते ॥ १२
वन्याः करीन्द्राः सुखमाप्तुकामाः करेणुगात्राभिरतिप्रसक्ताः ।
तोदप्रकारैरभिहन्यमाना विचेतसोऽरण्यसुखं स्मरन्ति ॥ १३
एते त्वथैकेन्द्रियसंगदोषादलब्धकामाः प्रलयं प्रयान्ति ।
सर्वेन्द्रियाणां वशमभ्युपेता नश्यन्ति जीवा इति कः प्रवादः॥१४
खरोष्ट्रहस्त्यश्वतराश्च गोणा भूमीश्वराणामिह वाहनार्थम् ।
अत्यर्थभारातिनिरोधखिन्नाः क्षुत्तृट्श्रमाः क्लेशवधं[1] भजन्ते ॥ १५
विचित्रसंकल्पिततीव्रबन्धैर्दण्डाङ्कुशैस्तोत्रकशाप्रहारैः ।
प्रपीडनोत्ताडनवाहबन्धैर्दुःखान्यनेकानि समश्नुवन्ति ॥ १६
केचित्पुनः पाशनिबद्धकण्ठाः केचिन्महापञ्जररुद्धकायाः ।
पदेषु केचिद्दृढरज्जुबद्धा विनष्टसौख्या गमयन्ति कालम् ॥ १७
कपिञ्जला लावकवर्तकाश्च मयूरपारावतटिट्टिभाद्याः ।
नभश्चराः पादविलग्नपाशा नश्यन्ति पापैरभिहन्यमानाः ॥ १८

१ [ °श्रमक्लेशवधान् ].

वक्रा बलाका जलकुक्कुटाश्च क्रौञ्चाः सकोरण्डवचक्रवाकाः[1] ।
जलाश्रयोपाश्रयजीविनस्ते [2]भृशं सहस्तेषु वधं प्रयान्ति ॥ १९
क्षुधाभिभूतास्तु तिमिङ्गिलाद्या ग्रसन्त्यथान्योन्यमनल्पकायाः ।
खगा खगांश्चापि मृगा मृगांश्च परस्परं घ्नन्त्यबलान्बलस्थाः[3] ॥२०
अहो वराका हरिणाः शशाश्च वृका वराहा रुरवः कुरङ्गाः ।
[4]न्यहर्त्रीलिकाद्याः(?) परिपुष्टकाया त्वङ्मांसहेतोर्विलयं प्रयान्ति २१
केचित्पुनः शुष्कगलोष्ठजिह्वास्तृषाग्निनान्तः प्रविदह्यमानाः ।
संशुष्कपर्णोपनिपातभीता विश्वस्तचित्ता न तृणं चरन्ति ॥ २२
निपातदेशेष्वभिलीनकायैर्व्याधैः समुत्त्रासितचेतसोऽन्ये ।
छायां विदेहस्य[5] विशङ्कमानाः सुखेन पातुं न पयो लभन्ते ॥२३
क्रव्यादवर्गैरनुवाच्यमानाः[6] केचित्प्रधावन्त्यनवेक्ष्य शावान् ।
वित्रस्तनेत्राः प्रतिनष्टचेष्टाः केचिद्भयार्ताश्च मुखे पतन्ति ॥ २४
बृहत्पृषत्कैः प्रविदारिताङ्गाः प्रविश्य केचिद्गिरिगह्वराणि ।
सवेदनानिष्प्रतिकाररूपाः प्राणान्विषण्णा जहति क्षणेन ॥ २५
व्याघ्रान्विनिघ्नन्त्यथ चर्महेतोर्वालापदेशाच्चमरीं वराकाम् ।
मांसापदेशाच्छशसूकरादीन् विषाणमुक्तासु करीन्द्रवर्गान् ॥ २६
अकारणक्रोधकषायिताक्षाः स्वभावनिर्वृत्तनिबद्धवैराः ।
नखैर्विषाणैर्दशनैः सुतीक्ष्णैरन्योन्यमर्मस्वभिताडयन्ति ॥ २७
केचित्पुनर्मानकषायदोषात्संभूय नागाश्वखरोष्ट्रयोनौ ।
आरुह्यमाणाः परिपीड्यमाना भारातिखिन्ना विवशीक्रियन्ते ॥२८
मानात्पुनः केचन सूकरत्वं मानातिमानात्कुकुलं प्रयान्ति ।
परावमानप्रसवं च दुःखं तिर्यग्गतौ नैकविधं श्रयन्ते ॥ २९

---

१ म °कोरण्डक°, [ कारण्डव° ]. २ [ नृशंस° ]. ३ [ बलिष्ठाः ]. ४ क न्यहेलिकाद्याः. ५ [ स्वदेहस्य ]. ६ [ अनुव्रज्यमानाः ].

मायादिभिर्ये परिवञ्च्य जीवान् संपोषयामासुरथ स्वदेहान् ।
तेषां शरीराणि गतौ तिरश्चां मांसाशिनां तान्यशनीभवन्ति ॥३०
केचित्पुनर्लोभकषायदोषाद्द्रव्यं परेषां मुमुषुर्विमूढाः ।
तिर्यक्कुयोनौ प्रतिबद्धकायान् तान्व्याधवर्गाः[1] परिभक्षयन्ति ॥ ३१
तिर्यग्गतेर्दुःखमनन्तपारं वक्तुं न शक्यं चिरकालतोऽपि ।
तामेव घोरामिह ये प्रयान्ति संक्षेपतस्तान्प्रथमं प्रवक्ष्ये ॥ ३२
ये वञ्चकाः कूटतुलातिमानैः परोपतापं जनयन्ति नित्यम् ।
वाचान्यदुक्त्वा क्रिययान्यदेव कुर्वन्ति कृत्यं विफलं परेषाम् ३३
हस्तार्पितं ये परकीयमर्थमादाय कस्माच्च्यपलोपयन्ति ।
ऐश्वर्यदर्पाद्बलवीर्यतो वा परानवज्ञाय मृषा ब्रुवन्ति ॥ ३४
तक्रं दधि क्षीरघृतं गुडं वा रसैस्तथान्यैः प्रतिमिश्रयन्ति ।
ते हीनसत्त्वाः कृपणा विपुण्याः पतन्ति तिर्यग्वडवामुखेषु ॥ ३५
प्रवालमुक्तामणिकाञ्चनानि विकृत्य तद्रूपसमानि ये तु ।
नॄन्वञ्चकास्ते[2] रतिमाप्नुवन्ति तिर्यग्गतिं वै विवशा वसन्ति ॥ ३६
कूटाक्षवृत्ते कुटिलस्वभावाः स्तेनप्रयोगैश्च दुरीहिता ये ।
परोपघातं जनयन्ति ये तु ते यान्ति जीवास्तु गतिं तिरश्चाम् ॥३७
सुसंयता वाग्भिरधिक्षिपन्तो ह्यसंयतेभ्यो ददते सुखाय (?) ।
तिर्यङ्मुखास्ते च मनुष्यकल्पा द्वीपान्तरेषु प्रभवन्त्यभद्राः ॥३८
केचित्पुनर्वानरतुल्यवक्त्राः केचिद्गजेन्द्रप्रतिमाननाश्च ।
अश्वानना मेण्ढ्रमुखाश्च केचिदजोष्ट्रवक्त्रा महिषीमुखाश्च ॥ ३९
द्वाविंशतिर्वर्षसहस्रमायुर्वदन्ति तज्ज्ञा वसुधाश्रितानाम् ।
जलाश्रितां(?) सप्तसहस्रमात्रं दिनत्रयं विद्ध्यनलाश्रितानाम्[3] ॥४०

१ म व्याधि. २ [ नृवञ्चकास्ते ]. ३ क. जलाश्रितां.

वाय्वाश्रितानां त्रिसहस्रमुक्तं वनस्पतीनां दश वर्णयन्ति ।
द्विकेन्द्रियाणां द्विपडेव वर्षा[1] आयुःप्रमाणं परमं प्रकर्षात् ॥ ४१
त्रिकेन्द्रियाणां दिनमेकहीनं पञ्चाशदुक्तं परिमाणमायुः ।
पण्मासमायुश्चतुरिन्द्रियाणां पञ्चेन्द्रियाणां पृथगेव वक्ष्ये ॥ ४२
चतुष्पदानामथ कर्मभूमौ जलाश्रितानां च हि पूर्वकोटिः ।
त्रिशून्यसप्ताहुरथाण्डजानां[2] त्र्यष्टौ सहस्राणि सरीसृपाणाम्[3] ॥ ४३
अन्तर्मुहूर्तं कथितं तिरश्चां जघन्यमायुर्मुनिपुङ्गवेन ।
कुलप्रसंख्यामथ योनिसंख्यां समासतस्ते कथयामि राजन् ॥४४
आदित्यसंख्या खलु शून्ययुक्तात्कोट्यः कुलानामथ वेदितव्याः(?)
द्वाविंशतिस्तत्र महीमयानां प्रभञ्जनाप्त्वात्मकयोश्च सप्त ॥ ४५
तिस्रस्तु वेद्यास्त्वनलाश्रितानामष्टोत्तरा विंशतिरङ्घ्रिपानाम् ।
द्विकेन्द्रियाणां विहिताश्च सप्त अष्टौ पुनस्त्रीन्द्रियदेहिनां च ॥ ४६
नव प्रदिष्टाश्चतुरिन्द्रियाणां सरीसृपाणां च नव प्रणीताः ।
अर्धत्रयोक्ता दश तोयजानां विहङ्गमानां खलु षड्विकघ्नाः[4] ॥४७
चतुष्पदानां दश संप्रदिष्टाः पञ्चोत्तरा विंशतिराद्यगत्याम् ।
षड्विंशतिर्देवनिकायजानां चतुर्दशोक्तास्त्वथ[5] मानुषाणाम् ॥४८
चतुर्गतीनां च निगोदजीवा अवस्थिता ये च निगोदतायाम् ।
भूवायुतोयाग्निमतां च सप्त योनीसहस्राणि शताहतानि ॥ ४९
वनस्पतीनां दश वर्णयन्ति द्वे द्वे पुनस्ते विकलेन्द्रियाणाम् ।
चत्वारि तिर्यक्सुरनारकाणां मनुष्यवर्गस्य चतुर्दशाहुः ॥ ५०
अनेकयोनिष्वतिदीर्घकालं परिभ्रमन्तः परिहीनसौख्याः ।
अहो वराका दुरितानुवन्धा दुःखस्य नान्तं वत यान्ति जीवाः ५१

---

१ क वर्षान्. २ म °संसाद्रिकमण्ड°. ३ म भुजङ्गमे षड्गुणिताश्च सप्त
४ [ षड्द्रिकघ्नाः ]. ५ म षड्रि ( षड्भि ? ) द्रिकघ्नास्त्वथ.

क्रमेण यान्तः कुलकोटिजालान् जातिं जॆरा मृत्युमनेकरोगान् ।
समश्नुवानाः कुटिलस्वभावास्तिर्यग्गतौ नैव सुखं लभन्ते ॥५२
शारीरदुःखं त्वपरैरवाप्य तन्मानसं कैश्चिदवाप्यते च ।
तथोभयं प्राप्यत एव कैश्चिद्दुःखं परं जन्तुभिरप्रमेयम् ॥ ५३

अथैवं तिरश्चां महादुःखकालं
कुलं जीवितं चेन्द्रियाणां [ ⏑ – – ] ।
गतिं कायभेदं फलं कारणं च
बभाषे यतीशो यथावन्नृपाय ॥ ५४

पुनर्मानुषीं तां गतिं संप्रवक्तुं
मुनीन्द्रे प्रवृत्ते सुनिर्वेदमुक्ता ।
सभा चापि कर्णे निधायात्मचित्तं
तुतोपातिमात्रं नरेन्द्रेण सार्धम् ॥ ५५

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
तिर्यग्गतिविभागो नाम
षष्ठः सर्गः ।

---

[ सप्तमः सर्गः ]

गतिं तृतीयां शृणु संप्रवक्ष्ये समासतो मानुषजातिरेका ।
तामेव भूयो द्विविधां वदन्ति भोगप्रतिष्ठामथ कर्मसंस्थाम् ॥ १
पञ्चोत्तरास्ते कुरवः प्रदिष्टा यथैव राजन्नथ देवसंज्ञाः ।
हैरण्यका हैमवताश्च रम्या हयाद्रवर्षा अपि पञ्च पञ्च ॥ २

---

१ म जरान्मृत्यु°. २ [ दि संख्याः ].

क्षेत्रस्वभावप्रतिबद्धसौख्या संख्यानतस्त्रिंशदधो भवन्ति ।
तासां पुनर्भोगभुवां विशेषान्पृथक्पृथग्लक्षणतोऽभिधास्ये ॥ ३
जाज्वल्यमानोत्तमरत्नचित्रा सुवर्णधातुप्रविकीर्णशोभाः ।
वैडूर्यमुक्तावरवज्रसारैरलङ्कृता स्त्रीरिव भूर्विभाति ॥ ४
महेन्द्रनीलै रुचकप्रभैश्च कर्कतनैर्भास्वरसूर्यकान्तैः ।
रुजाहरैः शीतलचन्द्रकान्तैस्तता मही भात्यतिसर्वकालम् ॥ ५
क्वचिच्च बन्धूकमनश्शिलाभा क्वचिच्च जात्यञ्जनहैमवर्णा ।
क्वचिच्च सारङ्गविहङ्गतुल्या क्वचिच्छशाङ्काङ्कुरसप्रभा च ॥ ६
तृणानि यस्यां चतुरङ्गलानि मृदूनि सौगन्धिकगन्धवन्ति ।
दशार्धवर्णान्यतिकोमलानि नित्यप्रवृत्तानि मनोहराणि ॥ ७
मन्दप्रवाताभिहतानि तानि परस्परस्पर्शजनिस्वनानि ।
मृष्टानुनादश्रवणक्षमानि गन्धर्वगीतान्यतिशेरते च ॥ ८
तुरुष्ककालागरुचन्दनानां लवङ्गकङ्कोलककुङ्कुमानाम् ।
एलातमालोत्पलचम्पकानां गन्धान्स्वगन्धैश्च विशेषयन्ति ॥ ९
शीतोष्णवातोरुतुषारवर्षा मेघर्तुकालाशनिविद्युदुल्काः ।
क्षुद्रोगशोकव्यसनेतयश्च न सन्ति यस्यामुपभोगभूमौ ॥ १०
नृपाश्च भृत्याः कृपणा दरिद्राः स्तेनान्यदाराभिहर्ता नृशंसाः ।
पङ्ग्वन्धमूकाः कुणिकुब्जखञ्जाः षट्कर्मधर्माभिरता न यस्याम् ११
तृणं जलं गुल्मलताङ्घ्रिपाश्च विहङ्गमा वा विषकीटसर्पाः ।
परस्पराबाधकरा मृगा वा न सन्ति दुःखोद्भवहेतवस्ते ॥ १२
पर्यन्तवैडूर्यशिलाद्युतीनि प्रफुल्लपद्मोत्पलसंकटानि ।
प्रकृष्टकारण्डवहं वसन्तिं प्रसन्नतोयानि सरांसि भान्ति ॥ १३

१ क संख्यावत°. २ [ °शोभा ]. ३ म माहेन्द्र°. ४ [ स्तेयान्यदाराभिरता ].
५ [ °कारण्डवहंसवान्ति ].

मद्याङ्गतूर्याङ्गविभूषणाङ्गा ज्योतिर्गृहा भाजनभोजनाङ्गाः ।
प्रदीपवस्त्राङ्गवरप्रसंगा दशप्रकारास्तरवस्तु तत्र ॥ १४
अरिष्टमैरेयसुरामधूनि कादम्बरीमद्यवरप्रसन्नाः[1] ।
मदावहानासवनातियोग्यान्मद्याङ्गवृक्षाः सततं फलन्ति ॥ १५
मृदङ्गवीणावरशङ्खतालान्मुकुन्दसंगां व्रजदुन्दुभिश्च[2] ।
सुखानुनादानुरुमर्दलांश्च तूर्याङ्गवृक्षा विसृजन्ति तत्र ॥ १६
किरीटहाराङ्गदकुण्डलानि ग्रीवोरुबाहूदरबन्धनानि ।
स्त्रीपुंसयोग्यानि विभूषणानि विभूषणाङ्गा विसृजन्ति शश्वत् १७
नष्टान्धकारा वसुधाप्रदेशा यैर्द्योतिता भानुशशिप्रकाशैः ।
ते ज्योतिषाङ्गा विपुलप्रकाशा विभान्ति नित्यं नयनाभिरामाः १८
श्रीमण्डपान्माण्डितहर्म्यमालान् डोलागृहान्प्रेक्षणकाङ्गनाङ्गाः ।
[......................................................॥ १९ ] (?)
शाखोपशाखास्वतिभासुरासु प्रवालपत्राङ्कुरपल्लवानि ।
प्रदीपतुल्यानि सृजन्ति नित्यं ते दीपिताङ्गाः[3] सुखदर्शनीयाः २०
दुकूलकौशेयकवालजानि सच्चीनपट्टांशुककम्बलानि ।
वस्त्राणि नानाकृतिवर्णवन्ति वस्त्राङ्गवृक्षा ददते सदैव ॥ २१
सुगन्धिसच्चम्पकमालतीनां पुन्नागजात्युत्पलकेतकीनाम् ।
पञ्चप्रकारा रचिताग्र्यमाला माल्याङ्गवृक्षा विसृजन्त्यजस्रम् ॥२२
ते कल्पवृक्षाश्च दशप्रकारा व्यालिङ्गिताः कामलतावतानैः ।
स्वभावशुद्धाः प्रतिभान्ति शश्वत्प्रियाङ्गनाङ्गं रमणा यथैव ॥ २३
शुवां तृणानां सरसां तरूणां विमुक्तिरुक्ता खलु भोगभूषु ।
ये तत्र गन्तुं प्रभवन्ति सन्तः समासतस्तानिह कीर्तयिष्ये ॥२४

१ [ ॰प्रलम्बान् ]. २ [ सिंहा मृदङ्गदुन्दुभींश्च ]. ३ [ दीपिताङ्गाः ].

भद्राः प्रकृत्या विनयान्विता ये मायामदक्रोधवधेषु मन्दाः ।
सत्यार्जवक्षान्त्यतिदानशूरास्ते संभवन्त्युत्तमभोगभूमौ ॥ २५
दानेन भोगाः सुलभा नराणां दानेन तिष्ठन्ति यशांसि लोके ।
दानेन वश्या रिपवो भवन्ति तस्मात्सुदानं सततं प्रदेयम् ॥ २६
दानं च दाता प्रतिसंग्रहीता देयं ह्युपायं च फलप्रपञ्चम्[1] ।
एतानि दानेऽधिकृतानि राजंस्ते यान्ति जीवाः खलु भोगभूमिम्
दानं पुनस्तद्विविधप्रकारमपात्रपात्रप्रविभागमाहुः ।
मिथ्यादृशोऽपात्रमसंयताश्च पात्रं तु सद्दृष्टिसुसंयता ये ॥ २८
अपात्रदानेन कुमानुषेषु सुपात्रदानेन च भोगभूमौ ।
फलं लभन्ते खलु दानशीलास्तस्मादपात्रं परिवर्जनीयम् ॥ २९
श्रद्धान्वितो भक्तियुतः समर्थो विज्ञानवाँल्लोभविवर्जितश्च ।
क्षान्त्यान्वितः[2] सत्त्वगुणोपपन्नस्तादृग्विधो दानपतिः प्रशस्तः ॥ ३०
सुदृष्टयस्तप्तमहातपस्का[3] ध्यानोपवासव्रतभूषिताङ्गाः[4] ।
ज्ञानाम्बुभिः संशमितोरुतृष्णाः प्रतिग्रहीतार उदाहियन्ते ॥ ३१
शास्त्राणि निःश्रेयसकारणानि आहारदानाभयभेषजानि ।
चत्वारि तान्यप्रतिमानि लोके देयानि विद्वद्भिरुदाहृतानि ॥ ३२
शास्त्रेण सर्वज्ञम्[5]उपैति दाता आहारदानादुपभोगवान्स्यात् ।
दयाप्रदानान्न भयं परेभ्यो व्यपेतरोगस्त्वथ भैषजेन ॥ ३३
कन्यासुभूहेमगवादिकानि केचित्प्रशंसन्त्यनुदारवृत्ताः ।
स्वदोषतस्तानि विवर्जितानि व्यपेतदोषैर्ऋषिभिर्विशेषात् ॥ ३४
कन्याप्रदानादिह रागवृद्धिर्द्वेषश्च रागाद्भवति क्रमेण ।
ताभ्यां तु मोहः परिवृद्धिमेति मोहप्रवृत्तौ नियतो विनाशः ॥ ३५

१ म ह्युपायस्य फलप्रदं च. २ क क्षान्त्याद्यतः. ३ म सुदृष्टयस्तस°. ४ क °व्रतभूरिसाराः. ५ [ सार्वज्ञ्य ].

दुःखाय शस्त्राग्निविषं परेषां भयावहं हेममुदाहरन्ति ।
संताडनोद्बन्धनदाहनैश्च दुःखान्यवाप्नोति गवादिदेयम् ॥ ३६
भूमिः पुनर्गर्भवती च नारी कृष्यादिभिर्याति वधं महान्तम् ।
तदाश्रयाः प्राणिगणाश्च यस्माद्भूदानमस्मान्न विशिष्टमाहुः ॥ ३७
देशे च काले गुणवत्प्रदत्तं फलावहं तद्भवतीति विद्धि ।
लोकप्रसिद्धं व्यवहारमात्राद्दृष्टान्तमेकं शृणु कथ्यमानम् ॥ ३८
कूपात्प्रसन्नैकरसं जलं यद्विसृज्यमानं सरणीमुखेन ।
तदेव नानारसतां प्रयाति द्रव्याण्युपाश्रित्य पृथग्विधानि ॥ ३९
पयो भवेद्धेनुनिपीतमम्भः शुण्ठ्या कटुत्वं मधुरं कदल्या ।
तथेक्षुणा तैर्गुडशर्कराद्यैः कषायसारः क्रमुकाभयाभ्याम् ॥ ४०
सर्पेण पीतं विषमादधाति तिक्तत्वमायाति च निम्बपीतम् ।
आम्लो रसस्तिन्त्रिणिकाकपित्थैः काम्लो भवेदामलकेन पीतम्
देयं तथैकं ह्यनवद्यरूपं दाता च भक्त्या द्विगुणोपपन्नः ।
प्रतिग्रहीतुर्गुणतः फलानि फलन्त्यनेकानि सुखासुखानि ॥ ४२
भुक्तान्नवीर्येण हि केचिदत्र स्त्रीघृतहिंसामदिराभिरक्ताः ।
परापवादाभिरता नृशंसाश्चिन्वन्ति पापान्यसुखप्रदानि ॥ ४३
केचित्पुनर्ज्ञानविशुद्धचित्ता दृढव्रताः शान्तकषायदोषाः ।
जितेन्द्रिया न्यायपथानुपेताः पुण्यानि कर्माणि समर्जयन्ति ॥४४
कुर्वन्ति ये ये न च पुण्यपापमवश्यमाहारबलेन दातुः ।
तांस्तांश्च राजन्स्वविपाककाले ध्रुवं पुनस्तद्द्वयमभ्युपैति ॥४५
असंयतेभ्यो वसतिप्रदानादाहारदानात्सहवासतस्तु ।
यथैव दण्ड्याः सह तैर्गृहेशा आदातृभिर्दानपरास्तथैव ॥ ४६

१ क °भाजः. २ म °स विपाक°.

सुसंयतेभ्यो वसतिप्रदानादाहारदानात्सहवासतस्तु ।
यथैव पूज्याः सह तैर्गृहेशा आदातृभिर्दानपरास्तथैव ॥ ४७
अपात्रदानाच्च कुमानुषाणामनिष्टगात्रेन्द्रियसौख्यभोगाः ।
कुज्ञानसत्त्वद्युतिधीर्यशांसि भवन्त्ययत्नात्स्वयमेव तानि ॥ ४८
सुपात्रदानात्सुरमानुषाणां विशिष्टगात्रेन्द्रियसौख्यभोगाः ।
सज्ज्ञानसत्त्वद्युतिधीर्यशांसि भवन्त्ययत्नात्स्वयमेव तानि ॥ ४९
व्यपेतमात्सर्यमदाभ्यसूयाः सत्यव्रताः क्षान्तिदयोपपन्नाः ।
संतुष्टशीलाः शुचयो विनीता निर्ग्रन्थशूरा इह पात्रभूताः ॥ ५०
ज्ञानं तु येषां हि तपोधनानां त्रिकालभावार्थसमग्रदर्शि ।
त्रिलोकधर्मक्षपणप्रतिज्ञो[1] यान् दग्धुमीशो न च कामवह्निः ॥ ५१
येषां तु चारित्रमखण्डनीयं मोहान्धकारश्च विनाशितो यैः ।
परीषहेभ्यो न चलन्ति ये च ते पात्रभूता यतयो जिताशाः ॥ ५२
सद्दृष्टिसज्ज्ञानचारित्रवद्भ्यो भक्त्या प्रयच्छन्ति सुदृष्टयो ये ।
भुक्त्वा सुखं ते सुरमानुषाणां क्रमेण निर्वाणमवाप्नुवन्ति ॥ ५३
मिथ्यादृशः सद्व्रतदर्शनेभ्यः असंयताः केवलभोगकाङ्क्षाः ।
दत्त्वेह दानं परया विशुद्ध्या ते भोगभूमौ खलु संभवन्ति ॥ ५४
निर्गत्य गर्भाद्दिवसांस्तु सप्त वसन्त्यथाङ्गुष्ठमुपालिहन्तः ।
द्विसप्ततिस्तैस्तु[2] दिनैरथान्यैर्भवन्ति ते षोडशवर्षलीलाः ॥ ५५
स्त्रीपुंसयुग्मप्रसवात्मकास्ते सर्वे विशुद्धेन्द्रियबुद्धिसत्त्वाः ।
सर्वे च सल्लक्षणलक्षिताङ्गाः सर्वे कलाज्ञानगुणोपपन्नाः ॥ ५६
द्वीपः समुद्रो भवनं विमानं सरः पुरं गोपुरमिन्द्रकेतुः ।
शङ्खः पताका मुसलं च भानुः पद्मं शशिस्स्वस्तिकदामकूर्माः ५७

---

१ म त्रिलोककर्म°. २ [ द्विसप्तभि° ].

आदर्शसिंहेभगजेन्द्रमत्स्याश्छत्रासिशय्यासनवर्धमानम् ।
श्रीवत्सचक्रानलवज्रकुम्भा हस्ताग्रपादेषु भवन्ति तेषाम् ॥ ५८
नराश्च सर्वे सुरतुल्यरूपा नार्यः सुरस्त्रीप्रतिमानभासः ।
विचित्रवस्त्रोज्ज्वलभूषणाङ्गाः सयौवनाः सस्मितमृष्टवाक्याः ५९
अन्योन्यगीतश्रवणानुरक्ता अन्योन्यवेषैरवितृप्तकामाः ।
चिरं रमन्ते वनिता नरासु परस्परप्रीतिमुखाः[1] सदैव ॥ ६०
परस्पराक्रीडनसक्तचित्ताः परस्परालङ्कृतकान्तरूपाः ।
परस्परालोकनतत्पराक्षा उदक्कुरौ[2] देवकुरौ च जाताः ॥ ६१
राजंस्त्रिपल्योपमजीविनस्ते हर्याह्वका रम्यकवासिनश्च ।
तान्द्विद्विपल्यद्वयजीविनश्च सुवेषयुक्तास्सुखवार्धिमग्नाः ॥ ६२
हैरण्यका हैमवता नरा ये तेषां तु पल्योपममेकमाहुः ।
सर्वे च भोगाननुभूय पश्चाद्दिवं प्रयान्ति क्षुतजृम्भमात्रात् ॥ ६३
नात्मप्रशंसा न परापवादा मात्सर्यमायामदलोभहीनाः ।
स्वभावतस्ते सुविशुद्धलेश्या यस्मादतस्ते दिवमेव यान्ति ॥ ६४
चक्रायुधस्याप्रतिशासनस्य दशाङ्गभोगप्रभवाच्च सौख्यात् ।
यद्भोगभूमिप्रभवं त्वनन्तं तत्सौख्यमित्येवमुदाहरन्ति ॥ ६५

इति कथितमुदारदानपुण्यं
प्रभवसुखं निरुपद्रवं विशालम् ।
दशविधतरुभिर्विसृज्यमानं
ललिततरं नृपते समासतस्ते ॥ ६६
अशुभशुभफलस्य साक्षिभूता-
मवनिमथो गदितुं मुनौ प्रवृत्ते ।

१ [ नरेषु परस्परप्रीतिसुखाः ]. २ [ उदक्कुरौ ].

अतिहृपिततनूरुहो नरेन्द्रः
श्रवणनिवद्धमना भृशं वभूव ॥ ६७

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशव्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
देवकुरूत्तरकुरुवर्णनो नाम
सप्तमः सर्गः ।

---

## [ अष्टमः सर्गः ]

पट्कर्मधर्माभिरताः सुदेशा द्वात्रिंशदेवात्र विदेहसंज्ञाः ।
ऐरावतो भारतवर्पसाह्वस्ताभ्यां चतुस्त्रिंशदुदाहरन्ति ॥ १
ते पञ्चभिः संगुणिता नरेश शतोत्तरा सप्ततिरेव वा स्युः ।
आर्यास्त्वनार्या द्विविधा मनुष्यास्तत्रोद्भवन्तीत्यृपयो वदन्ति ॥२
ये सिंहला वर्वरकाः किराता गान्धारकाश्मीरपुलिन्दकाश्च ।
काम्वोजवाह्लीकखसौद्रिकाद्यास्तेऽनार्यवर्गे[2] निपतन्ति सर्वे ॥ ३
इक्ष्वाकुहर्युग्रकुरुप्रधानाः सेनापतिश्चेति पुरोहिताद्याः ।
धर्मप्रियास्ते नृपते त एव आर्यास्त्वनार्या विपरीतवृत्ताः ॥ ४
अनेकजात्यन्तरसंकटत्वादज्ञानतः कर्मगुरुत्वदोपात् ।
संसर्गतो दुःश्रुतिदुर्जनानां न लभ्यते मानुपजातिराशु ॥ ५
सामान्यभूते च मनुष्यलोके काम्वोजकाश्मीरकवर्वराणाम् ।
म्लेच्छाद्बहुत्वाददतिदुर्लभं तं सुमानुषत्वं विवुधा निराहुः ॥ ६
तत्रापि भोज्यं हि कुलं न लभ्यं पुलिन्दचाण्डालकुलाकुलत्वात् ।
तथैव रूपं मतिरिन्द्रियाणि आरोग्यमार्थित्वमुदारधर्मम् ॥ ७

---

१ क चार्यवर्गे.

लब्ध्वापि[1] सद्धर्ममती च कृच्छ्रात्सुदुर्धरं घोरतपोविधानम् ।
कषायघोरा विषयारयश्च कुर्वन्ति विघ्नं बहुभिः प्रकारैः ॥ ८
स्वप्नश्च भृत्यो युगचक्रकूर्मा द्यूतं च दास्यं[2] परमाणवश्च ।
रत्नं तथाक्षश्च निदर्शनानि[3] दशोपदिष्टानि मनुष्यलोके ॥ ९
यथैव मेरुः प्रवरो गिरीणां जलाश्रयानामुदधिर्विशिष्टः ।
गोशीर्षवृक्षस्तरुषु प्रधानस्तथा भवानां मनुजत्वमाहुः ॥ १०
ग्रहेषु चन्द्रो मृगराड्मृगेषु नरेषु राजा गरुडोऽण्डजेषु ।
रत्नेषु वज्रं जलजेषु पद्मं यथा तथा सर्वभवेषु नृत्वम् ॥ ११
मनुष्यजातिर्व्रतशीलहीना तिर्यङ्नराणामशुभं ददाति ।
दुःखान्यमेयानि च नारकाणामनन्तशः प्रापयतीति विद्धि ॥ १२
मनुष्यजातिर्व्रतशीलयुक्ता तिर्यङ्नराणामशुभं निहन्ति ।
दुःखान्यमेयानि च नारकाणामुन्मूल्य सिद्धिं नयति क्रमेण ॥१३
सैवेह दानेन समायुता चेद्विशिष्टभोगान् कुरुपूपभोज्य ।
देवत्वमापादयति क्रमेण अतो विशिष्टा नृपतेऽद्वितीया ॥ १४
सद्दृष्टिसज्ज्ञानतपोन्विता चेच्चक्रेश्वरत्वं च सुरेश्वरत्वम् ।
प्रकृष्टसौख्यामहमिन्द्रतां च संपादयत्येव न संशयोऽस्ति ॥ १५
सैकावधी नारकविंशतिस्तु एकास्य जन्तोरबुधैर्मतोऽर्थः ।
मनुष्यलोकं ह्यपरैर्निराहुः केचित्समर्थं न जगत्त्रये च (?)॥१६
तादृङ्महासारवतीमवाप्य मनुष्यजातिं त्रिजगत्प्रजानाम् ।
अल्पार्थमन्याः स्वमतिं निवेश्य भवन्ति भृत्या हि पुनः परेषाम् १७
त्रिलोकमूल्यं नरदेववृत्तमवाप्य ये कोद्रवतण्डुलार्थम् ।
विक्रीय च स्वोननभिज्ञतत्त्वा मूर्खाः परप्रेष्यकरा भवन्ति ॥१८

१ क लुब्ध्वापि. २ क धान्यं. ३ म तथा चक्षुर्निदर्शनानि. ४ म वारकाणां. ५ क °धीनारक°. ६ म ह्यनेरेर्निराहुः. ७ [ प्रधानान् ]. ८ [ निघ्नन्ति ] ९ क °स्वान°., म °स्थान°.

मनुष्यभूमौ व्रतशीलदानमुप्त्वा कषायादितृणान्यपोह्य ।
स्वर्गादिसंप्रापकसौख्यबीजं चिन्वन्ति केचिन्नरजातिलब्धाः[1] ॥१९
धर्मान्विताः सर्वसुखालयाः स्युः पापान्विता दुःखसहस्रभाजः ।
धर्मालसाः सर्वजनस्य भृत्या धर्मोद्यताः सर्वजनस्य नाथाः ॥२०
स्वामिन्प्रभो नाथ तवास्मि भृत्य आज्ञाप्यतां किं करवाणि तेऽद्य ।
इति ब्रुवाणा बहवः पुमांसो व्रजन्ति भृत्यत्वमपेतपुण्याः ॥२१
केचित्परेषां धनजीवितानि लेखप्रयोगैरथ वञ्चयित्वा ।
गत्यापपाकाद्द्रविणं[2] परैस्तु (?) हृत्वा स्वयं ते निधनं व्रजन्ति॥२२
प्रचण्डवातोद्धततुङ्गचञ्चत्तरङ्गभङ्गस्फुरदुग्रमत्स्यम् ।
अगाधमम्भोनिधिमर्थलोभात्प्रविश्य केचिन्मरणं प्रयान्ति ॥२३
अधीत्य विद्याश्च महाप्रभावाः संश्रुत्य तत्त्वार्थगुणानवेत्य ।
स्वेष्टावता न्यायकृता फलेन भिक्षां भ्रमन्तोऽपि न तां लभन्ते ॥२४
आजीवशास्त्राणि बहून्यधीत्य ज्ञात्वा क्रियायोगविभागतां च ।
दुराशया जीर्णमठेष्वपुण्या व्यपेतसौख्या गमयन्ति कालम् ॥२५
शिल्पैरनल्पैः परिकर्मशुद्धैरपुण्यवन्तो बहुदुःखभाजः ।
परान्वराकाः परितोषयन्तो धनाशयात्क्लेशगणान्भजन्ते ॥२६
संसर्गतो ये च निसर्गतो वा लोभाद्भयाद्वा दुरिताश्चितानि ।
कर्माण्यकुर्वंस्त्वपरा मनुष्या जीवन्ति ते प्रेष्यकराः क्रियार्ताः॥२७
पुण्यान्यकृत्वा स्फुटिताग्रपादाः क्षुत्पीडिताः कार्पटिनः कृशाङ्गाः ।
भूमौ शयानाः खरकर्कशायां दीना ह्यभीक्ष्णं[3] खलु भिक्षयन्ति ॥२८
धर्मे मतिं यन्न करोति धीमान्विद्वाञ्जनो यद्वसुना विहीनः ।
रूपान्वितो दुर्भगतामुपैति तत्कर्मणां पापवतां विपाकः ॥ २९

१ म °जाति लब्ध्वा, [ °जातिलुब्धाः ]. २ [ गत्या विपाकात् ]. ३ म दीनान्यभीक्ष्णं.

क्षुद्व्याधिदारिद्र्यवधोग्रवन्धैराक्रोशभीभर्त्सनताडनाद्यैः ।
दुःखैर्विवाधामुपयान्ति सत्त्वा यत्तत्फलं पापकृतं निराहुः ॥३०
अनागसामप्यपराधभावं नृणां समारोप्य समाश्रितानाम् ।
यत्स्वामिभिर्दण्डवधाः क्रियन्ते तद्दुष्कृतानां फलमामनन्ति ॥३१
विवान्धवास्त्यक्तकलत्रपुत्रा विलेपनस्रक्परिवर्जिताश्च ।
मलीमसाः क्षामकपोलनेत्रा दुःखेन जीवन्ति जना विपुण्याः ॥३२
दरिद्रतां नीचकुले प्रसूतिं मौर्ख्यं विरूपत्वमभद्रतां च ।
अकल्पतां वापि समाप्नुवन्ति प्रायः पुमांसः सुकृतेरभावात् ॥३३
निराशयास्ते विभवैर्विहीनाः संश्लाघयन्तः परगेहभोगान् ।
पुण्यैरपेताः स्वकराग्रपात्रा देशाद्विदेशं परिसंचरन्ति ॥३४
नक्तंदिवं क्लेशसमाश्रितानि कर्माण्यनिष्टानि समाचरन्तः ।
दुःखार्दिताः स्रस्तविषण्णचित्ताः स्वेष्टान्यलब्ध्वा मरणं प्रयान्ति ३५
वाधिर्यमान्ध्यं कुणिकुब्जभावं क्लीवत्वमूकत्वजडग्रहांश्च ।
आजन्मनस्ते तदवाप्नुवन्ति प्रायो जना दुष्कृतिनो वराकाः॥ ३६
दुर्गन्धनासामुखकक्षदेशा नपुंसकाः श्मश्रुविहीनवक्त्राः ।
सत्त्वास्तु यत्पुंस्त्वगुणैर्विहीना भवन्ति मन्दा वत दुष्कृतेन ॥ ३७
प्रियाणि कुर्वन्प्रवदन् हितानि ददंस्तथार्थानपि संश्रयांश्च ।
यद्द्वेष्यतां सर्वजनस्य याति तदाहुरार्या दुरितप्रभावम् ॥ ३८
नेच्छाफलाप्तिर्न च इष्टसंपत्प्रियैर्वियोगोऽप्रियसंप्रयोगः ।
सर्वाधिकाराश्च फलैर्विहीना अपुण्यभाजां हि नृणां भवन्ति ॥३९
वर्णोत्तरे पुण्यगुणाभिरम्ये लक्ष्मीमति व्याप्तयशोदिगन्ते ।
यदुर्द्वंशे लभते प्रसूतिं सन्तस्तदाहुः सुकृतानुभावम् ॥ ४०

१ म पुण्यैरपेता. २ [ यदूत्तवंशे ].

मन्नाथवत्सप्रियपुत्रकेति[1] प्रलाल्यमानो[2] नियतं पितृभ्याम् ।
यद्बालभावाद्युवतामुपैति निर्वाच्यरूपः सुकृतं तदूचुः ॥ ४१
यूना वरिष्ठस्तु समस्समेषु मान्यः प्रियस्तात्पितृबान्धवानाम् ।
भोगैर्विचित्रैरुपगूढवेपश्चेक्रीड्यते पुण्यविभूतिदृप्तः[3] ॥ ४२
श्लक्ष्णानि वासांसि महाधनानि विचित्ररागाणि च संवसानि(?) ।
गन्धान्सुगन्धीकुसुमस्रजश्च संसेवमानो रमते स पुण्यः ॥ ४३
शय्यासु मृद्वीषु सुखं शयानो भोगानुरक्ताभिरमा प्रियाभिः ।
विमानपृष्ठेषु रतैर्विचित्रं पुण्यानुभावाद्विलसन्त्यभीक्ष्णम् ॥ ४४
वीणामृदङ्गप्रतिबोधितानि वंशानुनादक्रमरञ्जितानि ।
गेयानि श्रुण्वन्नतिवल्लभानि रात्रंदिवं क्रीडति पुण्यकारी ॥ ४५
सभ्रूविभङ्गाभिनयोपपन्नं वादित्रयालापलयानुकारि[4] ।
नृत्यं प्रपश्यन्नयनातिकान्तं सुकृत्प्रियाभिर्मुदमभ्युपैति ॥ ४६
अपक्वजम्बूफलरागकान्तं कान्तोपनीतं मणिभाजनस्थम् ।
मध्वासवं सत्सुरतोत्सवाढ्यं पिवन्सपुण्यो[5] रमते सुखेन ॥ ४७
भोगान्विताः शास्त्रसनाथवाचो गोष्ठीषु सत्काव्यकलाविदग्धाः ।
मान्याश्च पूज्याश्च नरा नराणां पुण्यैरुपेताः सततं भवन्ति ॥४८
मत्तद्विपस्कन्धगताः सुवेषाः सितातपत्रोच्छ्रितकान्तिकान्ताः ।
पत्तिद्विपाश्वैरनुगम्यमानाः[6] प्रयान्ति केचिन्नृवराः सभाग्याः ४९
नाथोऽयमस्माकमसौ क्षितीशो भुनक्त्ययं ग्रामसहस्रमेकम् ।
संश्लाघ्यमाना इति भृत्यमुख्यैर्व्रजन्ति धीराः सुकृतैस्तु केचित् ५०
कलत्रपुत्रप्रियबन्धुमित्रैः सार्धं सुखानीष्टतमानि हृष्टाः ।
रात्रौ दिवा चानुभवन्ति केचिद्धर्मप्रसादाः[7] सुखिनः पुमांसः ॥५१

१ म पुत्रिकेति. २ म प्रलाप्यमानो. ३ क °विभूतिदृष्टः. ४ क वादित्रयोल्लाप°, [ वादित्रमालाप° ]. ५ क सुपुण्यो. ६ क अधिगम्य°. ७ [ °प्रसादात् ].

शय्यान्नपानाशनवित्तदानैः सन्मानयन्तोऽर्थिजनान्प्रहृष्टाः ।
जीवन्ति केचित्सुखमक्षयार्था धर्मानुभावेन मनुष्यवर्याः ॥५२
सौभाग्ययुक्ता खलु रूपसंपद्रूपत्वमारोग्यगुणैरुपेतम् ।
आरोग्यताभोगपरीतमुख्या भवन्ति पुंसां वहुपुण्यभाजाम् ॥५३
त्वग्घ्राणजिह्वाश्रुतिलोचनानामर्थेन्द्रियाणां प्रियमाचरन्तः ।
प्रत्येकमर्थैर्विविधप्रकारै रूपादिभिर्धर्मपरा रमन्ते ॥ ५४
एको हि पुण्यार्जितदीप्तकीर्तिरुद्वीक्ष्यते पुंभिरुदारशौर्यैः ।
एकश्च धर्मप्रतिवद्धवीर्यः शत्रूननेकान्समरे विजेता ॥ ५५
मनुष्यजातौ भगवत्प्रणीतो धर्माभिलाषो मनसश्च शान्तिः ।
निर्वाणभक्तिश्च दया च दानं प्रकृष्टपुण्यस्य भवन्ति पुंसः ॥ ५६
नानाविधक्षत्रियवंशजाता वसुंधरेन्द्रा ऋषभादिवर्याः ।
आर्हन्त्यमायुर्वरधर्मभक्त्या पूज्याश्च वन्द्याश्च जगत्त्रयस्य ॥५७
केचित्पुनः शान्तकषायदोषा वुधा जिताशाः सुखिनस्त्विहैव ।
परत्र च प्रापितकामभोगा भवन्ति नाथा भुवनत्रयस्य ॥ ५८
धर्मेण देवासुरमानुषाणां स्थानानि नानर्द्धिविशेषवन्ति ।
संप्राप्य सार्वज्ञ्यमनन्तरेण ततो ध्रुवं निर्वृतिमेव यान्ति ॥ ५९
मनुष्यजातिस्तु सुदुर्लभापि न वर्ण्यते संसृतिकारणत्वात् ।
शीलोपवासव्रतभावहीना संसारयत्येव चिरं हि जीवान् ॥ ६०
इदं हि मानुष्यमतीव कष्टं जरारुजाक्लेशशताकुलत्वात् ।
तस्मादृशं कष्टतमं त्वशौचमनित्यता कष्टतमा ततः स्यात् ॥ ६१
शुक्रार्तवोद्भूतममेध्यपूर्णं स्रवन्नवद्वारमनिष्टगन्धम् ।
जन्त्वाकरं व्याधिसहस्रकीर्णं तदा शरीरं शुचिविप्रहीणम् ॥६२

१ क °दीप्ति°. २ म उर्दीक्षते. ३ [ आर्हन्त्यमायु° ]. ४ क. °हीनान्. ५ [ कष्टतरं ]. ६ [ तथा ].

तादृग्विधं कश्मलमुद्वहंस्तु बीभत्सचर्मास्थिशिराप्रणद्धम् ।
पित्तानिलश्लेष्मजराधिवासं को नाम विद्वान्वहतीह गर्वम् ॥६३
विज्ञानरूपद्युतिकान्तिसत्त्वं सौभाग्यवुद्धीन्द्रियबन्धुवित्तम् ।
आयुर्वपुर्मित्रसमागमाश्च क्षणे क्षणेऽन्यत्वमुपैति सर्वाम्[1] ॥ ६४
सन्ध्याभ्ररागस्तनयित्नुविद्युत्फेनोर्मिफुल्लद्रुमबुद्बुदाभम् ।
तृणाग्रलग्नोदकबिन्दुतुल्यं मायोपमं मानुषजन्म शश्वत् ॥ ६५
गर्भेऽथ जातावथ बाल्यकाले[2] तथा युवत्वे स्थविरत्वयोगे ।
अशौचताप्यध्रुवता रुजात्वं सर्वत्र सर्वस्य हि कर्मभूमौ ॥ ६६
आयुर्नराणामथ पूर्वकोटिः प्रकीर्तितोत्कर्षविशेषभावात् ।
अन्तर्मुहूर्तं हि जघन्यतस्तु तत्कर्मभूमौ कथितं प्रमाणम् ॥ ६७

इति धर्मफलं सुखादिलिङ्गं
यतिना वर्णितमर्थवद्विशालम् ।
दुरितस्य फलं समक्षभूतं
तदपि प्रोक्तमनेकखेदभिन्नम्[3] ॥ ६८
सुखदुःखविमिश्रितं तु नृत्वं
कथयित्वार्थगवेषिणे नृपाय ।
सुरलोककथां कथाविधिज्ञो
गादितुं स्पष्टाक्षरां प्रवृत्तः ॥ ६९

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
कर्मभूमिविभागो नाम
अष्टमः सर्गः ।

---

१ [ सर्वम् ]. २ म बाल. ३ क °भेदभिन्नम्.

## [ नवमः सर्गः ]

ततः प्रवक्ष्ये नृप देवलोकांश्चतुर्विधान्सत्कृतिनां निवासान् ।
वैमानिकानां भवनाधिपानां ज्योतिर्गणव्यन्तरसंज्ञकानाम् ॥१
दश प्रकारा भवनाधिपानां ते व्यन्तरास्त्वष्टविधा भवन्ति ।
ज्योतिर्गणाश्चापि दशार्धभेदा द्विषट्प्रकाराः खलु कल्पवासाः ॥२
ये कल्पवासा गणनाव्यतीतास्तेभ्यो प्रसंख्या[1] भवनाधिवासाः ।
तेभ्योऽधिका व्यन्तरदेवसंज्ञा ज्योतिर्गणास्त्वभ्यधिकाश्च तेभ्यः३
सुपर्णनागो दधिदिक्कुमारा दीपाग्निविद्युत्स्तनितानिलाश्च[2] ।
दशोपदिष्टास्त्वसुरैः सहैते द्वौ द्वावथेन्द्रास्तु भवन्ति तेषाम् ॥ ४
भूताः पिशाचा गरुडाश्च यक्षा गन्धर्वकाः किन्नरराक्षसाश्च ।
संख्यानतः किंपुरुषैः सहाष्टौ तिर्यग्जगत्येव निवास एषाम् ॥ ५
सूर्याश्च चन्द्रास्त्वथ तारकाश्च ग्रहाश्च नक्षत्रगणास्तथैव ।
ज्योतिर्गणाः पञ्चविधाः प्रदिष्टाः प्रभाप्रभास्थानगतिस्वभावाः॥६
सौधर्मकल्पः प्रथमोपदिष्ट ऐशानकल्पश्च पुनर्द्वितीयः ।
सनत्कुमारो द्युतिमांस्तृतीयो माहेन्द्रकल्पश्च चतुर्थ उक्तः ॥ ७
ब्राह्मयं पुनः पञ्चममाहुरार्यास्ते लान्तवं षष्ठमुदाहरन्ति ।
स सप्तमः शुक्र इति प्ररूढः कल्पः सहस्रार इतोऽष्टमस्तु ॥ ८
यमानतं तन्नवमं[3] वदन्ति स प्राणतो यो दशमस्तु वर्ण्यः ।
एकादशं त्वारणमामनन्ति तमारणं द्वादशमच्युतान्तम् ॥ ९
कल्पोपरिष्टादहमिन्द्रलोका ग्रैवेयकास्ते नवधा विभक्ताः[4] ।
त्रयस्त्वधस्तात्त्रय एव मध्या ऊर्ध्वं त्रयश्चोत्तरवृद्धसौख्याः ॥१०

१ [ तेभ्योऽतिसंख्या ]. २ [ द्वीपाग्नि ]. ३ क. यमानन्तं नवमं. ४ म पुस्तके एताधिकं पाठान्तरम् 'नवोपरिष्टादहमिन्द्रकल्पास्तेभ्यो महा[illegible]'

ग्रैवेयकेभ्यस्तु महाद्युतिभ्यः पञ्चोपरिष्टाद्विजयं जयन्तम् ।
तं वैजयन्तं ह्यपराजितं च सर्वार्थसिद्धिं च विमानमाहुः ॥ ११
मध्ये भवन्तीन्द्रकसंज्ञकानि श्रेणीगतान्यप्रतिभासुराणि ।
प्रकीर्णकानि प्रततानि राजन् विमानमुख्यानि विभान्त्यजस्रम् ।
दूर्वाङ्कुरश्यामलविग्रहाणि शुकच्छदाभान्यपराणि तानि ।
शिरीषपुष्पप्रतिमप्रभाणि सन्तीन्द्रगोपप्रतिमद्युतीनि ॥ १३
मयूरपारापतकण्ठशङ्खप्रवालजात्यञ्जनदुग्धवर्णैः ।
व्याभिन्नपद्मैर्हरितालभेदैः समानवर्णान्यपराणि भान्ति ॥ १४
आदित्यतेजोऽधिकदीप्तिमन्ति कान्त्या पुनश्चन्द्रमसोऽधिकानि ।
दशार्धवर्णानि मनोहराणि मणिप्रभापल्लवितध्वजानि ॥ १५
ज्वलद्बृहद्रत्नमयैर्विचित्रैर्वैडूर्यनद्धैस्तपनीयकुम्भैः ।
वज्रोपधानैः स्फटिकोपलस्थैस्तम्भैर्मृगाङ्कैः सततं वृतानि ॥ १६
पृथग्विधैर्यैर्गजवाजिरूपैर्भूतैः शकुन्तैर्मकरैर्लताभिः ।
भित्त्याश्रितैस्तैर्मनसाप्यचिन्त्यैः प्रकल्पितान्येव च सर्वकालम् १७
प्रवालमुक्तामणिहेमजालैर्घण्टारवोन्मिश्रितकिङ्किणीकैः ।
विचित्ररत्नस्तवकावलीभिः पर्यन्तलम्बैरतिशोभितानि ॥ १८
माहेन्द्ररत्नोज्ज्वलमालिकानि[२] विशुद्धरूप्यच्छदपाण्डुराणि ।
विशिष्टजाम्बूनदभित्तिकानि महार्घ्यरत्नार्चितभूतलानि ॥ १९
स्वभावशुभ्राणि महाद्युतीनि समीक्ष्य नृणां नयनामृतानि ।
अकृत्रिमाण्यप्रतिमानि नित्यं विमानमुख्यानि विभान्ति तत्र ॥ २०
द्वारैश्च जाम्बूनदवद्धमूलैः स्फुरत्प्रभैर्वज्रमयैः कवाटैः ।
सोपानदेशैस्तपनीयवद्धैर्भिन्नान्धाकाराणि महागृहाणि ॥ २१

१ म प्रकल्प्य तान्येव. २ म °चूलितानि.

सूर्यप्रभैः सूर्यगभस्तितुल्यैश्चन्द्रांशुजालाधिकचन्द्रकान्तैः ।
शुक्रप्रभैः शुक्रसमानभाभिर्ज्वलत्प्रभैः प्रज्वलदग्निकल्पैः ॥ २२
सुगन्धिनानावरधूपवासैः पुष्पप्रकारैर्बहुवर्णकैश्च ।
पृथग्विधैर्न्यस्तवलिप्रकारैरतुल्यकान्तीन्यनिशं विभान्ति ॥ २३
सोद्यानवापी ह्रददीर्घिकाश्च पर्यन्तकान्तस्थितकल्पवृक्षाः ।
सौवर्णशैला रमणीयरूपास्तेषां गृहाणां तु बहिःप्रदेशाः ॥ २४
सुरेन्द्रलोकस्य विभूतिमेतां को नाे वदेद्वर्षसहस्रतोऽपि ।
ये तत्र गच्छन्ति पृथक्पृथक्तान् नराधिप त्वं शृणु संप्रवक्ष्ये २५
दयापरा ये गुरुदेवभक्ताः सत्यव्रताः स्तेयनिवृत्तशीलाः ।
स्वदारतुष्टाः परदारभीताः संतोषरक्तास्त्रिदिवं प्रयान्ति ॥ २६
पाषण्डिनो ये जलवायुभक्षा व्रतोपवासैरकृशाः कृशाङ्गाः ।
बालाः स्वयं बालतपोभिरुग्रैः पञ्चाग्निमध्ये च तपश्चरन्ति ॥ २७
येऽकामतो ब्रह्म चरन्ति लोके बद्धाश्च रुद्धाः खलु चारकस्थाः ।
परार्दिताः क्लेशगणान्सहन्ते ते सर्व एवामरतां लभन्ते ॥ २८
जलप्रवेशादनलप्रवेशान्मरुत्प्रपाताद्विषभक्षणाद्वा ।
शस्त्रेण रज्ज्वात्मवधाभिकामा अल्पर्द्धिकास्ते दिविजा भवन्ति २९
अणुव्रतानां च गुणव्रतानां शिक्षाव्रतानां परिपालका ये ।
संभूय सर्वर्द्धिमतीन्द्रलोके महर्द्धिकास्ते त्रिदशा भवन्ति ॥ ३०
सम्यक्त्वमेकं मनुजस्य यस्य हृदि स्थितं मेरुवदप्रकम्पम् ।
शङ्कादिदोषापहृतं नरेन्द्र न तस्य तिर्यङ्नरके भयं स्यात् ॥ ३१
नाचारवन्तो विकृता विशीला गुणैर्व्यपेता व्रतदानहीनाः ।
असंयताः केवलभोगकाङ्क्षाः सद्दृष्टिशुद्धास्त्रिदिवं प्रयान्ति ॥ ३२

१ क को न्वा ( वा ? ). २ स रुद्राः. ३ क. नरकमवाद्, [ नरकमवाद् ].

ये मार्दवाः क्षान्तिदयोपपन्नाः[1] शमात्मकाः शुद्धशुभप्रयोगाः ।
ऋजुस्वभावा रतिरागहीनास्ते स्वर्गलोकं मुनयो व्रजन्ति ॥ ३३
परीषहाणां क्षणमप्यकम्प्या द्विषट्प्रकारे तपसि स्थिताश्च ।
ये चाप्रमत्ताः समितौ सदा ते त्रिगुप्तिगुप्तास्त्रिदिवं प्रयान्ति॥ ३४
जितेन्द्रिया जीवदयाप्रवृत्ता वर्षावकाशातपवासयोगाः ।
जितोपसर्गास्तु विचूर्णिताशाः कल्पेश्वरास्ते पतयो भवन्ति॥३५
येषां च सज्ज्ञानमुदारवृत्तं सद्दर्शनं चापि तपो विशुद्धम् ।
ग्रैवेयकादावहमिन्द्रलोके ते संभवन्तीति नरेन्द्र विद्धि ॥ ३६
यथैव मेघा शनिशक्रचापविद्युत्तडित्केतुहिमाम्वुवर्षाः ।
नभस्तलेऽस्मिन्सहसा भवन्ति तथा सुराणामपि जन्म वेद्यम् ॥३७
उत्पद्यमानाः शयनीयपृष्ठे अन्तर्मुहूर्तात्परिनिष्ठिताङ्गाः ।
व्याभासमानाश्च दिशो दशापि तपःफलं तेऽनुभवन्ति हृष्टाः ॥३८
प्रजायमानान्सहसा समीक्ष्य सुमङ्गलाविष्कृतपुण्यघोषाः[2] ।
प्रस्फोटिताः क्ष्वेणितमुष्टिनादाः[3](?)कुर्वन्ति देवा मुदिता नमन्तः३९
नृत्यन्ति तत्राप्सरसो वराङ्ग्यो वीणाः सलीलं परिवादयन्ति ।
गायन्ति गीतानि मनोहराणि चित्राणि पुष्पाण्यभितः किरन्ति ४०
ते दिव्यमाल्याम्वरचारुभूषा मनोऽभिनिर्वर्तितसर्वसौख्याः ।
ऐश्वर्ययोगर्द्धिविशेषयुक्ताः प्रियासहाया विहरन्ति नित्यम् ॥४१
दयातपोदानदमार्जवस्य सद्ब्रह्मचर्यव्रतपालनस्य ।
जिनेन्द्रपूजाभिरतेर्विपाकोऽप्ययं स इत्येव विवोधयन्ति ॥ ४२
स्वभावतो वालदिवाकराभाः स्वभावतः पूर्णशशाङ्कसौम्याः ।
स्वभावतश्चारुविभूषणाङ्गाः स्वभावतो दिव्यसुगन्धिगन्धाः ॥४३

१ [ मार्दवक्षान्ति° ]. २ म °पुण्यपापाः. ३ [ प्रस्फोटितक्ष्वेडितमुष्टिनादान् ].

आ जन्मनोऽवस्थितकान्तरूपा आ जन्मनोऽम्लानसुगन्धिमालाः ।
आ जन्मनस्ते स्थिरयौवनाश्च आ जन्मनः प्राप्तमनोऽभिरामाः ४४
नित्यप्रवृत्तातिशयर्द्धियुक्ता नित्यप्रवृत्तामलचारुहासाः ।
नित्यप्रवृत्ताधिकदीप्तिमन्तो नित्यप्रवृत्तोरुसुखालयास्ते ॥ ४५
समुल्लसत्कुञ्चितनीलकेशाः जरारुजाक्लेशशतैर्विहीनाः ।
अनस्थिकायास्त्वरजोऽम्बराश्च सर्वे सुराः स्वेदरजोविहीनाः ॥४६
अपेतनिद्राक्षिनिमेषशोका महीतलस्पर्शविमुक्तचाराः ।
नभश्चरा यानविमानयाना अनूनभोगा दिविजा रमन्ते ॥ ४७
उत्पाटयेयुः स्वभुजेन मेरुं महीं कराग्रेण समुद्धरेयुः ।
आदित्यचन्द्रावपि पातयेयुर्महोदधिं चापि विशोषयेयुः ॥ ४८
व्याप्याशु तिष्ठेयुरथो जगन्ति अदृश्यरूपाः क्षणवद्भवेयुः ।
ईयुर्निमेषाद्वसुधातलान्तं ते कामरूपाश्च भवेयुरीशाः ॥ ४९
इन्द्राश्च सामानिकलोकपालास्तथा त्रयस्त्रिंशदनीकिनश्च
प्रकीर्णकाः किल्बिषिकात्मरक्षा अथाभियोग्याः परिषत्त्रयं च ५०
सौधर्मकल्पप्रभृतिष्वमीषु दशप्रकारा नृप देववर्गाः ।
ज्योतिर्गणा व्यन्तरदेववर्गा न च त्रयस्त्रिंशकलोकपालाः ॥ ५१
सुराङ्गना वैक्रियचारुवेषाः सुविभ्रमाः सर्वकलाप्रगल्भाः ।
विशिष्टनानर्द्धिगुणोपपन्ना गुणैरनेकै रमयन्ति देवान् ॥ ५२
स्वनाथकायानुविकाररूपाः स्वनाथभावप्रियचारुवाक्याः ।
स्वनाथदृष्टिक्षमचारुवेषाः स्वनाथसच्छासनसक्तचित्ताः ॥ ५३
सुसुन्दरीणाममितद्युतीनां मनोहरश्रोणिपयोधराणाम् ।
तासां वपुर्वेषविलासभावान् कथं पुमान्वर्णयितुं हि शक्तः ॥५४
एकः समुद्रो भवनाधिपानां पल्योपमं व्यन्तरकेषु विद्धि ।
ज्योतिर्गणेष्वभ्यधिकं तदेव सौधर्मकल्पे[1] द्विसमुद्रमाहुः ॥ ५५

१ म `कल्पाद्रि .

सप्तैव माहेन्द्रमहाविमाने ब्रह्मेन्द्रकल्पे दश वर्णयन्ति ।
ते लान्तवे चापि चतुर्दशैव समुद्रसंख्या यतिराडवोचत् ॥ ५६
शुक्रे पुनः षोडश ते समुद्राः कल्पेऽष्टमेऽष्टादश सागरास्ते ।
ततः परं विंशतिरानते च द्वाविंशतिस्त्वारणसंज्ञकल्पे ॥ ५७
एकैकवृद्धिर्नवसु क्रमेण ग्रैवेयकेषु क्षितिपोपदिष्टा ।
सर्वार्थसिद्धेः खलु लोकमूर्ध्नि त्रिंशत्त्रयश्चैव समुद्रसंख्याः ॥ ५८
त्रिशून्यपूर्वास्तु दशैव वर्षा जघन्यतस्ते भवनेषु तेषु ।
तथैव ते व्यन्तरदेववर्गे परावरज्ञाः परिमाणमाहुः ॥ ५९
ज्योतिष्मति ज्योतिषदेवलोके पल्योपमस्याष्टमभागमाहुः ।
एकं च पल्यं प्रथमे च कल्पे उत्कृष्टमेवोपरि तज्जघन्यम् ॥ ६०

इत्येवं सुरनिलयांश्चतुष्प्रभेदा-
नादित्यस्फुरितमयूखजालभासः ।
सद्धर्मप्रभवसुखाश्रयान्विचित्रा-
न्संक्षेपाद्यतिपतिरेवमाचचक्षे ॥ ६१

देवानां सुकृतफलान्यथाभिधाय
सिद्धानां त्रिभुवनमस्तकस्थितानाम् ।
तत्सौख्यं परमपदे च शाश्वतं य-
त्प्रारेभे क्षितिपतयेऽभिधातुमीशः ॥ ६२

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
देवलोकवर्णनो नाम
नवमः सर्गः ।

---

१ [ त्रिंशत्त्रय° ].

## [ दशमः सर्गः ]

ऐकान्तिकात्यन्तिकनित्ययुक्तं[1] कर्मक्षयोद्भूतमनन्तसौख्यम् ।
शृणु त्वमेकाग्रमना नरेन्द्र समासतो मोक्षमुदाहरिष्ये ॥ १
सर्वार्थसिद्धेस्तु विशालकीर्तेर्गत्वोपरि द्वादश योजनानि ।
प्राग्भारभूमिर्नरलोकमात्रा श्वेतातपत्राकृतिरुद्धभाति[2] ॥ २
बाहुल्यमष्टौ किल योजनानि मध्यप्रदेशे नरदेव विद्धि ।
अङ्गुल्यसंख्येयविभागतोऽन्ते प्रहीयते सा खलु सर्वदिग्भ्यः ॥ ३
संख्यानतस्तत्त्रिगुणाधिकश्च तस्याः परिक्षेपविभाग उक्तः ।
यत्रासतेऽनिन्द्रियसौख्ययुक्ताः सिद्धा विशुद्धा इति शब्दमानाः ४
पूतं च पुण्यं सुगतिप्रधानं कल्याणकं मङ्गलमुत्तमं च ।
लोकोत्तमं तत्परमं पवित्रं परं शुभं शाश्वतमव्ययं च ॥ ५
अनामयं क्लेशजराविहीनमदैन्यमव्याकुलमप्रमेयम् ।
अनिन्द्यमक्षोभ्यमपारमग्र्यं सुखास्पदं तुष्टिकपुष्टिकं च ॥ ६
अचञ्चलं रागविरागवर्ज्यमभेद्यमद्रोहमबाधसंगम् ।
अपात्यमक्षीणमतुल्यमुद्गमनभ्यसूयं श्रवणीयमेव ॥ ७
अशक्रामित्रं[3] ह्यविनाश्यशङ्कं निर्हेतुकं निर्वृति निष्कपायम् ।
अवस्थितं योगवियोगहीनमलेभ्यमक्षुत्तृषमप्रचिन्त्यम् ॥ ८
अभेद्यमच्छेद्यमनाहदाहमदुःखमद्वेष्यमुदारसौख्यम् ।
अनन्त्यमग्राह्यमजात्यमृत्युं सुनिर्मलं तद्व्यपुनर्भवं च ॥ ९
अभव्यसत्त्वैर्मनसाप्यगम्यं गम्यं पुनर्भव्यजनैः सुखेन ।
महामुनीनामभिकाङ्क्षणीयं शिवालयं मोक्षमुदाहरन्ति ॥१०

---

१ [ °नित्यमुक्तं ]. २ [ °विभाति ]. ३ [ अशत्रुमित्रं ]. ४ व. °नरदेव .

काङ्क्षन्ति शक्रप्रमुखा नरेन्द्रा नराः प्रशंसान्ति च शुद्धिमन्तः ।
पाषण्डिनो यं हि परीक्षयन्ति ये तत्र गच्छन्त्यथ तान्प्रवक्ष्ये ॥११
क्षमाविभूषाः पृथुशीलवस्त्रा गुणावतंसा दममाल्यलीलाः ।
निर्ग्रन्थशूरा धृतिवद्धकक्षास्ते मोक्षमक्षीणमभिव्रजन्ति ॥ १२
आ जीवितान्ताद्दृढवद्धसत्त्वा गृहीतयोगव्रतभूरिसाराः ।
ये शीलभारं निरवद्यरूपं सुदुर्धरं बिभ्रति भक्तिभाजः ॥ १३
पिधाय पापास्रवमिन्द्रियाणां सुसंयता गुप्तिमहाकपाटैः ।
तपोऽग्निना संचितकर्मकक्षं दहन्त्यशेषं हि शमार्चिषा ये ॥१४
अतन्द्रिताः संपरिगृह्य योगं जिनेन्द्रवक्त्राभिविनिस्मृतार्थम्[1] ।
ये द्वादशाङ्गं हि तदङ्गपूर्वमधीयते ये गणदेवदृष्टम् ॥ १५
आर्तं च रौद्रं प्रविहाय धीरा धर्म्यं तथा शुक्लमपि प्रशक्तम् ।
शुभान्वितं ध्यानमनन्तभेदं ध्यायन्ति ये ध्यानरता विनीताः ॥१६
लोष्टेष्टकाकाञ्चनवज्रसारे मानापमाने स्वजने जने वा ।
लाभे त्वलाभे सुखदुःखयोर्वा समानभावाः शिवमाप्नुवन्ति ॥१७
अभ्यन्तरं बाह्यमपि प्रशस्तं द्विषट्प्रकारं हि तपोविधानम् ।
चरन्ति ये कर्मविनाशनाय ते सर्व एवाक्षयमोक्षभाजः ॥ १८
क्रोधादयोऽभ्यन्तरशल्यदोषा बाह्याश्च योषिद्धनवाहनाद्याः ।
त्यक्ताश्च[2] यैर्निर्जितमोहसेना तेषां ध्रुवं मोक्षमुदाहरन्ति ॥ १९
यथोदयादुत्थितवालसूर्यो दिने च[3] तस्मिन्परिवर्तते सः ।
तथैव संपूर्णतपोविधाना अखण्डवृत्ताः परमाश्रयन्ति ॥ २०
कषायशाखं स्थिरमोहमूलमज्ञानपुष्पं वहुदुःखपाकम् ।
प्रज्ञाबलाः कर्मतरुं प्रभज्य मुनिद्विपास्तत्र सुखं वसन्ति ॥ २१

१ [ °निस्सृतार्थम् ]. २ क रिक्ताश्च. ३ क दिनेन.

मोहक्षयाज्ज्ञानवृतिक्षयाच्च दृष्ट्यावृतेः संक्षयतः क्रमेण ।
तथान्तरायक्षयतश्च सर्वान् कैवल्यमुत्पाद्य विदन्ति भावान् ॥ २२
गोत्रायुषी नाम च वेदनीयं चत्वारि तान्यप्रतिवीर्यवन्ति ।
कर्माणि संचूर्ण्य विधूतदोषा लोकोत्तरेऽनन्तसुखं लभन्ते ॥ २३
तुम्बीफलं मृत्प्रविलेपमुक्तं यथोदकस्योपरि तिष्ठतीह ।
कृती तथा कर्मविलेपमुक्तस्त्रिलोकमूर्धानमुपैति सद्यः ॥ २४
यथैव बीजं हुतभुक्प्रतप्तं न कल्पते तत्पुनरङ्कुराय ।
तपोऽग्निभस्मीकृतकर्मबीजं तथैव नालं पुनरुद्भवाय ॥ २५
तालद्रुमश्च प्रतिलूनमूर्धा नासंभवादङ्कुरमादधाति ।
स्नेहक्षयादर्चिरुपैति शान्तिं तथैव कर्मक्षयतस्तु सौख्यम् ॥ २६
यथैव लोके नलवर्तितैलं प्रभातकाले युगपत्प्रयाति ।
तथैव कर्माणि समानि येषां ते निर्वृतिं तत्क्षणतो व्रजन्ति ॥ २७
केचित्समुद्घातमुपैतुकामा आत्मप्रदेशात्समयैश्चतुर्भिः ।
लोकत्रयं व्याप्य समीप्रकृत्य कर्माणि निर्वान्ति विनष्टबन्धाः ॥
एकाधिकास्त्वष्टशतान्तसंख्याः सिध्यन्ति सिद्धाः समयेन राजन् ।
जघन्यकालः समयस्त्वथैकः षडेव मासा यदि सोऽधिकः स्यात् ॥
आरोहकाः षट् समये जिनेन्द्राः प्रत्येकबुद्धान्दशधा वदन्ति ।
बोध्यान्पुनस्त्वष्टशतप्रसंख्यान् स्वर्गच्युतास्तेऽष्टशता भवन्ति ॥ ३०
द्वावेव सोत्कर्षशरीरसंस्थौ ह्रस्वान्पुनस्तांश्चतुरो वदन्ति ।
मध्या तथाष्टौ समये प्रसिद्धाः समानदेहाः सुगतिं प्रयान्ति ॥ ३१
यथैव ताड्यद्भ्रिपबीजमोक्ष एरण्डबीजप्रविसर्जनं वा ।
वह्नेः शिखा चोर्ध्वमतीनि तानि तथैव चात्मोर्ध्वगतिस्वभावः ॥ ३२

१ म समुद्घात. २ [समं प्रकृत्य]. ३ क. समयस्तथैकः. ४ [०र्ध्वगतीनि].

असंगतात्पूर्वनियोगतश्च वन्धप्रणाशाद्गमनस्वभावात् ।
विनष्टकर्माष्टकलब्धसौख्या लोकान्तमाश्रित्य वसन्ति सिद्धाः॥३३
शब्दादयो ये सुखदुःखमूला नश्यन्ति यस्मान्नृपते शरीरात् ।
तदाकृतिस्तत्परिमाणमात्राच्छायावदाभाति च सर्वकालम् ॥३४
यथा मधूच्छिष्टकृतं तु छिद्रं चाश्रित्य मूपापतितं सुवर्णम् ।
समं तदङ्गावयवानुपैति तथैव पूर्वाकृतिरेव तत्र ॥ ३५
आदित्यचन्द्रग्रहतारकाश्च विमाननक्षत्रगणप्रमाणाः ।
यथैव तिष्ठन्ति नभस्तलेऽस्मिंस्तिष्ठन्त्यनाश्रित्य तथैव सिद्धाः॥३६
विभाति सूर्यस्तु यथाभ्रमुक्तो यथैव खङ्गश्च विमुक्तकोशः ।
यथा शिलागर्भविमुक्तहेम कृती तथा कर्मरजोविहीनः ॥ ३७
दीपाश्च दीपाश्च यथैव गेहे नान्योन्यवाधां जनयन्ति भान्तः ।
परस्परावाधनविप्रमुक्तास्तथैव सिद्धा निवसन्ति तस्मिन् ॥ ३८
अनेकदीपावलिभासमूहः संतिष्ठतेऽन्योन्यमवाधमानः ।
एवंगुणो रूपिषु विद्यते चेदरूपिणां तत्र किमस्ति वाच्यम् ॥ ३९
ज्योत्स्नातपौ तौ शशिनो रवेश्च मणेश्च दीप्तिर्गुणिनां गुणा हि ।
सद्दृष्टिसज्ज्ञानगुणैर्विशिष्टैः कर्मक्षयादात्मनि संभवेताम् ॥ ४०
व्यवस्थितानेव शशाङ्कसूर्यौ स्वान्स्वान्प्रदेशानवभासयेते ।
लोकं ह्यलोकं युगपत्समस्तं ते ज्ञानभासा प्रतिभासयन्ति ॥ ४१
सम्यक्त्वसज्ज्ञानचरित्रवीर्या निर्वाधता चाप्यवगाहनं च ।
अगौरवालाघवसूक्ष्मता च सिद्धेष्वथाष्टौ हि गुणा विशिष्टाः॥४२
मध्वक्ततीक्ष्णास्यवलेहनेन समानमुक्तं सुखमिन्द्रियाणाम् ।
दशाङ्गभोगप्रभवं सुखं यद्विपाक्तमृष्टाशनभुक्तितुल्यम् ॥ ४३

१ क असंगताः. २ क तु चिन्वं नाश्रित्य. ३ [ संभवेयुः ].

सुरेश्वराणामसकृद्द्युतीनां मनोज्ञनानातनुविक्रियाणाम् ।
यदिन्द्रियार्थप्रभवं हि सौख्यं दग्धव्रणे चन्दनलेपतुल्यम् ॥ ४४
विच्छिन्नकर्माष्टकबन्धनानां त्रिलोकचूडामणिधिष्ठितानाम् ।
न चास्ति राजन्नुपमा सुखस्य तथापि किंचिच्छृणु संप्रवक्ष्ये ४५
तिर्यग्भ्य उत्कृष्टसुखा नराश्च तेभ्यो नरेभ्यः सुखिनो नरेन्द्राः ।
तेभ्योऽधिका भोगभुवो मनुष्याःसिद्धास्ततोऽनन्तसुखा भवन्ति ॥
ज्योतिर्गणा व्यन्तरदेवताभ्यस्तेभ्योऽधिकास्ते भवनाधिवासाः ।
सौधर्मजाताः सुखिनस्तु तेभ्यस्तेभ्यश्च तत्सौख्यतमास्तथोर्ध्वम् ॥
ग्रैवेयकाद्याः सुखिनस्तु तेभ्यस्तेभ्यो विशिष्टा विजयेश्वराद्याः ।
तेभ्यस्तु सिद्धार्थनिवासिदेवास्तेभ्योऽतुलात्यन्तसुखास्तु सिद्धाः
किमम्बरै रागविवर्जितानां किं भोजनैः संशमितक्षुधानाम् ।
जलेन वा किं त्वपिपासितानां किमौषधैः कार्यमरोगिणां च ॥४९
किं वाहनाद्यैरगतिक्रियाणां किमासनाद्यैरपरिश्रमाणाम् ।
किमीक्षणैर्वा सकलार्थभाजां प्रश्नादिभिः किं सदसद्विदां च ॥५०
स्नानादिभिः किं मलवर्जितानां तेजोमयानामथ तेजसा किम् ।
किं युक्तिभिर्निष्ठितकर्मकाणां रागादिभिः किं विगतस्पृहाणाम् ५१
किं वा गृहाद्यैः परिकर्ममुक्तैर्व्यपेतशीतातपबाधनानाम् ।
शब्दादिभिः किं नरदेव बाह्यैरलेपकानां जगदुत्तमानाम् ॥ ५२
यथैव चन्द्रोदधिभास्कराणां न चास्ति काचिद्धचुपमा नृलोके ।
तथैव तेषां परिनिष्ठितानां न विद्यतेऽन्या ह्युपमा नृलोके ॥ ५३
वर्णैश्च वर्णस्य रसै रसस्य स्वरैः स्वरस्याप्युपमात्र यद्वत् ।
अतीन्द्रियाणामपि निर्वृतानामौपम्यसिद्धेर्न हि संभवोऽस्ति ॥५४

१ म सकलोर्मिजोवात्. २ म निरेके.

ये निर्वृतानामुपमां वदन्ति हीनोपमास्ते नृपतेऽनभिज्ञाः।
तुल्योपमानं भुवि नास्ति किंचित्त एव तेषामुपमा भवेयुः ॥५५

आदित्यतोऽन्यो भुवि नास्ति भास्वान्
समुद्रतोऽन्यो न जलाश्रयश्च।
न चोच्छ्रितोऽन्योऽस्ति गिरिर्गिरीन्द्रा-
न्न मोक्षतोऽन्योऽस्ति[1] सुखप्रतिष्ठा ॥ ५६

तुलां विना तुल्यमशक्यमिष्टं मातुं न शक्यं खलु मानहीनम्।
सहेतुकैर्हेतुपथव्यतीतं न शक्यते बोधयितुं वचोभिः ॥ ५७
संसारघोरार्णवपारगाणां द्रव्यादितत्त्वार्थसुदर्शनानाम्।
महौजसां क्षायिकसत्सुखं यन्न तत्समस्तं गदितुं हि शक्यम् ५८
तिर्यङ्नराणां नरकामराणां महीपते क्षीणपुनर्भवानाम्।
पृष्टा त्वया संसदि ते मयोक्ता यथानुपूर्व्या गतयश्च पञ्च ॥५९
तासां चतस्रो गतयो गतीनां संसारसंज्ञाः कथिताः सुधाभिः।
जरारुजामृत्युविवर्जिता ये निःश्रेयसायैव यतस्व राजन् ॥ ६०
घर्माभितप्तां वसुधां यथैव सुरेश्वरः प्रावृषि तोयसेकैः।
प्राह्लादयत्साधुपतिः सभां तां क्लेशार्दितां धर्मजलैस्तथैव ॥ ६१
यतौ ब्रुवाणे जिनधर्मसारं राज्ञः प्रसन्नं वदनं सरागम्।
दिवाकरांशुप्रतिबोधितस्य पद्मस्य कान्तिं सकलां दधार ॥ ६२

निशम्याशु धर्मं बुधा मुक्तकामा
यतीन्द्रस्य पार्श्वे तपस्स्था बभूवुः।
गृहीत्वार्थसंकल्पमल्पे[2] विज ुः
परे गेहधर्मे मतिं संनिदध्युः ॥ ६३

१ [ मोक्षतोऽन्यास्ति ]. २ [ °संकल्पमन्ये ].

अथोत्थाय साध्विन्द्रमिन्द्रः पृथुर्व्यः
परीत्य प्रणम्य प्रणुत्यात्मशक्त्या ।
द्विपेन्द्राधिरूढो नृपश्छत्रमध्ये
महत्या विभूत्या पुरं संप्रविष्टः ॥ ६४

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
मोक्षाधिकारो नाम
दशमः सर्गः ।

---

## [ एकादशः सर्गः ]

गते नरेन्द्रे हितसंकथाभिः स्वयं वराङ्गो मुनिमभ्युपेत्य ।
कृताञ्जलिर्निर्जितकामशत्रुं सांदिग्धबुद्धिः पुनरभ्यपृच्छत् ॥ १
जीवस्य मिथ्यात्वमनादिबद्धं संसारिणस्तच्च कतिप्रकारम् ।
कथं तु सम्यक्त्वमुपैति जीवः संचक्ष्व मिथ्यात्वपथादपायम् ॥ २
एवं स पृष्टो भगवान्यतीशो गुणाकरः शान्तमनाः प्रवक्तुम् ।
मिथ्यात्वसम्यक्त्वविकल्पतत्त्वं प्रारब्धवान्प्रश्नविनिर्णयार्थम् ॥ ३
ऐकान्तिकं सांशयिकं च मूढं स्वाभाविकं वैनयिकं तथैव ।
व्युद्ग्राहितं यद्विपरीतसंज्ञं मिथ्यात्वभेदानवबोध सप्त ॥ ४
जीवादितत्त्वं न च वेत्ति किंचिदेकान्तमिथ्यात्वविमोहितात्मा ।
जात्यन्धमर्त्यः खलु चित्रकर्म द्रष्टुं विबोद्धुं च यथा न जन्तुः ॥ ५
हिंसानुधर्मस्त्वथ वेत्त्यहिंसां संदेहमिथ्यात्वविमूढचित्तः ।
संदिग्धबुद्धिर्न च निश्चिनोति गोऽश्वान्तरं दूरगतं यथैव ॥ ६

१ क °मिथ्योत्थान्धः, [ दुर्भिन्नाः ].

श्रेयो यदज्ञानमिति ब्रवीति संमूढमिथ्यात्वनिरस्तबुद्धिः ।
विषामृतज्ञो विषमेव पीत्वा यथा विनाशं ह्यवशं प्रयाति ॥ ७
आहोस्विदज्ञानतया विबुद्धिर्हिंसामहिंसेति मतिं विधत्ते ।
सुवर्णमिच्छन्नसुवर्णधातुं धमत्यथाज्ञः श्रममभ्युपैति ॥ ८
श्रुतं तदर्थं कलुषीकरोति स्वभावमिथ्यात्वविदूषितात्मा[1] ।
सशर्करं क्षीरमहिः प्रपाय विपाककाले विषमादधाति ॥ ९
चन्द्रार्कनक्षत्रमहीजलाद्या विनीतमिथ्यात्वविमोहितस्य ।
देवा दिवि स्वर्गतिभिः पताका मतिर्मरुद्भिः समुदीरिते[2] च ॥१०
कुदृष्टिदृष्टान्तविनष्टमार्गैर्[3]व्युदग्राहिताख्यो[4] हतधर्मिमनुष्यः ।
चौरेण नीतो गहनान्तराणि यथैव जात्यन्धगणः प्रणष्टः ॥ ११
सतः पदार्थान्विपरीतदृष्टिर्विपर्ययं पश्यति बुद्धिदोषात् ।
जवेन नावी जलमध्ययायी यथा महीपर्वतकाननानि ॥ १२
अभव्यमिथ्यात्वमनाद्यनन्तमनाद्यनन्तश्च यथैव कालः ।
भव्यात्मनां सान्तमनादि तच्च तेष्वेव केषामपि सादि सान्तम्॥१३
मिथ्यात्वतो मोहविवृद्धिमाहुर्मोहात्प्रवृत्त्युद्भवमामनन्ति ।
प्रवृत्तितोऽनेकविधं हि जन्म दुःखं ततो जन्मवशादवश्यम्॥१४
मिथ्याविनाशात्क्षयमेति मोहो मोहक्षयान्नश्यति सा प्रवृत्तिः ।
प्रवृत्तिनाशान्न च जन्म तत्स्यात्तन्नाशतो नाशमियर्ति दुःखम्॥१५
दुःखप्रणाशात्सुखमभ्युपैति नृदेवविद्याधरभोगभूषु ।
तपोऽग्निना दग्धमलः क्रमेण निर्वाणसत्सौख्य[5]मुपैति जीवः ॥१६
स्पृष्टं यदा दर्शनमात्रमेतद्येनेह जीवेन मुहूर्तमेकम् ।
संसारवासे बृहदुग्रदुःखे स पुद्गलानां परिवर्ततेऽर्धम् ॥ १७

१ क °विरूक्षितात्मा. २ म समधीरिते, [ समुदीरते ]. ३ [ °मार्गो ]. ४ म व्यद्ग्राहिताभ्यो, [ व्युद्ग्राहिताख्यो ]. ५ क निर्वाणतत्सौख्य°.

गृहीतसम्यक्त्वमतिः स्थिरात्मा षट्षष्टिकालं जलधिप्रसंख्यम् ।
स्वर्गावनिक्षेमसुखं निषेव्य पश्चादवाप्नोति च मोक्षसौख्यम् ॥ १८

सम्यक्त्वरत्नान्न परं हि रत्नं
सम्यक्त्वमित्रान्न परं हि मित्रम् ।
सम्यक्त्वबन्धोर्न परोऽस्ति बन्धुः
सम्यक्त्वलाभान्न परोऽस्ति लाभः ॥ १९

त्रिकालविद्भिस्त्रिजगच्छरण्यैर्जीवादयो येऽभिहिताः पदार्थाः ।
श्रद्धानमेषां परया विशुद्ध्या सद्दर्शनं सम्यगुदाहरन्ति ॥ २०
नैसर्गिकं तद्ध्युपदेशजं च सद्दर्शनं तद्द्विविधं जिनोक्तम् ।
तत्क्षायिकं ह्यौपशमं च मिश्रं तदेव भूयस्त्रिविधं वदन्ति ॥ २१
यथैव चक्षुः पटलावृतं यन्न पश्यति द्रव्यगुणादितत्त्वम् ।
तदेव भूयः पटलादपेतं समीक्षते द्रव्यगुणादिभावान् ॥ २२
तथैव मिथ्यापटलावृतं यत्सम्यक्त्वचक्षुर्न च वीक्षतेऽर्थान् ।
तदेव सज्ज्ञानशलाकयाशु समञ्जितं पश्यति सर्वभावान् ॥ २३
प्रसन्नमिथ्यामलकर्दमेषु जीवेषु जीवादिरथावगम्यः ।
यथैव भूशैलवनप्रदेशः संदृश्यते शान्तमलास्वथाप्सु ॥ २४
मिथ्यान्धकारोदयमन्दभावे सवेदकः पश्यति जीवतत्त्वम् ।
यथैव वैडूर्यमणिप्रदीपो गृहे घटादीनवलोकतेऽर्थान् ॥ २५
व्यपेतदुर्दर्शनमोहनीयो यथोऽपि कः पश्यति सर्वभावान् ।
यथैव मेघादपनीतमूर्तिर्लोकं विवस्वानिव दीप्तरश्मिः ॥ २६
प्रशान्तपङ्कोदकतुल्यमाद्यं वैडूर्यरत्नप्रतिमं द्वितीयम् ।
तत्क्षायिकं बालदिवाकराभं निम्नक्रयाणामुपमा भवन्ति ॥ २७

१ क. [illegible] २ क. [illegible] [ [illegible] ]. ३ ग [illegible]

मिथ्यानिवृत्तिं लभतेऽन्तरात्मा सम्यक्त्वलाभादपरिश्रमेण ।
ज्ञानं ततो ज्ञेयविशेपदर्शि ज्ञानेन सद्भावगुणोपलब्धिः ॥ २८
सद्भावविज्ञप्तिफलोदयेन ध्रुवं विजानाति हिताहितानि ।
हिताहितज्ञो मतिमानवश्यं संसारवासे न रतिं करोति ॥ २९
विभक्तसंसारनिवासरागो बिभेति जात्याद्यसुखावहेभ्यः ।
भयार्दितः प्राणिगणेपु नित्यं दयापरः स्यान्निरवद्यभावः ॥ ३०
तया पुनः स्थापयते मनस्स्वं मनः प्रसादाज्जयतीन्द्रियाणि ।
जितेन्द्रियस्त्यक्तपरिग्रहः स्याद्विरक्तसंगो विहरत्यथैकः ॥ ३१
ईर्यापथादिष्वपि चाप्रमत्तो निर्वेदसंवेगविशुद्धभावः ।
परीपहान्दुर्विषहान्विजित्य तपस्क्रियां तां यतते यथोक्ताम् ॥३२
संप्राप्य सार्वज्ञ्यमनुत्तमश्रीर्विधूय कर्माणि निरस्तदोषः ।
निःश्रेयसां शान्तिमुदारसौख्यां लब्ध्वा चिरं तिष्ठति निष्ठितार्थः ॥
इत्येवमुर्वीश्वरसत्सुताय धर्माभिरागोद्यतसत्क्रियाय ।
सम्यक्त्वमिथ्यात्वफलप्रपञ्चं सविस्तरं साधुपतिर्जगाद ॥ ३४
मुनीन्द्रवाक्यादवबुद्ध्य तत्त्वं विहाय मिथ्यात्वमनादिबद्धम् ।
प्रहृष्टरोमाङ्कुरिताङ्गयष्टिः कृताञ्जलिर्वाक्यमिदं बभाषे ॥ ३५
अणुव्रतानां परिपालका ये ते मङ्गलं ये च तपश्चरन्ते ।
स्थातुं तपस्युग्रतमे न शक्तो व्रतानि देहि[1] कुरु मे प्रसादम् ॥ ३६
भवत्प्रसादोदयलब्धदृष्टिः कुतीर्थदुर्मार्गनिवृत्तदृष्टिः ।
नरामरैरप्यविकम्प्यदृष्टिर्व्रतानि गृह्णाम्यहमात्मशक्त्या ॥ ३७
मदोद्धतैः क्षत्रियपुङ्गवैस्तैः परस्पराघातनिमित्तजातम् ।
विहाय तद्युद्धमुखं तदेकं[3] मुने परप्राणिदया ममाशु[4] ॥ ३८

१ क द्रुतं. २ म अनुत्तमा श्रीः. ३ [ तथैकं ]. ४ [ ममास्तु ].

परोपघातानृतदुर्वचांसि परस्वहारित्वमपार्थरोपः ।
पराङ्गनालिङ्गनसंगसौख्यमाजीवितान्तादमुचं यतीश ॥ ३९
निशम्य भव्यस्य वचो मुनीन्द्रः प्रसन्नभावस्य समाहितस्य ।
कृताभ्यनुज्ञैः स्वयमेव तस्मै चकार सम्यग्व्रतरोपणानि ॥ ४०
तेषां व्रतानां बहुभिः प्रकारैः फलान्यभिप्रेतफलप्रदानि ।
इहाप्यमुत्रापि यशस्कराणि प्रदर्शयामास नृपात्मजाय ॥ ४१
अन्धो यथा तुष्यति नेत्रलाभान्निधेः प्रलाभाच्च यथा दरिद्रः ।
तथा गृहीतव्रतभारसारो ह्यभूतपूर्वां मुदमाससाद ॥ ४२
महर्षिपादावभिनूय भूयस्तपोऽधिकाञ्शीलनिधींश्च साधून् ।
प्रदक्षिणीकृत्य पुनः प्रवन्द्य विसर्जयामास यथानुपूर्व्या ॥ ४३
गृहीतसम्यक्त्वदृढव्रतात्मा आत्मर्षिदेवैः कृतसाक्षिकस्तु ।
मुनेर्गुणांस्तान् हृदि संविधार्य लब्धाभ्यनुज्ञः पुरमभ्यगच्छत् ॥ ४४
पुरं विशालं प्रविभक्तशालं चन्द्रांशुजालामलकीर्तिमालम् ।
अरातिसैन्यक्षपणातिकालं विवेश वृद्धैः क्रमशः सलीलम् ॥ ४५
नरेन्द्रपुत्रो नगरं प्रविश्य वयोपचारं पितरौ समीक्ष्य ।
प्रणम्य पादं प्रणिपातनार्हं सुखं निविष्टो मुनिसंकथाभिः ॥ ४६
तथा तपस्वी विजहार यत्र ततश्चकार स्वशिरः शयानः ।
बालस्वभावं प्रविहाय विद्वान्प्रज्ञानुवृत्तिं प्रचचार धीरः ॥ ४७
प्रातः कुमारः कृतमङ्गलार्थो जिनेन्द्रबिम्बार्चनतत्परोऽभूत् ।
ततो गुरून्साधुतमान्प्रपूज्य पश्यत्युपस्थानगतः स्वकार्यम् ॥ ४८
तत्रोपविष्टो जिनदेवमार्गं प्रकाशयन्संकथयन्परेभ्यः ।
विचारयन् हेतुभिरप्रदृष्टैः पुरोत्तमेऽरंस्त तदा नराङ्गः ॥ ४९

१ म कृताभिमुखैः. २ [ संनिभाय ]. ३ [ नयोपचारं ]. ४ [ तथा स्वकार्ये ].

स्थानासने निष्क्रमणे सभासु शय्याधिरोहे क्षुतजृम्भणेषु ।
सदा नमस्कारपदानि पञ्च करोति सद्भावपुरस्सराणि ॥ ५०
प्रजेष्टकारी[1] मितमृष्टभाषी विशिष्टशास्त्रार्थनिविष्टबुद्धिः ।
अशिष्टशासी खलु शिष्टपाली कुदृष्टिदृष्टान्तपथैरपेतः[2] ॥ ५१
ग्लानातिबालस्थविराङ्गनानां मर्यादया पश्यति कार्यजातम् ।
दयापरान्धर्मरुचीन्विनीतान्प्राज्ञांश्च सन्मानयते यथावत् ॥ ५२
नृपस्तु पुत्रस्य गुणानुदाराञ्जनेरितान्संसदि संनिशम्य ।
प्रहृष्टचेताः प्रियकृत्प्रजानां कृतार्थमात्मानममंस्त सद्यः ॥ ५३
स्वपुत्रसत्कृत्यनुरक्तबुद्धेर्नृपस्य चित्तानुगतं विदित्वा ।
अनन्तचित्राजितदेवसाह्वा[3] विज्ञापयन्[4]मन्त्रिवरा नरेन्द्रम् ॥ ५४
प्रकृत्यनुज्ञातगुणो विनीतो दक्षः कृतज्ञश्च कृती सुशास्त्रः ।
एतेषु सर्वेषु भवत्सुतेषु योग्यः प्रजाः पालयितुं वराङ्गः ॥ ५५
तेषां हितप्रीतिनिवेदकानां स्वराज्यसंवर्धनतत्पराणाम् ।
निशम्य वाक्यान्यनुमन्य राजा राज्याभिषेकाय शशास सर्वान् ॥
आज्ञापितास्ते वसुधेश्वरेण अमात्यसेनापतिमन्त्रिवर्गाः ।
श्रेष्ठिप्रधानाः पुरवासिनश्च संपादयांचक्रुरभीप्सितानि ॥ ५७
वीथिप्रवेशोद्धृतकेतुमाला विन्यस्तनानाबलिभक्तिचित्राः ।
पर्णापिधानोज्ज्वलपूर्णकुम्भाः सतोरणालम्बितलोलमालाः ॥५८
सुगन्धिसच्चन्दनकुङ्कुमाक्ता महार्घ्यवस्त्राभरणा युवानः ।
गृहीतचित्रध्वजपाणयस्ते आजग्मुरत्युज्ज्वलचारुवेषाः ॥ ५९
पुराङ्गना मङ्गलयोग्यलीलाः सलज्जिकाः सिञ्जितभूषणाढ्याः ।
अलङ्कृताङ्ग्यः समदाः सलीलं समन्ततो निर्ययुरम्बुजास्याः ॥

१ क प्रचेष्टकारी. २ क पथैरुपेतः. ३ [ °धीवराह्वा ]. ४ [ व्यज्ञापयन् ].

शुभे मुहूर्ते करणे तिथौ च सौम्यग्रहेषूपचयस्थितेषु ।
सिंहासने श्रीमति राजपुत्रं निवेशयां पूर्वमुखं वभूवुः ॥ ६१
आनन्दितप्रीतिमुखे हताशाः पुरप्रवेशं सकलं ननाद (?) ।
वंशा मृदङ्गाः पणवाः स्वरैस्स्वैरापूरयां सर्वदिशां वभूवुः ॥ ६२
अष्टादशश्रेणिगणप्रधाना वहुप्रकारैर्मणिरत्नमिश्रैः ।
गन्धोदकैश्चन्दनवारिभिश्च पादाभिषेकं प्रथमं प्रचक्रुः ॥ ६३
सामन्तभूमीश्वरभोजमुख्या आमात्यसांवत्सरमन्त्रिणश्च ।
ते रत्नकुम्भैर्वरवारिपूर्णैर्मूर्धाभिषेकं मुदिताः प्रचक्रुः ॥ ६४
स्वयं नरेन्द्रो युवराजपट्टं पुरस्कृतश्रीयशसे ववन्ध ।
नृपाज्ञयाष्टौ वरचामराणि संचिक्षिपुस्तान्यभितस्तरुण्यः ॥ ६५
चलत्पताकोज्ज्वलकेतुमाला प्राकारकाञ्ची स्तुतितूर्यनादा ।
प्रपूर्णकुम्भोरुपयोधरा सा पुराङ्गना लब्धपतिस्तुतोष ॥ ६६
सवालवृद्धं जनमात्मनीनं पुराणि राष्ट्राणि च पत्तनानि ।
यानानि रत्नानि च वाहनानि समर्पयद्भूमिपतिः सुताय ॥ ६७
यथा मयि स्नेहनिवद्धचित्ताः सर्वे भवन्तो मम शासनस्थाः ।
तथावनीन्द्रास्तनयस्य नित्यं भवन्तु वश्या इति तानुवाच ॥ ६८
जगज्जना वालनराधिपं तं श्रियोज्ज्वलन्तं नयनाभिरामम् ।
किरीटसत्कुण्डलहारभारं प्रोचुः समीक्ष्यात्ममनोगतानि ॥ ६९
सर्वान्नरेन्द्रानभिभूय भासा रराज सम्यग्युवराज एषः ।
प्रणष्टमेघे गगने निशायां ग्रहानिवैकः परिपूर्णचन्द्रः ॥ ७०
एतस्य पूर्वार्जितपुण्यवीजं विद्मो वयं चेदमितप्रभस्य ।
विसृज्य पूर्वापरयोगतारं समर्चयिष्याम इति न्यवोचत् ॥ ७१

१ प. हतासा. २ म भवन्तु. ३ प. किरीट. ४ [ चैनमतं वा ]. ५ [ न्यवोचन् ].

दायादकानां च नृपात्मजानां चेतांसि तान्याकुलितान्यभूवन् ।
कुलं वलं रूपमपीह लब्ध्वा स्थानं च यन्न ह्यलभामहीति ॥७२
ग्रहाश्च तारा निशि मन्दमन्दं प्रकाशमानाः पुनरर्कभासा ।
आदर्शनं[1] यान्ति यथैव लोके तथा वयं वालनृपार्कभासा ॥ ७३
वाल्यात्प्रभृत्येव हि मल्लयुद्धे प्रधावने वा हयवारणानाम्[2] ।
पश्चायुधे शास्त्रपरीक्षणे वा नास्मत्समो वालनृपः कदाचित् ॥७४
संसेव्य तादृग्विधमल्पसत्त्वं संजीवमानो[3] मरणं वरं तत् ।
देशातिथित्वं ज्वलनप्रवेशो विषाशनं वा क्षममित्यवोचन्[4] ॥ ७५
तेषां पुनर्मानमदोद्धतानां नृपात्मजानां वचनं निशम्य ।
प्रत्यूचुरन्ये क्षितिपालपुत्रा औदार्यतो[5] रागविनोदनाय ॥७६
सत्त्वाधिकः शिल्पकलाविदग्धो विपश्चिदप्युन्नतवंशजो वा ।
रूपान्विता वा कृतिनः पुरस्तात्प्रधावतीत्येष विनिश्चयो नः ॥७७
पुष्पाणि ताम्बूलविलेपनानि चित्राणि वस्त्राणि विभूषणानि ।
आ वाल्यतो वः प्रविभज्य भुङ्क्ते न तस्य हानिर्भवतां विनाशः७८
केनाभिषिक्तः करिराड्वनेषु तत्तुल्यरूपास्त्वितरे गजाश्च ।
वन्या गजास्तेऽपि वशानुगाश्चेत्कथं न वश्यः परपोषजीवी[6] ॥७९
न शक्यतेऽर्कः स्थगितुं करेण नासूयतां[7] नश्यति या परस्त्रीः[8] ।
अपुण्यवद्भिः कृतपूर्वपुण्याः संसेवनीया इति लोकसिद्धम् ॥ ८०
अथेतरे मानमदान्धनेत्रा भृशं स्वरोषस्फुरिताधरोष्ठाः ।
सगद्गदासक्तनिघृष्टवाक्या नृपात्मजोक्ताश्चुकुपुस्तदानीम् ॥ ८१

---

१ [ अदर्शनं ]. २ क हयवारणेषु. ३ [ संजीवतां नो ]. ४ म अवोचत्. ५ म चौदार्यतो. ६ क परमोपजीवी. ७ [ नासूयया ]. ८ [ परश्रीः ].

राजात्मजा किं न भवाम सर्वे किं मातरोऽन्येनुमताः[1] कुलीनाः ।
किं शौर्यवीर्यद्युतिधैर्यहीनाः किं वाथ लोके व्यवहारबाह्याः ॥ ८२
स किं विसोढुं युवराज्यभारं स्थितेषु चास्मासु विगृह्य सक्तः[2] ।
सुवर्णसारो निकषोपलेन भविष्यति व्यक्तिरवश्यमाशु[3] ॥ ८३
इत्येवमाभाष्य नरेन्द्रपुत्राः परस्पराकूतविनिश्चयार्थाः ।
ततः सुषेणप्रमुखा नृशंसा उत्तस्थुरत्र व्यवहारबुद्ध्या ॥ ८४
ते मन्त्रिणस्तान्सहसा समीक्ष्य विजृम्भितक्रोधविरूढदर्पान् ।
निष्केवलं वाक्कलहप्रवृत्तान्निवारयां राजसुतान् बभूवुः ॥ ८५

युवनृपतिमुदीक्ष्य राजपुत्रा-
स्तुतुपुरुदारधियः स्वभावभद्राः ।
सकलुषहृदयाः प्रवृद्धरागा
रुरुपुरनुष्ठितमत्सरास्तथान्ये ॥ ८६

अथ युवनृपतिर्विशालपुण्यः
सकलदिगन्तविसर्पिकीर्तिमालः ।
अवनिमुदधिमेखलाकलापां
मुदितजनां स बभूव जेतुकामः ॥ ८७

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
युवराज्यलाभो नाम
एकादशमः[4] सर्गः ।

---

१ [ मातरो नो न मताः ]. २ [सक्तः]. ३ [ व्यक्तिः ]. ४ [ एकादश

[ द्वादशः सर्गः ]

नृपाङ्गनाभिर्वररूपिणीभिः सहोपविष्टा नरदेवदेवी ।
तुतोष पुत्रस्य हि राज्यलाभं संश्रुत्य राजप्रहितान्मनुष्यात् ॥ १
अभ्यागतं प्रीतिनिवेदनाय संपूज्य वस्त्राभरणप्रदानैः ।
नरेन्द्रपत्नी स्वजनस्य मध्ये अद्यास्मि देवीति मुदाभ्यवोचत् ॥२
श्रुत्वा वराङ्गस्य हि यौवराज्यं सर्वाः सपत्न्यो गिरमित्थमूचुः ।
अस्माकमस्मत्सुतबान्धवानां पुरापि नाथासि विशेषतोऽद्य ॥ ३
तासां समाजे नृपसुन्दरीणां काचिन्नृपेष्टा मृगपूर्वसेना ।
अमर्षसंक्षोभितमानसा सा अधोमुखी स्वं भवनं जगाम ॥ ४
तत्रोपविश्य स्रवदश्रुनेत्रा कराग्रसंधारितवामगण्डा ।
विचिन्तयन्ती कृतमीश्वरेण निनिन्द सा दुःकृतपाकमित्थम् ॥ ५
न स्यात्सुतः किं नृपतेः प्रियो वा के वा गुणा मत्तनये न सन्ति ।
ज्येष्ठे सुते राज्यधुरः समर्थे पराभिषेकं तु कथं सहिष्ये ॥ ६
इत्येवमात्मन्यविचार्य कार्यं मुहुर्मुहुः कोपवशाज्ज्वलन्ती ।
सुषेणमाहूय विविक्तदेशे प्रोवाच राज्ञी सुतमात्मनस्तम् ॥ ७
नो वत्स कार्यं विदितं त्वयैव वराङ्गनाम्नो युवराज्यलाभम् ।
ज्ञात्वा[2] यतः क्षीणनृपात्मशक्तिः स्थितोऽसि तूष्णीं धिग्पौरुषत्वम्[3]
नीचानुवृत्तेः प्रियजीवितस्य निरस्तसत्त्वस्य हि मन्दशक्तेः ।
परावधूतार्थपराक्रमस्य का जन्मवर्त्ता[4] भुवि पुत्र पुंसः ॥ ९
समीक्षमाणा गुणदेविकायास्तस्याः सुतस्यापि वरां विभूतिम् ।
प्राणान्विसोढुं न सहेऽतिमात्रं[5] शिरस्तु मे विस्फुटतीव[6] कोपात् १०

१ क साधुः कृत°. २ [ ज्ञात्वा च यत्क्षीण° ]. ३ [ धिगपौरुष त्वम् ]. ४ म जंन्मवर्ता ( जंन्मवार्ता ? ). ५ क अतिमात्रां. ६ क निस्फुटति.

मात्रैवमुक्तो निजगौ सुषेणो नैवाम्ब नाज्ञायि न चानशक्तेः (?)।
राज्ञा कृतं वेत्त्यनवेक्ष्य सर्वमथाशिषं युद्धमतिं विगृह्य ॥ ११
तदैव कैश्चिन्नृपजैः सहायैरुद्यम्य खड्गं स्फुरदंशुजालम् ।
त्वं वा महीं पाह्यथवा वयं वा इति स्थितं मान्यरुचेंस्तस मन्त्री १२
वचो निशम्यात्मसुतस्य राज्ञी आहूय तं मन्त्रिणमात्मनीनम् ।
पूर्वोपचारैरभिसंप्रपूज्य वचः प्रसह्येदमवोचदित्थम् ॥ १३
यथा पितृभ्यां प्रहितोऽस्मदर्थं तथोपकारो भवता कृतश्च ।
यत्नैर्द्रुमं संपरिवर्ध्य भूयो विच्छेत्स्यसि त्वं तव का चिकीर्षा १४
वयं विशुद्धा यदि च त्वदर्थे अस्मत्सुहृद्भिः सुकृतं यदि स्यात् ।
निवर्त्य तस्याद्य हि यौवराज्यं सुषेणमास्थापय यौवराज्ये ॥१५
न्यायादपेतं यदि युक्तिमच्च निशम्य राज्ञीवचनं सुबुद्धिः ।
अपक्षरागस्त्वतिदूरदर्शी चिरं परीक्ष्यैतदवोचदर्थम् ॥ १६
वाञ्छन्ति ये नाशयितुं सपुण्यं ते यान्ति पूर्वं हि विनाशमाशु ।
मत्ताद्द्विपेन्द्रैः सह युध्यमानाः प्रयान्ति नाशं कलभाः पुरेव ॥१७
न शक्यते स्थापयितुं गतश्रीर्न शक्यते नाशयितुं पृथुश्रीः ।
यथात्मना पूर्वमुपाश्रितश्रीस्तथैव सा संश्रयते नरः श्रीः[3] ॥ १८
अनागतं कार्यमुपस्थितं च येऽनात्मबुद्ध्या प्रविचारयन्ति ।
स्वकार्यसिद्धिं ह्यनवाप्य मूढास्ते संश्रितैस्तैः सह यान्ति नाशम् १९
अबुद्धिमद्भिः प्रवितर्कितोऽर्थो विनाशमभ्येष्यति निश्चयेन ।
आश्रित्य तस्मात्सुवराजमेव संजीवनं नो [illegible]मित्युवाच ॥ २०
इत्युत्तरं बुद्धिमतोपदिष्टं प्रत्युत्तरं वक्तुमसावशक्ता ।
सा मन्त्रिणं प्रार्थितकार्यसिद्धौ प्रयाचमाना मधुरेण देवी ॥ २१

१ [ सो नश्यत् ]. २ [ मिच्छुसि नयो ]. ३ [illegible] नरश्रीः. [ नरं श्रीः ]. ४ [illegible]
प्रतिचारयन्ति.

संचिन्त्य मन्त्री स्वशिरः प्रकम्प्य स्वस्वामिसंबन्धमवेक्षमाणः ।
संपूज्य देवीं ससुतां नताङ्गो भक्त्या क्रियाविद्विरमित्युवाच ॥ २२
यद्यस्ति पुण्यं तनयस्य ते[1]ऽस्य तन्मे सहायत्वमुपैति देवि ।
कालेऽभ्युपायोद्यतशस्त्रशक्तिः सिद्धयै यतिष्ये धृतिमेहि साध्वि[2] ॥
अन्योन्यसंप्रत्ययकारणानि परैरवज्ञातपथस्थितानि ।
रहस्युपामन्त्र्य तदर्थजानि शनैरपेयुर्दृढगूढमन्त्राः ॥ २४
संधर्तुकामश्च सुषेणराज्यं वराङ्गराज्यं विनिहन्तुकामः ।
तिष्ठन्व्रजञ्जाग्रदपि स्वयं च रन्ध्राणि पश्यन्प्रणिनाय कालम् ॥
उद्यानयाने वलदर्शने वा सभास्वरण्येषु पुरान्तरेषु ।
क्रीडासु नानाविधकल्पनासु छिद्रप्रहारी स वभूव तस्य ॥ २६
ताम्बूलधूपाञ्जनभैषजेषु वस्त्राद्यलङ्कारविलेपनेषु ।
मालासु शय्यासनवाहनेषु द्रष्टुं[3] नरं प्राणि शशाक राज्ञः ॥ २७
नवान्नवांस्तानपरिश्रमेण प्राप्तानुदारान्विषयोपभोगान् ।
अभ्यर्थमानानकृतैर्मनुष्यैः समश्नुवानस्य जगाम कालः ॥ २८
ततः कदाचिद्भृगलीश्वरेण संप्रेषितौ तौ युवभूमिपाय ।
जात्या किशोरौ कमनीयरूपावावासभूमौ शुभलक्षणानाम् ॥ २९
शुभान्वयौ बालमृगेन्द्रतुल्यौ हयोत्तमौ भूमिपतिः समीक्ष्य ।
को नाम शक्तो विनिनेतुमेतौ[4]वित्यभ्यवोचत्सहसा सभायाम् ॥ ३०
तद्वाक्यलब्धावसरः स मन्त्री उत्थाय सोऽन्तर्हृदि जातहर्षः ।
मत्तोऽस्ति कश्चित्पुरुषो विनेता द्रक्ष्यामि सौधं[5] कतिचिद्दिनानि ॥
इत्युक्तवन्तं गतवन्तमन्तं शास्त्रार्णवस्योत्तरमन्त्रिणं तम् ।
संपूज्य राजा वरहेमरत्नैरश्वोत्तमौ तौ विससर्ज तस्मै ॥ ३२

---

१ म तस्य. २ म धृतिमोह°. ३ [ द्रष्टुं न रन्ध्राणि ]. ४ क विनेतुमेता°, [ शक्तो हि विनेतु° ]. ५ [ सार्धं ].

नाश्वशास्त्रक्रमकोविदेन मासैश्चतुर्भिः परिपुष्टगात्रौ ।
पाङ्गनैर्मन्त्रपवित्रभूतैर्हयोत्तमौ तौ दमितौ यथावत् ॥ ३३

ायोपदेशेन च दान्त एको मायाप्रयोगेन तथा द्वितीयः ।
ृहीतशिक्षौ तपनीयभाण्डावादाय मन्त्री नृपमाससाद ॥ ३४

ाद्बहिर्मण्डलभूमिमध्ये आरुह्य सोऽश्वं जनतासमक्षम् ।
थीविभागैर्गमयन्सलीलं जहार सद्यो युवराजचित्तम् ॥ ३५

श्वक्रियास्वप्रतिकौशलस्य ज्ञात्वा कुमारस्य सदर्थतोषम् ।
र्वांश्च सभ्यानभिसंस्तुवानानुवाच मन्त्री प्रियमित्थमाशु ॥ ३६

तो विशिष्टो हय एष राजंस्तवैव योग्यास्त्विति संप्रभाष्य ।
ःशिक्षितं वारितवागशीलं निवेदयामास युवेश्वराय ॥ ३७

स्रण्यतायास्तुरगानुरागाद्युवत्वगर्वोद्धतगौरवाच्च ।
ग्रोहितं तं ह्यपरीक्ष्य साक्षादारोढुमिच्छन् नृपतिस्तदानीम् ॥३८

रङ्गभङ्गाङ्गतरङ्गवल्गं सद्रत्नविद्युत्परिणद्धगात्रम् ।
ाङ्गल्यवेषः क्रिययाभिरुह्य चित्रं महत्या गमयांबभूव ॥ ३९

ाथर्जुना तेन यथाविनीतः कशाकशष्टैरवबोध्यमानः (?) ।
ोधोद्धतो वायुसमानरंहा धनुर्विमुक्तेषुरिव प्रयातः ॥ ४०

ःशिक्षया क्षोभितदुष्टचित्तो नरेश्वरेणाश्वमता श्रमेण ।
नवर्त्यमानोऽप्यनिवृत्तवेगः क्रोधादतिक्रम्य गतोऽ[illegible] ॥ ४१

ज्ञानभिज्ञेन नरेश्वरेण कृतानि कर्माण्यफलान्य[illegible]
नमार्गशिक्षे हि तुरङ्गमुख्ये वक्रस्वभावे [illegible] ॥ ४२

भ्यां भुजाभ्यामथ संनिरोद्धुं यथा [illegible] ।
नेरुध्यमानस्तुरगो जवेन तथा [illegible] ॥ ४३

१ म आसतार. २ [ [illegible] ]. ३ [illegible]
[illegible] [ विसं...स्मरा ]. ६ म [illegible]

ग्रामाकरांश्चापि मटम्बखेटान्पुराणि राष्ट्राणि वहून्यतीत्य ।
देशान्तमाशु प्रजगाम वाजी पातो यथोत्पातिकवातधूमैः ॥ ४४
अथेतरे वाजिगजा नराश्च महाजवास्तेऽप्यनुगन्तुकामाः ।
नाशक्नुवन्पक्षिगणाः समेताः खे संपतन्तं गरुडं यथैव ॥ ४५
क्वचित्तरूणां गहनान्तरेषु निम्नोन्नतोपान्तवनस्थलीषु ।
तुरङ्गवेगान्न्यपतच्छिरस्स्थं किरीटमङ्गाच्च विभूषणानि ॥ ४६
अथोत्तरीयं निपपात भूमौ माला विशीर्णा हृदयं विषण्णम् ।
तनुश्चकम्पे वदनं शुशोष वभ्राम दृष्टिः पिदधौ श्रुतिश्च ॥ ४७
अथावनीशः क्रममन्दशक्तिर्हयप्रवेगोन्माथितप्रतापः ।
वल्लीतृणाच्छादितकूपरन्ध्रे पपात तेनैव हयेन सार्धम् ॥ ४८
निपत्य तस्मिन्स पुराकृतेनै हयो मृतश्चूर्णितसर्वगात्रः ।
लतां गृहीत्वा स्वयमन्तरालें कूपाच्छनैरूर्ध्वमथारुरोह ॥ ४९
तत्रोपविश्याप्रतिकान्तरूपः क्षुधा तृषा श्रान्ततनुर्युवेन्द्रः ।
सशर्करापांशुखरप्रदेशे महीतले मोहमुपाजगाम ॥ ५०
आप्यायितः शीतवतानिलेन शनैः समुन्मीलितचारुनेत्रः ।
उच्छ्वस्य दीर्घं स्वतनुं विलोक्य निनिन्द संसारचलस्वभावम् ॥
विचिन्त्य मातापितरौ स्वबन्धून्मित्राणि भृत्यानथ देशकोशान् ।
वधूश्च ता देववधूसमानाः क्लेशाभिभूतो विललाप तत्र ॥ ५२
शोको भवेद्बन्धुजनैर्वियोगाद्धैर्यं त्वभूद्राजसुताभिमानात् ।
कोपोऽभवन्मन्त्रिकृतावमानाद्विरागताभूदनवस्थितत्वात् ॥ ५३
यद्यङ्गनावद्धृदि सत्त्वहीनो निरर्थमासे विजने वनेऽहम् ।
आपत्प्रतीकारमवेक्षमाणो नावश्यमाप्स्यामि पुनर्विभूतिम् ॥ ५४

१ क मडम्ब°. २ क पाथो. ३ म यथोत्पातित°. ४ क तिरीट°. ५ क स्वपुराकृतेन. ६ म स्वयमन्तराणि. ७ [ शोकोऽभवद्बन्धु° ].

अरण्यवासो न शुभावहो मे इह स्थितेनैव गुणोऽस्ति कश्चित् ।
इतो व्रजामीति मतिं निधाय धृतिं प्रतिष्ठाप्य महानुभागः ॥ ५५
प्रालम्बकाद्यानि विभूषणानि भ्रष्टावशेषाण्यवलुञ्च्य देहात् ।
विसृज्य कूपे च विचिन्त्य दूरं ततः प्रतस्थे नृवरोऽतिसत्त्वः ॥ ५६
भुजङ्गमातङ्गविहङ्गजुष्टां महाटवीं श्वापदसेवितां ताम् ।
अनेकवृक्षक्षुपगुल्मकक्षां चचार दिङ्मूढमतिः स एकः ॥ ५७
सूर्ये तदास्तंगिरिमभ्युपेते व्याघ्रं च तत्कालमनुप्रयातम् ।
समीक्ष्य चासन्नतयातितूर्णं नृपात्मजः पादपमारुरोह ॥ ५८
आहत्य पुच्छेन तलं धराया दृष्ट्वोर्ध्वदृष्टिर्विटपे निविष्टम् ।
उद्वेजयन्भीमवपुस्तदानीं शार्दूलपोतः प्रसभं जगर्ज ॥ ५९
शार्दूलनिर्भर्त्सनविस्मिताक्षः शाखान्तरे भूमिपतिर्निविश्य ।
निरीक्षमाणः स च तद्विकारान् कृच्छ्रेण रात्रिं गमयांबभूव ॥ ६०
वियोगचिन्ताकलुषीकृतस्य परिश्रमम्लानमुखाम्बुजस्य ।
क्षुत्तर्षतान्तस्य[1] सदुःस्थितस्य एका निशानेकनिशेव सासीत् ॥ ६१
न चामिषा[2] सा प्रतिबद्धचित्तो निर्गन्तुमिच्छन्[3]निपतिष्यतीति ।
शार्दूलयानप्रतिलिप्समानो न राजपुत्रोऽप्यवरोहमैच्छत् ॥ ६२
इत्थंगते मत्तमहाकरीन्द्रं करेणुभिः सार्धमभिप्रयातम् ।
विलोक्य दूरान्नृपतिर्ननाद व्याघ्रं गजेन्द्रेण विमर्दयिष्यन्[4] ॥ ६३
आकर्ण्य नादं सहसा निवृत्तः क्रोधोद्धतः[5] सोच्छ्रितकर्णपुच्छः ।
विशेषसंप्रस्नुतिदानलेखो[6] गर्जन्गजो वायुरिवाजगाम[7] ॥ ६४

१ म क्षुत्तर्षतार्तस्य. २ [ चामिषाशाप्रति ]. ३ [ निर्गन्तुमैच्छन् ]. ४ क. निमर्दयिष्यं, [ निमर्दयिष्यन् ]. ५ [ क्रोधोल्लतः ]. ६ क. संप्रस्रुति, [ संस्नुति ]. ७ क. वाजिरिवाजगाम.

गजं तमायान्तमुदग्रकोपाद्व्याघ्रः समुत्प्लुत्य तदं[1]शकुम्भे ।
दष्टो[2]ऽतिरुष्टः स च दन्तकोट्या जघान शार्दूलमधो निहत्य ॥ ६५
स तस्य संप्रेक्ष्य गजेश्वरस्य जयं महान्तं रिपुमर्दनस्य ।
अन्तर्गतभीतिमनाः कृतज्ञो युवेश्वरो वाक्यमिदं जगाद ॥ ६६
ममाशरण्यस्य वने स्थितस्य व्याघ्रातिनिर्भर्त्सनभीषितस्य ।
व्यपेतमित्रार्थकलत्रकस्य त्वयेभ दत्ता प्रियजीविताशा ॥ ६७
गजेश्वरस्त्वं मनुजेश्वरोऽहं त्रातुं भवानेव हि मामतोऽर्हः ।
आपद्गतानां हि सतां सहाया भवन्ति लोके महतां महान्तः ॥६८
पूर्वं महीपालसुतस्त्वभूवन्नीतिं[3] सुतोऽहं तव नागवर्य ।
तवोपचारप्रतिकारता हि न शक्यते जन्मशतेन कर्तुम् ॥ ६९
प्रियाभिराभिर्वरहस्तिनीभिर्वनं चिरं पालय वीतशोकः ।
इतीभमित्थं वचनैः प्रशस्य गते करीन्द्रेऽवततार वृक्षात् ॥ ७०
क्षुधाभिभूतस्तृषया परीतः पानीयमिच्छंस्त्वरितं तरस्वी ।
यथा[4] गजेन्द्रानुविमर्दितेन व्रजन्सरोऽपश्यददूरदेशे ॥ ७१
सरः प्रसन्नोदकमत्यगाधं मन्दानिलोत्कम्पितरङ्गमालम् ।
स[5]च्छन्नफुल्लोत्पलपुण्डरीकं मदप्रलापाण्डजमृष्टनादम् ॥ ७२
तत्तीरफुल्लद्रुममञ्जरीणां गन्धैः सुगन्धीकृतचारुतोयम् ।
मत्तभ्रमत्षट्पदगीतरम्यं मनोहरं शीतलमाससाद ॥ ७३
हंसाङ्गना बालनृपं समीक्ष्य कुलाङ्गनावद्दद्दशुस्तिरस्था[6]ः ।
अन्तर्दधुः काश्चन काश्चिदस्थुर्मृष्टं जगुर्वैश्य[7]वधूवदन्याः ॥ ७४
आसाद्य तत्तीरसुखप्रदेशं प्रक्षाल्य धीमानथ पाणिपादम् ।
पिपासितः क्षाम[8]नयाम्बु शीतं पपौ पलाशेन पयोरुहस्य ॥ ७५

१ म तदंशु°, [ तदंस° ]. २ क दष्टेतिरुष्टः. ३ [ °सुतस्त्वभूवामितः ]. ४ [ पथा ]. ५ [ संछन्न° ]. ६ क °दद्दशुस्त्विरस्थाः, [ दुद्रुवुस्तिरस्थाः, °स्तटस्थाः ]. ७ क °वैश्य. ८ क पिपासितक्षाम°.

सुवर्णरूप्योत्तमभाजनेषु त्रिजातकर्पूरकवासिताम्भः ।
प्रियाकराग्रोपहृतं मनोज्ञं यः पीतवान्राजगृहे यथेष्टम् ॥ ७६
शार्दूललालाविलमध्वखिन्नो वरद्विपानां मदवारितिक्तम् ।
हंसांसविक्षुब्धतरङ्गमालमसंस्कृतं वारि पपौ कुमारः ॥ ७७
हस्त्यश्वयानान्यभिसंस्कृतानि आरुह्यमाणो भटसंकटेन ।
श्वेतातपत्रोज्ज्वलचामराङ्कः क्रीडार्थमुद्यानवनं ययौ यः ॥ ७८
विनष्टमार्गः स्फुटिताग्रपादो विशीर्णवासा ग्लपिताङ्गयष्टिः ।
स एव पद्भ्यामटवीप्रदेशं खरं सपाषाणमयं चचार ॥ ७९
पुरा हि सच्चन्दनकुङ्कुमाक्तः मदग्धकालागरुधूपितो यः ।
स एव संस्वेदमलाविदग्धो बभ्राम कक्षे मलिनाम्बरेण ॥ ८०
पञ्चेन्द्रियाणां विषयाननूनान्यः प्राप्तवान्पुण्यफलोदयेन ।
स एव पूर्वार्जितपुण्यनाशान्नैकेन्द्रियं तर्पयितुं समर्थः ॥ ८१
य एव पर्याप्तसुखार्णवस्थः श्रीमङ्गलाशीर्वचनैः प्रणूतः ।
दुर्भाष्यमाणस्त्वपि वासुकुन्तैर्दुःखार्णवे स क्षणतः पपात ॥ ८२
एवंविधानां हि महर्द्धिकानां नैकाकरग्रामपुराधिपानाम् ।
सूर्यत्विषामूर्च्छितपौरुषाणां यथावदीदृक्क्षणतोऽभ्युपैति ॥ ८३
नित्यं परप्रेषणतत्पराणां नक्तंदिवं क्लेशसहस्रभाजाम् ।
निकृष्टवृत्तित्वमुपागतानां किमस्ति वाच्यं कृमिमानुषाणाम् ॥ ८४

यद्येवं शकटमयोमयं सुबद्धं
तत्स्याच्छेदनिलवलेरणप्रणीतम् ।

---

१ क हंसावलि°, [ हंसावलि° ]. २ म °स्त्वपि वासुकुन्तैः, [ °स्त्वपि च शकुन्तैः, °स्त्वपि वं शकुन्तैः ]. ३ म नैकाकर°. ४ म कृमि°.

यद्विण्डं प्रचयकृतं प्रभञ्जनेयं
किं तिष्ठेदतिलघुचञ्चलस्व[2]भावम् ॥ ८५
आहोस्वित्कनकमयं शरावपात्रं
तान्निष्ठां व्रजति यदीह मूषिकाभिः ।
अद्धेयुः[3] किमु घृतपूरितो गुडाक्तः
श्रीमोदस्थिर्ते[4] इति मूषिकाविलेषु ॥ ८६
एवं ये धृतिबलसत्त्वसारयुक्ताः
सेवाज्ञामतिविभवोरुधैर्यवन्तः ।
तेऽवस्थामतिविकृतामथाश्नुवीरन्
किं वर्ण्यं मृगपशुभिः समा[5] न पुंसः ॥ ८७
निर्मुच्य स्वजनगतं मनः पृथुश्री-
रात्मानं स तु[6] धृतिसंपदावलम्ब्यम् ।
पीत्वाम्भो विगततृषो युवावनीन्द्रः
स्नानार्थं जलममलं शनैर्जगाहे ॥ ८८

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
युवराजसरोदर्शनो नाम
द्वादशमः[7] सर्गः ।

---

१ म यत्पत्रं. २ क तिष्ठेदतिचलनस्व°. ३ क शुद्धेयुः. ४ [श्रीमोदः]. ५ क समेषु. ६ समवृति°, [ शमधृति° ]. ७ [ द्वादशः ].

## [ त्रयोदशः सर्गः ]

सरः प्रविश्योत्पलफुल्लपङ्कजं प्रकृष्टकारण्डवसारसाकुलम् ।
मृदा कषायेण मलापहारिणा निघृष्य [1]संस्नावनुकूलमात्मनः ॥ १
पुनः सरोऽन्तर्गतरागमानसः स्वकर्मनिष्पत्तिफलप्रचोदितः ।
श्रमव्यपोहार्थमगाधवारिणि ततार दोर्भ्यां [2]सुतरं तरङ्गिणि ॥ २
चिरं हि तीर्त्वा कमलोत्पलान्तरे [3]तरङ्गसंगप्रविधौतदेहिनः ।
विनिर्ययासोः सहसानुसृत्य तं जग्राह नक्रश्चरणं महीपतेः ॥ ३
विबुध्य नक्रग्रसनं स दुर्धरं बलाद्ग्रहिनिष्पतितुं समुद्यतः ।
अशक्नुवन्क्षीणबलो निरास्पदो विचिन्तयामास विषण्णमानसः ॥
व्यपेतशार्दूलभयस्य मे पुनः किमेतदन्यत्समुपस्थितं महत् ।
द्रुमाग्रपातोद्भवदुःखचेतसो बभूव भूयो मुसलाभिघातवत् ॥ ५
पुरे च राष्ट्रे च गिरौ महीतले महोदधौ वा सुहृदां च सन्निधौ ।
नभस्स्थले वा वरगर्भवेश्मनि न मुञ्चति प्राक्कृतकर्म सर्वथा ॥ ६
अयं विधिर्निःप्रतिकारकारणः सुदुर्धरः किं करवाणि सांप्रतम् ।
विचिन्त्य कर्माणि पुरा [4]कृतानि बभूव राजा सुविशुद्धभावनः ॥ ७
अनेकजात्यन्तरदुःखकारकान्कषायदोषान्विषमांस्तथाविधान् ।
विसृज्य जग्राह महाव्रतादिकं परं च निःश्रेयससाधनात्मकम् ॥ ८
विशुद्धवाक्कायमनस्समाहितः कृताञ्जलिर्भक्तिजलार्द्रमानसः ।
नुनाव सामान्यविशेषसत्पदैर्वचोभिरव्याकुलितार्थशोभनैः ॥ ९
गिरां पतिं सद्यशसां च संनिधिं धियामधीशं दहनं स्वकर्मणाम् ।
निसर्गशुद्धान्वयधर्मदर्शिनं जिनं नमामीष्टफलप्रदायिनम् ॥ १०

१ म स स्नात्नु. २ [ सुतरं ]. ३ म तरङ्गसं. ४ ष. सुकृतानि.

विनष्टकर्माष्टकबुद्धिगोचरं
समस्तबोध्येष्टहितार्थदर्शनम् ।
सुदृष्टिचारित्रपथाधिनायकं
नतोऽस्मि निर्वाणसुखैधितं जिनम् ॥ ११

व्यपेतसर्वैपणधीरसद्व्रतं
प्रशस्तशुक्लप्रविधूतदुर्नयम् ।
अवाप्तनिर्वाणसुखं निरामयं
नतोऽस्मि तं विघ्नविनायकं जिनम् ॥ १२

प्रशस्यतां दृष्टिपथानुरोधिनीं
सुरूपतां चापि सुयौवनं वपुः ।
सुविभ्रतो यस्य मनो मनोभुवा
न नाशितं तं प्रणतोऽस्मि यत्नतः ॥ १३

चतुर्विधामेत्य गतिं सुदुःखिताः
स्मराग्निना ये निहताः शरीरिणः ।
शमाम्भसा शान्तिमिताः स यस्य वै
जिनो हि मेऽद्य प्रददातु सत्सुखम् ॥ १४

शरीरिकायस्थितिसंगदर्शिनं
निरञ्जनं निर्दुरितं निरामयम् ।
अमोघविद्यं निरवद्ययोगिनं
शरण्यतां यामि तमद्य शान्तये ॥ १५

त्रिलोकबन्धुस्त्रिजगत्प्रजाहित-
स्त्रिलोकचूडामणिराप्तकेवलः ।

१ क शरीर°.

त्रिकालदर्शी सुगतिं समेयिवा-
न्स मां जिनो रक्षतु दुःखसंकटात् ॥ १६
सजातयो रोगजरोरुमृत्यवो
यथाक्रमं लोकमिमं जिघांसवः ।
समुद्धृता येन चिराय निस्तुपाः
स मे विमुक्तिं विदधातु नक्रतः ॥ १७
निरस्तदुर्नीतिविशेषसाधनो
विशिष्टदिव्याष्टसहस्रलक्षणः ।
परीषहक्लेशविजिष्णुरद्य मां
स रक्षतु ग्राहमुखाज्जिनेश्वरः ॥ १८
इति स्तुवानं प्रविशुद्धचेतसं
स्थितं च सम्यग्जिनदेववर्त्मनि ।
स्तुतिप्रसादैधितपुण्यपौरुषं
ददर्श यक्षी सहसा नृपात्मजम् ॥ १९
निरीक्ष्य या तं भृशमापदि स्थितं
दयान्विता सा वसंदारितात्मकम्[1] ।
अदृष्टरूपा शनकैः सुदर्शना
विमोचयां ग्राहभयाद्बभूव ॥ २०
अपेतनक्रो बहिरेत्य तत्क्षणा-
त्सविस्मयः सर्वदिशो निरीक्ष्य च ।
न किंचिदैक्षिष्ट विमोचकं परं
जिनप्रसादादिदमित्यमन्यत ॥ २१

१ [ मतधारि° ].

इदं मनुष्यत्वमनेकजन्मतः
सुलभ्य जात्यादिगुणांश्च सर्वथा ।
प्रवञ्चितो मोहबलैरितः स्मृति-[1]
रितस्त्रिभिः शुद्धतमोऽस्मि नित्यशः ॥ २२
तपश्च सज्ज्ञानमनूनदर्शनं
त्रिरत्नमेतत्त्रिजगद्धितप्रदम् ।
जिनप्रसादोदयतो भवे भवे
तदस्तु मे संसृतिमोक्षकारणम् ॥ २३
इति ब्रुवाणस्य महीपतेः शनै-
र्निशम्य देवी वचनं प्रसन्नवत् ।
विसृज्य वैकारिकरूपमात्मनः
स्थिता पुरस्ताद्विपरीक्षितुं पुनः ॥ २४
प्रलम्बहारोज्ज्वलहेमकुण्डला
प्रफुल्लमौलस्तवकावतंसिनी[2] ।
कराग्रसंधारितमाधवीलता
वराङ्गना सस्मितमब्रवीद्वचः ॥ २५
विबोद्धुमिच्छाम्यहमागमः कुतः
इह स्थितो वा किमु ते प्रयोजनम् ।
क्व वा गमिष्यस्यमुतः प्रदेशा-
न्न चेद्विरोधोऽस्ति वदार्य मे स्फुटम् ॥ २६
स तां निरीक्ष्याप्रतिरूपकारिणीं
विचारयामास यथावदीश्वरः ।

१ लैरितिस्मृतीरित°]. २ [ °माला ].

इयं हि किं दिव्यवधूर्न मानुषी
मनुष्यवेषा किमु राक्षसी स्वयम् ॥ २७
निराश्रये श्वापदसेविते वने
व्यपेतशङ्का विजने विलासिनी ।
प्रवर्तितभ्रूललिताननेन्दुना
समेत्य मां पृच्छसि का नु कस्य वा ॥ २८
निगूह्य भावं स्वमनीषितं हि सा
ह्यथान्यदुक्ता वचसाविशङ्किनी ।
व्यपेतपुण्या वसुधेश्वरात्मजा
वसामि मूढेति जगाद देवता ॥ २९
परिभ्रमन्ती कृतपूर्वधर्मतो
भवन्तमद्राक्षमिहैव सांप्रतम् ।
इतः प्रभृत्येव वशानुवर्तिनी
भवेयमार्तामगतिं गृहाण माम् ॥ ३०
अहं सुदुःखा प्रविनष्टचेतना
निरास्पदा तत्प्रतिकारदुर्लभा ।
त्वमेव भर्ता शरणं गतिश्च मे
किमर्थमासे प्रतिवाक्यदुर्लभः ॥ ३१
अनेकविज्ञानकलाविदग्धया
तयाभिपृष्टो बहुशः प्रगल्भया ।
स्वकेशवस्त्राङ्गविरूक्षतां स्वयं
समीक्ष्य तां किंचिदुवाच लज्जितः ॥ ३२

---

१ [ सदुःखा ].

सुभाषितं खल्विदमात्मनो वचः
प्रियं च तथ्यं च तथैव शोभते ।
न मे गतिः काचिदपीह विद्यते
गतिस्तवार्ये कथमस्मि कथ्यताम् ॥ ३३

स्वयं प्रबुद्धः प्रतिबोधयेत्परान्
[1]परान् प्रतिष्ठापयते स्वयं स्थितः ।
स्वयं न बुद्धस्त्वनवस्थितः कथं
परानवस्थापनरो[2]धनक्षमः ॥ ३४

अथैवमुक्तानुजगाद सा गिरं
न युज्यते ते प्रतिवाक्यमीदृशम् ।
निगद्यते कापुरुषैरकामिभिः
प्रतीच्छ मां भक्तिमतीमुपाश्रिताम् ॥ ३५

तयोदितं वाक्यमनङ्गसाधनं
निशम्य सद्यौवनरूपवानपि ।
स्वदारसंतोषरतिव्रतं महद्
विचिन्त्य तामित्थमुवाच भूपतिः ॥ ३६

अहं पुरा सर्वदृशस्तु पादयोः
प्रणम्य मूर्ध्ना बहुमानतोऽर्हतः ।
स्वदारसंतोषसमाहितं व्रतं
गृहीतवानस्मि मुनीन्द्रसाक्षिकम् ॥ ३७

न वा न काम्यस्मि न चास्म्यपौरुषो
न कामिनी [3]वापि सुगात्रि चिन्त्यताम् ।

---

१ म परां. २ [ °बोधन° ]. ३ क नोपि.

गृहीतदारव्रतभूषणस्य मे
अयुक्तमेतद्व्रतलङ्घनं पुनः ॥ ३८
दृढव्रतत्वे स्थिरबुद्धितां तदा
विबुध्य देवी परिहृष्टमानसा ।
स्थिता स्वरूपेण नभस्युवाच सा
परीक्षणायाकृतमृष्यतामिति ॥ ३९
सुदर्शनेनाप्रतिमेन केवलं
स्थिता वयं शीलगुणैर्विवर्जिताः ।
व्रतेन सद्दृष्टियथानुगामिना
स्थितो यतस्तेन सुराधिको भवान् ॥ ४०
स्वसा तवाहं नरदेव धर्मतो
गुरुर्महान्नो वरदत्तसन्मुनिः ।
तवास्तु तद्भद्रमिति प्रशस्य तं
नभस्स्थले सान्तरधाच्च तत्क्षणात् ॥ ४१
ततो विमुक्तो भयसंकटद्वया-
दितः किमु स्यात्करणीयमुत्तरम् ।
प्रयाम्यथासे किमु वा करोम्यह-
मितीहमानो गमनं व्यरोचत ॥ ४२
शनैः समुत्थाय ततो युवाधिपो
वरं वनं स्निग्धतरूपशोभितम् ।
गिरिस्रवच्छीतजलाविलान्तरे
ददर्श रम्यं पनसं फलाकुलम् ॥ ४३

१ म निबुध्य. २ क. °मृष्यताम्. [ परीक्षणार्थे ]. ३ [ °दर्श ]. ४ क. सुधीगु ( गुं ) रुर्नो.

स तैः फलैर्हेमसमानकोशकैः
पितॄन्प्रतर्प्य प्रविनीय तु क्षुधाम् ।
स्वकार्यसिद्ध्यै नृपतिर्वनान्तरा-
त्ततः प्रतस्थे वरनागविक्रमः ॥ ४४

नदीरगाधा ह्रदवारिकाकुला[1]
गिरींश्च निम्नोन्नतदुर्गसंकटान् ।
वनप्रदेशांस्तरुषण्डमण्डिता-
न्भुजद्वितीयो विचचार सोद्यमः ॥ ४५

विशीर्णवस्त्राः कपिलाङ्गमूर्धजाः[2]
प्रवृद्धगण्डस्थलरोमभीषणाः ।
सिताग्रदन्ता रुधिरोरुदृष्टयः
पिपीलिकापङ्क्तिनिभा वनेचराः ॥ ४६

परिभ्रमन्तं गिरिकन्दरोदरे
यदृच्छया तं ददृशुः पुलिन्दकाः[3] ।
गृहीतदण्डासिशरासनात्मकाः
प्रतर्जयन्तः परिवव्रिरे नृपम् ॥ ४७

परीत्य सर्वे युगपन्निगृह्यता-
मितः कुतो मा चल दीनजीवित ।
क्व गच्छसीति प्रतिगृह्य निर्दया
बबन्धुरुद्भ्रान्तकुलाग्रपाणयः ॥ ४८

लतां गले संपरिषज्य दुर्दमा
मुहुस्तुदन्तो धनुरग्रकोटिभिः ।

---

१ क ह्रदवालकाकुला, [ह्रदवारिजाकुला]. २ म कपिलाग्र°. ३ म पुलीन्द्रकाः.

अदण्डनार्हं सुकुमारमीश्वरं
   विनिन्युरात्मावसथाय दस्यवः ॥ ४९
पुलीन्द्रपल्लीं द्विपदन्तसंवृतां
   मृगास्थिमांसोरुकलेवराश्चिताम् ।
वसान्त्रवल्लूरविकीर्णमण्डपां
   प्रवेशयामासुरनिष्टगन्धिनीम् ॥ ५०
दुरात्मभिर्व्याधजनैरभिद्रुतः
   सबन्धनो वेदनया विरूक्षितः ।
जुगुप्सनीये नयनाप्रिये गृहे
   स्मरन्न शेते स्वपुराकृतां क्रियाम् ॥ ५१
कुमन्त्रिणा मन्त्रमुखेन वैरिणा
   समर्पितं प्राप्य तुरङ्गमाधमम् ।
इमामवस्थामनुभूय सांप्रतं
   क्व वा गमिष्यामि कृतान्त कथ्यताम् ॥ ५२
पुरा मया किं तु कृतं ह्यजानता
   विपाकतिक्तं हि दुरीहितात्मना ।
अनेकदुःखार्णववीचिसंकटा-
   न्निवृत्तिरद्यापि न मेऽस्ति पापिनः ॥ ५३
वियोगचिन्तापरिखिन्नचेतस-
   स्ततश्च शार्दूलभयाद्विनिर्च्युतः ।
जलाशयान्निर्गमितस्य मे पुनः
   इदं महत्कष्टतमं ततोऽभवत् ॥ ५४

१ [ किं नु ]. २ [ विनिन्युतः ]. ३ ष. पुनरिदं, [ पुनरिदं ].

अहो दुरन्ता दुरनुष्ठिताः क्रिया
अवश्यभाव्यास्त्वविचार्यवीर्यकाः ।
अवन्ध्यरूपाश्च विपाकदुस्सहा
इति प्रचिन्त्यात्मनि मौनमादधौ ॥ ५५

तमोगृहे पूतिकचर्मसंवृते
बहुप्रकारे क्रिमितीव्रदर्शके ।
समार्जनादिप्रतिकर्मवर्जिते
महीतले शीतलवायुबाधने ॥ ५६

क्षुधापमानाङ्गविबन्धपीडनै-
रनिष्टगन्धद्रवणेऽप्रियेक्षणैः ।
अनात्मवश्यस्य सहस्रसंगुणा
गता निशा सा बहुदुःखचिन्तया ॥ ५७

ततः प्रभाते च कुसुम्भभृत्यका
महीपतिं तं कलुषान्तरात्मकाः ।
प्रगृह्य याता वनदेवतागृहं
द्विजा ऋतुं छागमिव प्रहिंसितुम् ॥ ५८

तदैव कौसुम्भिममेयवीर्यकं
वनं प्रयान्तं मृगयाभिकाङ्क्षया ।
उदग्रकोपश्चरणप्रमर्दना-
द्ददंश दंष्ट्रोग्रविषो भुजंगमः ॥ ५९

स तेन दष्टः क्षणमात्रतः पुनः
पपात भूमौ विषवेगमूर्च्छितः ।

---

१ [ °दंशके ]. २ [ ऋतुञ्छागमिव ].

विमोहितासुं प्रसमीक्ष्य बान्धवाः
पितुः सकाशं ह्यभिनिन्युरावृताः ॥ ६०
गतासुमुद्वीक्ष्य स तं वनेश्वरो
यथाविचार्या गृहमीक्षितुं गतः ।
तमासितं तत्र नृपं सबन्धनं
समीक्ष्य पप्रच्छ विषप्रणाशनम् ॥ ६१
पुलीन्द्रनाथेन स चोदितो भृशं
करोम्यहं निर्विषमित्यभाषत ।
तदैव तुष्टाः परिमुच्य बन्धनं
कुरु प्रसादं त्वमिहात्मसूनवे ॥ ६२
ततो नृपो मन्त्रपुरस्कृतैः पदै-
र्महर्षियोगीश्वरसाधुसाधितैः ।
जिनेश्वराभिष्टवमिश्रिताम्बुभिः
सिषेच तस्मिन्विषदोषहारिभिः ॥ ६३
यथा यथा मन्त्रितवारिबिन्दुभिः
प्रसेचितः कुम्भमुखात्परिस्रुतैः ।
तथा तथा निर्विषतामुपेयुषी-
न्प्रसन्नचेताः प्रकृतिं ययौ पुनः ॥ ६४
ततः कुसुम्भप्रमुखाः पुलीन्द्रकाः
कराङ्गुलिभ्रामणविस्मितेक्षणाः ।
महापराधोऽकुशलात्मभिः कृतः
क्षमस्व नाथेति ययाचिरे भृशम् ॥ ६५

१ [समापचर्तागर]. २ क. पुलिन्द°. ३ [°कुतेषिवान्].

प्रहृष्य भूयः कटकादिभूपणा-
न्विचित्रवस्त्राणि च संप्रदाय ते ।
वरान्नमेतत्तव[1] योग्यमिष्यतां
श्रमं व्यपोह्य क्रमतः प्रयास्यसि ॥ ६६

तमूचिवान्नोदनकार्यमस्ति मे
न माल्यगन्धाम्बरभूषणादिभिः ।
महापथं दर्शय देशगामिनं
विमुच्यतां लघ्वभियाम्यविघ्नतः ॥ ६७

ततः पुलिन्दाधिपतेश्च शासना-
न्नरैः सुदूरं गमितो नरेश्वरः ।
प्रदर्श्य मार्गान्बहुदेशगामिनः
पुनर्निवृत्ता वनगोचरास्तदा ॥ ६८

गतेषु तेषु स्वकृतानुरूपतां
विचिन्त्य सम्यग्बहुशो नराधिपः ।
स्वदेशयानं प्रति किं विशेषतो[2]
व्रतान्यदेशाटनमिष्यते क्षमः ॥ ६९

किमत्र चिन्त्यं कुशलानुबन्धि[3] य-
त्तदा[4] त्वयुक्तागतिसिद्धिकारकम् ।
यथा परैर्नो परिभूयते पुन-
स्तथा हि कार्यं स्वहिताभिलाषिणा ॥ ७०

महापदं प्राप्य नरोत्तमः पुन-
र्न चेच्छदात्मप्रियबन्धुदर्शनम् ।

---

१ क· वराङ्गमेतत्. २ क विशिष्यतो. ३ म कुशलानुबन्धे. ४ म यदा त्वयुक्ता.

नराधमः श्रीधनमानवर्जितः
स बन्धुसंगं कृपणो हि वाञ्छति ॥ ७१

यथैव राज्यादपनीय तत्क्षणा-
च्चकार मां निर्विभवं पुराकृतम् ।
तथैव राज्यं सुकृतं यदस्ति चे-
त्तदैव मां स्थापयतु स्वकालतः ॥ ७२

इमामवस्थामनुभूय यद्यहं
व्रजामि चेद्बन्धुसकाशमाशया ।
भवाम्यरीणां परिहासकारणं
स्वबन्धुमित्रेष्टजनातिशोचनः ॥ ७३

न चोभयं मे परदेशदर्शने
भविष्यतीति स्वमतिं विधाय सः ।
महापथेनाप्रतिमाभपौरुष-
स्ततः प्रतस्थे स्वमतानुसिद्धये ॥ ७४

खरान्प्रदेशान्स्थलनिम्ननिर्जलान्
गिरीन्दरीः काननकक्षकन्दरान् ।
अतीत्य सूर्यास्तमनेऽङ्घ्रिपोपरि
न्यशेत कायोपसृतिं विचिन्तयन् ॥ ७५

पुनः प्रभाते तरुतोऽवतीर्य तं
प्रयान्तमध्वानमवेक्ष्य सार्थिकाः ।
प्रबाध्य निर्भर्त्स्य निरुध्य निर्दया
उपेत्य पप्रच्छुरथागतिं गतिम् ॥ ७६

१ क. श्रीधन°. २ [राज्ये...चेत्तदेव]. ३ क. कार्योपकृतिं, [कार्योपसृतिं].

क्व यासि किं पश्यसि किं प्रयोजनं
क्व वेश्वरो वा क्व च तस्य नाम किम् ।
कियद्बलं वा कतियोजने स्थितं
वदेति संगृह्य ववन्धुरीश्वरम् ॥ ७७
अथागतः सार्थपरीक्षणाय चे-
त्परीक्ष्यतां साधु परीक्ष्य चारिकः ।
प्रवालमुक्तामणिरूप्यकाञ्चनै-
रयं भृतः सार्थ इतो निगद्यताम् ॥ ७८
न चारिकोऽहं न च वित्तमार्गणो
न दुष्टबुद्धिर्न च चौर्यतत्परः ।
न कस्यचित्प्रेष्यजनो भवाम्यहं
भ्रमामि निःकेवलमित्युवाच सः ॥ ७९
वयं न विद्मोऽर्थपतिः प्रमाणको
गुणागुणान्वेषणतत्परायणः ।
स एव जानाति यदत्र युक्तिमा-
निति ब्रुवाणाः पतये प्रणिन्यिरे ॥ ८०
सबन्धनं चारुसमग्रयौवनं
सुलक्षणव्यञ्जनलक्षविग्रहम् ।
समीक्ष्य सार्थाधिपतिर्न तस्करो
विमुच्यतां लघ्वयमित्युवाच सः ॥ ८१
नरेन्द्रपुत्रः स्वयमेव वा नृपः
शरीरचार्वाकृतिसौम्यदर्शनः ।

१ क. नः केवलं. २ म. °लक्ष्म, [. °लक्ष्य ].

कथं न्विमामापदमाप्तवानयं
स सार्थनाथः परिपृच्छति स्फुटम् ॥ ८२

कुतस्तवायातिरितः क गच्छसि
पिता च माता च सुहृज्जनः क ते ।
श्रुतं च गोत्रं चरणं च नाम किं
न चेद्विरोधो वद वत्स पृच्छतः ॥ ८३

स एवमुक्तः प्रविचक्षणो नृपः
परीक्ष्य पूर्वापरकार्यमब्रवीत् ।
इयं त्ववस्था कथयत्ययत्नतः
किमेतया संकथया विमुच्यताम् ॥ ८४

निशम्य तद्वाक्यमुदारसौष्ठवं
समूचिवान्ससंदि सार्थनायकः ।
अहो विशुद्धान्वयतास्य पश्यतो[1]
न विस्मयं गच्छति नैव कुप्यति ॥ ८५

इति प्रशंसन्गुणरूपसंपदं[2]
निरीक्ष्य च क्षामकपोलनेत्रताम् ।
करेण हस्तं प्रतिगृह्य दक्षिणं
स नीतवानात्मनिवासमादरात् ॥ ८६

प्रदाप्य पाद्यं वणिजां पतिस्ततो
हितं वचः श्रोत्रसुखं निगद्य[3] च ।
वरासने वेत्रमये निवेश्य तं
सतैलसंवाहनतामकारयत् ॥ ८७

१ [पश्यत]. २ म संपदं. ३ क निगद्य । वरासने वेत्रमयेऽस्य निवेश्य संवाहनतामकारयत् ॥.

दयासंप्रयुक्तो वणिक्श्रेणिनाथः
शशासात्मभृत्यं लघु स्नापयेति ।
यथेष्टं वरान्नं चतुर्भिस्त्वहोभि-
रभुङ्क्ताग्रतः श्रेष्ठिनः संनिविष्टः ॥ ८८

सुगन्धं सुमाल्यं वरं वस्त्रयुग्मं
प्रदायात्मशक्त्या क्षमस्वेत्यवोचत् ।
भवद्भिः सहैवागमिष्यामि ताव-
दिति प्राह सोऽप्येवमस्त्वित्युवाच ॥ ८९

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
सागरवृद्धिसंदर्शनो नाम
त्रयोदशमः[1] सर्गः ।

---

## [ चतुर्दशः सर्गः ]

एकाकिनारण्यपथेन याता प्राप्तानि दुःखानि सुदुस्सहानि ।
इति प्रसंधार्य निवृत्तयानः सार्थाधिपेनैव सहोपविष्टः ॥ १
प्रगृह्य मानाकृतिचारुवेषान्विभूष्य माल्याम्बरभूषणानि ।
भुक्त्वा यथेष्टं वाणिजस्तु गोष्ठीनिष्ठैः[2] समध्यासत[3] संकथाभिः ॥ २
सार्थेन सर्वर्द्धिमतार्थिनस्ते सहागता ये नटनर्तकाद्याः ।
वागङ्गचेष्टाकृतिकौशलं स्वं प्रारेभिरे दर्शयितुं यथावत् ॥ ३
गायन्ति गीतानि मनोहराणि नृत्यन्ति नृत्यान्यपरे विधिज्ञाः ।
वाद्यानि वीणामुरजादिकानि[4] शिक्षानुपूर्वं प्रतिवादयन्ति ॥ ४

१ [ त्रयोदशः ]. २ म गोष्ठे निष्ठः. ३ [ समध्यासत ]. ४ म °मुरुजा°.

प्रहाससंलापविलासवन्ति रसानुविद्धानि सुकल्पितानि ।
लोकप्रवृत्तानि कथान्तरेषु भाण्डाविचित्राणि विलम्बयन्ति ॥ ५
तदैव दिग्रक्षणतत्पराक्षाः पुलिन्दसंदर्शनतो विभीताः ।
अभ्येत्य तूर्णं वणिजां समूहे इत्थं पुनः सागरवृद्धिमूचुः ॥ ६
महाबलौ क्रूरतमावसह्यौ कालो महाकाल इति प्रतीतौ ।
पुलिन्दकानां त्रिचतुस्सहस्रैराजग्मतुर्नाथ हितं कुरुष्व ॥ ७
दिग्रक्षकाणां वचनं निशम्य आहूय युद्धाय नरान्सुभृत्यान् ।
वाग्दानमानैरभिसंप्रपूज्य संनह्यतेति प्रशशास तूर्णम् ॥ ८
संनह्यतस्तान्नृपतिः समीक्ष्य श्रुत्वातितूर्णं पृतनाद्वयस्य ।
सखेटकं खड्गवरिष्ठमेकं श्रेष्ठिन्ममापि त्वमुपानयस्व ॥ ९
बालः कृशाङ्गः सुकुमारकोऽसि सुदुर्धरं युद्धमुखं हि भद्र ।
किमायुधेनास्स्व मयैव सार्धमित्युक्तवान्सार्थपतिः कुमारम् ॥ १०
अथानयोर्व्याधवणिग्ध्वजिन्योर्विद्युद्वपुश्चञ्चलशस्त्रवत्योः ।
शृङ्गाण्यदभ्राः पटहाश्च शङ्खा उद्वेजयन्तोऽतिभृशं विनेदुः ॥ ११
पुलिन्दनाथौ बृहदुग्रवीर्यौ द्विपद्सहस्रेण बलेन साकम् ।
शरोरुवर्षं प्रतिवर्षयन्तौ प्रत्युद्गतौ वन्यगजेन्द्रलीलौ ॥ १२
प्रत्यागतांस्तान्वणिजः समीक्ष्य पुलिन्दसेना ज्वलदग्निकल्पा ।
धनुर्धरास्तीक्ष्णमुखैः पृषत्कैरमोघपातैर्विविधुर्विचित्रैः ॥ १३
क्रोधोद्धता मानमदावलिप्ता लोभाभिभूता दृढबद्धवैराः ।
सुबद्धकक्षाः प्रगृहीतशस्त्राः परस्परं जघ्नुरुपेत्य शूराः ॥ १४
दण्डाभिघातैः क्षपणैः प्रहारैः संभिण्डमालैर्मुसलैस्त्रिशूलैः ।
कुन्तैश्च टङ्कैर्मुसलैर्गदाभिः सतोमरैः शवन्यभिमुञ्चन्‌तु ॥ १५

१ [ भाण्डानि विचित्राणि विडम्बयन्ति ]. २ स भिद्यमानि. ३ ख. कलाः.
४ [ सभिन्दमालै ].

विदार्य वक्राणि विभिद्य कायान्वितुद्य नेत्राणि विकृत्य बाहून् ।
शिरांसि विच्छिद्य परस्परस्य निपातयां भूमितले बभूवुः ॥ १६

[1]शिरांसि निस्तीक्ष्णतमैरकुन्तै-
रमर्पमाणास्तु वणिक्पुलिन्दाः ।
अन्योन्यमर्माणि विचिच्छिदुस्ते
प्राणाञ्जहुः केचन मूर्च्छिताश्च ॥ १७

वक्षस्सु तेषां समरप्रियाणां स्रवन्महाशोणिततोयधाराः ।
रेजुर्भृशं क्रोधबलेक्षणानां तटे गिरीणामिव गैरिकाम्भः ॥ १८
स संप्रहारो रणकर्कशानां वीरव्रणालङ्कृतभासुराणाम् ।
मत्ताद्विपेन्द्रोपमविक्रमाणां पर्यन्तसंघट्टसमो बभूव ॥ १९
एवं प्रवृत्ते समरेऽतिघोरे पादाभिघातप्रभवै रजोभिः ।
संछादितं खं धरणीतलं च सैन्यद्वयं प्रापदहश्यरूपम् ॥ २०
महाहवः शोणित[3]चन्दनाक्तो [4]बहुप्रकाराङ्गदचारुलीलः ।
क्षरद्विलोलान्त्रनिबद्धमालः सन्ध्याम्बुदाकारवपुर्बभार ॥ २१
[5]असृक्क्रिमिश्रोणिरुजांसि[6] भूयस्तान्येव सिन्धूरवपूंषि बभ्रुः ।
ते चापि योधा द्विगुणाभिरोषाः परस्परं प्रेक्ष्य जिहिंसुरुग्राः ॥ २२
पुलिन्दकानां वणिजां च घोरं मुहूर्तमेवं समयुद्धमासीत् ।
ततः पुलिन्दैरभिभूयमानाः पराबभूवुर्वणिजो भयार्ताः ॥ २३
मृष्टान्नपानानि हि योषितश्च भोगांश्च चित्रान्समनुस्मरन्तः ।
न्यायार्जितक्षेमधना वयं तु न योध्दुमीशा इति ते प्रदुद्रुवुः ॥ २४
विज्ञाय भङ्गं वणिजां तदानीं पुलिन्दसेना प्रबला सती सा ।
सार्थं कृतार्थं विदितार्थसंख्यामितोऽमुतः प्रारभत प्रलोप्तुम् ॥ २५

१ [शरासिभिस्तीक्ष्णतमैश्च कुन्तै° ]. २ म °तमैरकण्ठै°. ३ क °द्विपेन्द्रोत्तम°. ४ म बाहु°. ५ क असृक्क्रिमि°. ६ [ °श्रोणिरजांसि ].

विद्रावयन्ती वणिजां प्रभुत्वं समन्ततः प्राय पुलिन्दसेना ।
तां राजपुत्रः प्रसमीक्ष्य शूरश्चुक्षोप शार्दूल इवातिधृष्टः ॥ २६
हत्वा प्रदस्यून्समरागतांस्तान्वणिग्जनं तं परिपालयामि ।
अहोस्विदत्रैव च दस्युसंघैर्हतो मृतः स्वर्गमितः प्रयामि ॥ २७
एवं विनिश्चित्य पुलिन्दमेकं पादप्रहारेण निपात्य भूमौ ।
सखेटकं खड्गमवार्यवीर्यः प्रसह्य जग्राह मृगेन्द्रसत्त्वः ॥ २८
उद्भ्राम्य खड्गं विधिवत्क्रियावान् प्रविश्य मध्ये शरसंकटस्य ।
शरप्रपातान्यपि वञ्चयित्वा पुलिन्दनाथात्मजमाप तूर्णम् ॥ २९
पूर्वं त्वमेव प्रहरस्व तावत्पश्यामि पश्चाद्बलमावयोस्तु ।
इत्येवमुक्तो धृतशस्त्रपाणिस्तस्थौ पुरस्ताद्द्रुतमुग्रवीर्यः ॥ ३०
निरुध्यमानः क्षितिपात्मजेन पुलिन्दनाथस्य सुतोऽतिमुग्धः ।
नरेश्वरं तं प्रजहार रोषादशिक्षितो वन्य इव द्विपेन्द्रः ॥ ३१
नैष प्रहारोऽसुनिपातदक्षः क्षमस्व मे सांप्रतमेकघातम् ।
इति ब्रुवन्खेटकखड्गहस्तः क्रोधोद्धतो वल्गनमाचकार ॥ ३२
शिक्षाबलेनात्मपराक्रमेण स तं प्रहारं प्रतिवार्य वीरः ।
प्रहारमेकं प्रददावमोघं येनाहतोऽसून्प्रजहौ स कालः ॥ ३३
कालस्य कालप्रतिमः पिताऽसौ लोके महाकाल इति प्रतीतः ।
हतं सुतं प्रेक्ष्य रुजा प्रदीप्तः समाप्तकालः स्वयमाययौ सः ॥३४
हत्वा सुतं मे क्व नु गच्छसि त्वं यद्यस्ति शौर्यं तव तिष्ठ तिष्ठ ।
त्वांमन्तकप्राभृतकंऽतियुक्तो भवेयमद्यैव हि मा वरिष्ठं ॥ ३५
वैवस्वते मे न च भक्तिरस्ति न चाप्यहं त्वद्दर्शनाद्व्रजामि ।
त्वं भक्तिमान्योग्यतमश्च तस्मै त्वां प्रापयामीति जगाद राजा ॥३६

१ [ प्राप ]. २ [ क्षुक्षोभ ]. ३ क. गताहत . ४ [ त्वमन्तकप्राभृतकं ]. ५ [ भवेदमथैव...वरिष्ठ ]. ६ ख वैवस्वतो. ७ क. त्वद्दर्शनाद्.

किमत्र चित्रैर्वचनैर्निरर्थकैर्योत्स्ये प्रतीक्षस्व हि मा चलस्त्वम् ।
इत्याश्रितो योद्धुमना युवेन्द्रः सोऽप्यागतस्तीव्रनिवद्धवैरः ॥३७
परस्परोद्वञ्चनकुञ्चिताक्षौ परस्परच्छिद्रपरायणौ तौ ।
परस्पराघातविवृद्धरागौ परस्परं जघ्नतुरुग्रकोपौ ॥ ३८
पुलिन्दनाथस्य तु शस्त्रपातं प्रपञ्चयत्यात्मकलावलेन ।
नरेन्द्रपुत्रस्य दृढप्रहारस्तस्याङ्गभङ्गं वहुशश्चकार ॥ ३९
ऊर्ध्वप्रहारेऽवनतिं प्रपेदे अधःप्रहारे पुनरुत्पपात ।
समप्रहारे विययौ च पार्श्वं ररक्ष शिक्षागुणतः स्वगात्रम् ॥ ४०
उत्कृष्य खड्गं विधिनोपसृत्यास्थानं समास्थाय रुषा परीतः ।
वामांसमाक्रम्य जघान तस्य मत्तद्विपं सिंहशिशुर्यथैव ॥ ४१
लब्धप्रहारः क्षितिपात्मजेन विभ्रान्तदृष्टिः स पुलिन्दनाथः ।
स्फुरत्तनुर्भूमितले पपात दवाग्निनात्युच्छ्रितशालकल्पः ॥ ४२
शेषांश्च दस्यून्प्रतियोद्धुकामान् जघान तांस्तान्समरे युवेन्द्रः ।
पलायमानानपरान्निरुध्य चिच्छेद तेषां करकर्णनासम् ॥ ४३
नृपात्मजेन प्रतिहन्यमानास्तमेव केचिच्छरणं प्रजग्मुः ।
विन्यस्य वक्त्रे त्वपरे तृणानि जिजीविताशाः प्रययुर्भयार्ताः ॥४४
हतेश्वरे सापि पुलिन्दसेना दुद्राव शस्त्राणि विसृज्य दूरात् ।
नरेश्वरोद्भ्रादितशत्रुपक्षः पुनर्निवृत्तः समराजिराय ॥ ४५
रणावनौ सिंहरवानुकारी क्षेमप्रशंसी पटहो ननर्द ।
प्रत्यागतास्ते पटहस्वनेन पप्रच्छुरन्योन्यमविघ्नतां च ॥ ४६
विघाटिता रत्नसुवर्णपेटा भिन्नानि भास्वन्मणिभाजनानि ।
दुकूलकौशेयकचामराणां भारान्विशीर्णानथ वीक्षमाणः ॥ ४७

१ [ इत्यास्थितो ]. २ म पुलीन्द्र°. २ [ प्रवञ्चयत्यात्म° ]. ३ म उत्कृष्य. ४ म °शालि°. ५ [ विजीविताशाः ]. ६ [ हतेश्वरा ]. ७ [ नरेश्वरोद्ग्राहित° ].

तत्रावनीन्द्रं परिमूर्च्छिताशं व्रणस्रवच्छोणितलिप्तगात्रम् ।
ईषच्छ्वसन्तं हि निमीलिताक्षं रणाजिरे सार्थपतिस्त्वपश्यत् ॥४८
शरासिपातव्रणमण्डिताङ्गः श्रमाभिभूतो विनिपत्य भूमौ ।
रराज राजा कमनीयरूपो लाक्षारसाक्लिन्न इवेन्द्रकेतुः ॥ ४९
हा वत्स किं जातवदार्यवर्य किं मौनमास्थाय सुखोपितोऽसि ।
उत्तिष्ठ भद्राशु कुरु प्रसादं प्रदेहि नाथ प्रतिवाक्यमेहि ॥ ५०
बालोऽसहायो बलवर्जितश्च सकर्पटोऽजन्निथ शत्रुसैन्यम् ।
युवा समर्थः स्वपदे स्थितश्चेत्स शासनः शान्तवधाः प्रति स्यात् ५१
अयत्नतस्त्वं पुनराधमर्ण्यं प्रसव्य यातः कुशलोऽस्यतीव ।
कृतोपकारः प्रतिकारहीनो गतासवे किं करवाणि ते हि ॥ ५२
नैवाब्रवीस्त्वं कुलबन्धुदेशान्स्मृत्वापि यांस्तुष्टमना व्रजेयम् ।
किं वा स्वदेशं न गतोऽसि भद्र इति ब्रुवन्विप्रललाप सार्थी ॥ ५३
वणिग्जनानां करमर्शनेन शीतोदकैश्चन्दनवारिभिश्च ।
आप्यायमानो व्यजनानिलैश्च उन्मील्य नेत्रद्वयमालुलोके ॥ ५४
ततो मुहूर्तात्प्रतिलब्धसंज्ञः शनैः समुत्थाय कुमारवर्यः ।
प्रभाषमाणो विगतश्रमस्सन् सुखं निषण्णः परिचारितस्तैः ॥ ५५
आश्चर्यमस्मान्न च विद्यतेऽन्यज्जीवो गतोऽस्य प्रतिसंनिवृत्तः ।
इति ब्रुवाणा वणिजां प्रधानाः सविस्मयाः संतुतुषुः समन्तात् ॥ ५६
सार्थाधिपो तद्धृदि जातहर्षः कृतस्य स प्रत्युपकारमिच्छन् ।
सद्रत्नलक्षं च सुवर्णकोटीं ददौ नृपायाप्रतिपौरुषाय ॥ ५७
आनीतमर्थं प्रविलोक्य धीमान्नैवागमद्विस्मयमाभिजातः ।
तस्यानुमानं स पुनर्विदित्वा दत्तं च न्यासमिष्टमस्य इत्यन्यमृच्छुः ॥ ५८

१ [ हा वत्स जातं तव किं वदार्य ]. २ [ [illegible]पः ].

तद्वाक्यतः सार्थमलुब्धबुद्धिः शशास सर्वं क्रियते तथेति[1]।
आज्ञापिताः स्वाञ्जलिभिर्दरिद्रा नटा विटाश्चादधुरादरेण ॥ ५९
तं स्नापयित्वा व्रणशोणिताक्तं क्षिप्तौपधानि[2] व्रणरोपणानि।
शमं प्रचक्रुः कतिभिर्दिनैश्च स्वाम्याज्ञया ते भिषजां वरिष्ठाः ॥ ६०
ततः प्रशस्ते दिवसे तु सार्थः संप्रस्थितो राष्ट्रमभिप्रवेष्टुम्।
नरेश्वरः सागरवृद्धिनैव शनैः प्रयातः शिविकाधिरूढः ॥ ६१
नटा विटाः कार्पटिका भटाश्च सार्थानुयाता द्विजजातयश्च।
देशान्तरं प्राप्य समान्तरेषु ते तस्य कीर्तिं प्रथयांबभूवुः ॥ ६२
द्विषट्सहस्रं तु पुलिन्दवृन्दं जित्वा रणे मत्तकरीन्द्रलीलः।
कश्चिद्भटः सार्थमथैक एव वने ररक्षेति यशस्ततान ॥ ६३
ग्रामेषु राष्ट्रेषु पुरेषु चैव विश्रम्य सार्थः खलु तत्र तत्र।
शनैः प्रपेदे स्वपुरं पुराणं निर्विघ्नसंपादितभाण्डसारः ॥ ६४
कृतार्थकार्यं प्रतिसंनिवृत्तं निशम्य ते सागरवृद्धिवृद्धम्।
स्त्रियः पुमांसश्च सबालवृद्धाः प्रत्युद्ययुर्नागरिकाः समग्राः ॥ ६५
स्त्रीभिः समं सागरवृद्धपत्नी कृतार्थयात्रं स्वपतिं दिदृक्षुः।
कश्चिद्भटं ख्यातयशोवितानं पूर्वं तमालोकितुमाजगाम ॥ ६६
तां श्रेष्ठिपत्नीं निरवद्यभावां कश्चिद्भटो वीक्ष्य ससंभ्रमः सन्।
प्रत्युत्थितो मातृसमामभीप्सन् सा[3] चापि मेने स्वसुताधिकं तम् ६७
ततः स्वभर्तारमुपेत्य साध्वी प्रहृष्टभावा विनयं नियुज्य।
चिरप्रवासागतमादरेण पप्रच्छ किंचित्कुशलं प्रियस्य ॥ ६८
स्वबन्धुमित्राणि च पुत्रदारान्सनागरान्स्थानविशेषयुक्तान्।
समानवृत्तान्वयवृत्तशीलान्समीक्ष्य तान्कौशलमभ्यपृच्छत् ॥ ६९

१ [ क्रियतां ]. २ [ क्षिप्त्वौषधानि ]. ३ क सा चाभिमेने.

पुलिन्दसेनागमनिर्गमौ च कालोरुकालद्वयधर्मकालम् ।
कश्चिद्भटश्चाप्रतिपौरुषं च सर्वं तथाचष्ट यथानुवृत्तम् ॥ ७०
अष्टादशश्रेणिगणप्रधानैः संपूजितः सागरवृद्धिना च ।
कश्चिद्भटश्चारुविशालवेषो महाविभूत्या नगरं विवेश ॥ ७१
श्रेष्ठी ततः स्वं भवनं प्रविश्य व्याहृत्य कश्चिद्भटमादरेण ।
पृथक्पृथग्द्रव्यमनेकरूपं तत्तत्तु तस्मै कथयांबभूव ॥ ७२
इमाः स्वसारस्त्वनुजास्तवेमे इयं हि माता स्वजनस्तवायम् ।
इदं धनं पुत्रकमित्रवर्गः सर्वं त्वदायत्तमितः प्रविद्धि ॥ ७३
इत्येवमर्थाधिपतिस्तमर्थं सजीवनिर्जीवमयत्नसिद्धम् ।
संदर्श्य भूयः स्वजनैः समेतः सुखं कृतार्थः स्वगृहेऽभ्यवात्सीत् ॥ ७४
अथान्यदा श्रेणिगणप्रधानाः संमन्त्र्य वृद्धैरनुकूलवृत्तैः ।
अभेत्य पत्न्या सह सोपचारं कश्चिद्भटं कान्ततयेत्थमूचुः ॥ ७५
अस्मिन्पुरे ये वणिजः प्रधाना अनेककोट्यर्थविशेषवन्तः ।
त्वद्रूपविज्ञानगुणान्समीक्ष्य प्रदातुमिच्छन्ति सुताः प्रतीच्छ ॥ ७६
अपेतभाग्यास्थिरसत्त्वसारो वने भ्रमंस्त्वां कथमप्यपश्यन् ।
तदेव पर्याप्तमितः किमु स्यादित्यूचिवान्सागरवृद्धये सः ॥ ७७
श्रेष्ठी पुनः सर्वमिदं तवैव निश्शङ्कितो भुङ्क्ष्व दधत्स्व पुत्र ।
यथेच्छसि त्वं तु तथा भजस्व मा मेव इत्थं वद इत्यवोचत् ॥ ७८
इत्यूचिपि श्रेष्ठिनि सोऽभ्यवोचद्यथेष्टचेष्टः सह शिष्टगोष्ठ्या ।
वसाम्यथैवं यदि रोचते ते किं दारकार्येण विमृश्यामि ॥ ७९

१ म पुलीन्द्र°. २ क तनुजास्तवेमे. ३ म तदायत्तं. ४ [स्वगृहेऽभ्यवात्सीत्]. ५ म अभीत्य, [अभ्येत्य]. ६ म पात्र नयेत्य. ७ [प्रतीच्छ]. ८ क अपेत्य भाग°, [°भाग्योऽस्थिर°]. ९ [अपश्यम्]. १० म तद्वत्स. ११ म इत्यूचिषि. १२ [विमृश्यामि].

स तस्य चित्तानुगतं विदित्वा तथा तथास्तामिति संप्रधार्य ।
प्रियाणि सार्थाधिपतिर्निगद्य स्वधर्मकर्माभिरतो बभूव ॥ ८०
अथान्यदोद्यानवनं प्रयाता वणिक्सुताः शिष्टघटाश्च सर्वाः ।
संमन्त्र्य कश्चिद्भटमादरेण श्रेष्ठी भवेत्यूचुरुदारवृत्तम् ॥ ८१
नरेन्द्रपुत्रोऽहमभूवमादौ युवावनीन्द्रस्तु युवत्वकाले ।
प्रवर्धमानो वणिजां प्रभुत्वं पर्याप्तमेतावदिहात्मवद्भ्यः ॥ ८२
प्रवर्धमानः किल भूमिपालः श्रेष्ठित्वमाप्नोति च लोकवादः ।
स एष वादो मयि सत्यभूत आप्नोति नामानि बहूनि जीवः ॥८३
प्रीतिं त्वमीषां न निवारयामि एतच्च पश्यामि वणिक्प्रभुत्वम् ।
इति स्मरन्नात्मपुराकृतानि तेषामनुज्ञाय बभूव तूष्णीम् ॥ ८४
कश्चिद्भटस्याप्रतिपौरुषस्य विज्ञाय चित्तं ललितानगर्याम् ।
वणिक्सुताः शिष्टघटाः प्रपद्य श्रेष्ठित्वपट्टं हि बबन्धुरिष्टाः ॥ ८५
वणिक्प्रभुत्वेन विराजमानं कश्चिद्भटं कान्ततमं गुणौघैः ।
समीक्षमाणाः पुरवासिनस्ते इदं समूचुः स्वमनोऽभिलाषम् ॥८६
पूर्वं तु पुण्योपचितान्मनुष्यान्स्वयं धनःश्रीसुखताः श्रयन्ते ।
वियोगधीर्दुःखविपत्तिशोकाः श्रयन्ति मर्त्यानकृतः पुमांस्तु (?)॥
कुतो गतो व्याधगणान्बभञ्ज कुतो गतः श्रेष्ठिसुतत्वमाप ।
कुतो गतः सार्थपतिर्बभूव कुतो गतः सर्वजनैः प्रकथ्यः ॥ ८८
कश्चिद्भटः सार्थपतिः सदारः पुत्राश्च पौत्रा बहुबन्धुवर्गः ।
पुरोपवासव्रतपुण्यपुण्यं सहार्जयित्वा तदिहागताः स्युः ॥ ८९
रूपं वपुः शौर्यमथापि शीलं शुचित्वमारोग्यमुदारबुद्धिम् ।
जगज्जनाक्षिप्रियतापटुत्वं कश्चिद्भटः केन सुलब्धवान्स्यात् ॥९०

१ म श्रेष्ठित्वमाप्तोऽपि. २ [धनस्त्रीसुखदाः]. ३ म °गणाद्बभञ्ज. ४ [°जन्य°].

पुरा त्वनेनाध्युषितं पुरं यत्तस्मिन्मनुष्या न च भाग्यवन्तः ।
यस्मिन्पुरेऽनेन वसन्ति सार्धं ते भाग्यवन्तस्त्विति केचिदूचुः ॥
गुणाधिकेनाप्रतिपौरुषेण यदुज्झितं शून्यवदेव तत्स्यात् ।
इदं पुरं भद्रगुणं प्रकृत्या सौभद्रमेवेति च केचिदूचुः ॥ ९२
नृणां प्रियोऽसौ खलु पौरुषेण रूपेण नारीनयनाभिकान्तः ।
विद्वंद्गुरूणां विनयोपचारैः कश्चिद्भटोऽतिप्रियतां प्रयातः ॥ ९३
एवं महात्मा प्रथितप्रणादः कश्चिद्भटाख्यां प्रतिलभ्य शूरः ।
वराङ्गनामत्वमथापसृज्य वणिग्जनैः सार्धमुवास तस्मिन् ॥ ९४
आख्यायिकाभिश्च कथाप्रपञ्चैर्नाट्यैश्च गीतैः परिवादिनीभिः ।
उद्यानयानै रतिहेतुभूतैः काश्चिद्भटेन प्रतिनीयतेऽद्धा ॥ ९५
एकान्ततः संस्मरति स्वबन्धून् कदाचिदन्तर्गतदाहभावः ।
कदाचिदुन्मत्त इव ब्रवीति स्वस्थः कदाचित्परमार्थदृष्ट्या ॥ ९६

ललितपुरनिवासिभिर्वणिग्भिः
सुखधनधर्मफलानि पृच्छ्यमानः ।
अकथयदखिलानि तानि तेभ्यो
युवनृपतिः स जगत्प्रयोजनानि ॥ ९७
पुनरथ सकलान्कलान्गुणांश्च
प्रतिगमयन्पुरधीवणिग्जनानाम् ।
जिनमतममलं प्रकाशयंश्च
ललितपुरं ललितः सदाध्युवास ॥ ९८

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
ललितपुरप्रवेशो नाम
चतुर्दशः सर्गः ।

---

१ म विट्र.

[ पञ्चदशः सर्गः ]

अथोत्तमपुरे तस्य वाजिनापहृतस्य यत् ।
वृत्तान्तं कथितं सर्वमिदमन्यान्निबोधत ॥ १
राजानो राजपुत्राश्च मन्त्रिणो दण्डनायकाः ।
भोजका भृत्यवर्गाश्च ये राज्ञा सह निर्गताः ॥ २
युवराजाधिरूढं तं वाजिनं वायुरंहसम् ।
[1]अनुगम्याप पश्यन्तो बभ्रमुस्ते वनान्तरे ॥ ३
अपरे संनिवृत्त्याशु तुरङ्गहृतनायकाः ।
[2]आक्रोशन्तो विषण्णास्ते निवेदयितुमागताः ॥ ४
पितरं तस्य संदृश्य बालादित्यसमप्रभम् ।
ससंभ्रमा समाश्रित्य वचनं चेदमब्रुवन् ॥ ५
वाजिनावार्यवीर्येण दुर्विनीतेन पार्थिव ।
वायुवेगप्रतापेन युवराजोऽपहारितः ॥ ६
केनापि हयरूपेण दववदानवरक्षसा ।
सर्वेषामग्रतो नीतो वराङ्गस्तु महीपते ॥ ७
तेषां तद्वचनं श्रुत्वा समाहूयात्ममन्त्रिणः ।
मन्त्रमध्यास्त मतिमान्युवराजाय वाहने (?) ॥ ८
विचारयत केनायं द्विषता नोपवाहितः ।
[3]कुमारोभ्यतरस्त्वेन वत वाह्येन मण्डले ॥ ९
रूपलावण्यलोभेन विद्यावलयुवा स्त्रिया ।
देवरक्षःपिशाचैर्वा हृतः स्यात्पूर्ववैरिभिः ॥ १०

१ [ अनुगम्य प्रपश्यन्तो ]. २ म आक्रोशन्ते. ३ [ कुमारोऽभ्यन्तरत्वेन ].

इत्याज्ञाप्य नृपोऽमात्यान्मण्डलानि प्रतीक्षितुम् ।
दूतान्संप्रेपयामास मार्गणार्थमितोऽमुतः ॥ ११

ते मडम्बपुरग्रामानद्यरण्यागिरिव्रजान् ।
परीत्य न च पश्यन्तो निराशाः पुनराययुः ॥ १२

केचिदश्वानुमार्गेण गत्वा दूरं वनान्तरे ।
वाजिनं तु गतप्राणं कूपेऽपश्यन्यदृच्छया ॥ १३

युवराजमपश्यन्तो भ्रान्त्वा वननदीगिरीन् ।
कक्षवृक्षक्षुपाकीर्णान् पुरमेव गतास्ततः ॥ १४

कटकं कटिसूत्रं च केयूरं कुण्डलद्वयम् ।
अश्वभाण्डं च संगृह्य राज्ञे सर्वं निवेदयन् ॥ १५

श्रुत्वा तेषां वचो राजा दृष्ट्वा तस्याङ्गभूषणम् ।
मुञ्चन्नुष्णं च निःश्वासं दुःखसंभ्रान्तलोचनः ॥ १६

गण्डस्थलं करे न्यस्य सुतं शोचन्मुहुर्मुहुः ।
प्रत्युवाच पुनस्तेभ्यः कम्पयन्करपल्लवम् ॥ १७

कथाकाव्यपुराणेषु अश्वेनापहृता इति ।
अश्रूयन्तमिदं सर्वं प्रत्यक्षं समुपस्थितम् ॥ १८

सुतदुःखहिमाक्रान्तं मम्लौ वदनपङ्कजम् ।
तुषाराम्बुसमाक्रान्तं प्रफुल्लमिव पङ्कजम् ॥ १९

यद्वत्पूर्णशरच्चन्द्रो निःप्रभो राहुणावृतः ।
राजेन्द्रो निर्वभौ तावच्छोकग्रहसमाप्लुतः ॥ २०

यथा हृतमणिर्नागो भग्नदन्तो गजोऽपि वा ।
तथा गतसुतो राजा न रेजे कान्तिमानपि ॥ २१

१ क मार्गणार्थमतोऽमुतः. २ म °ज्ञानाम्नप्यरण्य°. ३ [ °न्निवेदयन् ]. ४ म अश्रूयंतमिदं, [ आश्रूयन्त इदं ].

एवं दुःखार्णवे मग्ने पत्यौ वर्षचरोत्तमाः[1] ।
गुणदेव्यै यथावृत्तमुपगम्याचचक्षिरे ॥ २२
श्रुत्वा पुत्रवियोगं सा देवी वाष्पाकुलेक्षणा ।
हा पुत्र केन नीतस्त्वमित्युक्त्वा न्यपतद्भुवि ॥ २३
ततः परिजनैस्तूर्णं शीतलव्यजनानिलैः ।
चन्दनोदकसंमिश्रैर्गात्रसन्धिषु पस्पृशे ॥ २४
शनैराप्यायिता देवी उन्मील्य नयनद्वयम् ।
हा वत्स क्व गतोऽसीति विविधं विललाप सा ॥ २५
तवागतात्र या पीडा सा मे किं न भविष्यति ।
वरं मे मरणं वत्स जीवितं किं त्वया विना ॥ २६
कुण्डलाङ्कितगण्डस्य हारशोभितवक्षसः ।
तव यद्दर्शनं पुत्र त्रैलोक्यैश्वर्यतोऽधिकम् ॥ २७
वत्स हित्वाऽनवद्याङ्ग विद्वज्जननिषेवितम् ।
कथं स्मरन्ती जीवामि विनयाचारभूषितम् ॥ २८
चलच्चामरवृन्देन ज्वलन्मकुट[2]शोभया ।
ज्वलन्तं यौवराज्येन कथं वा विस्मराम्यहम् ॥ २९
मया वियोजिताः पुत्रा मृगाणामन्यजन्मनि ।
तत्कर्मपरिणामोऽयं साद्दष्टिक[3]मुपस्थितम् ॥ ३०
अत्राणाशाश्वतासारा जन्मवत्ता हि देहिनाम् ।
सा मयाद्य परिज्ञाता जाता[4] नैवास्ति कस्यचित् ॥ ३१
पुरात्मचरितं कर्म तदवश्यमवाप्यते ।
प्रतिषेद्धुं नियन्तुं वा न शक्यं त्रिदशैरपि ॥ ३२

१ [ वर्षधरोत्तमाः ]. २ [ °मुकुट° ]. ३ [ सांदृष्टिक° ]. ४ [ ज्ञाता ].

एवं पुत्रवियोगेन मनस्संतापकारिणा ।
महीपतौ च देव्यां च तद्दुःखं मूर्तितां गतम् ॥ ३३
भार्यास्त्वनुपमाद्यास्ता विबुधेन्द्राङ्गनोपमाः ।
वियोगं युवराजस्य श्रुतवन्त्यस्तु तत्रसुः ॥ ३४
वायुनातिप्रचण्डेन लता इव विकाम्पिताः[1] ।
भर्तृदुःखानिलहता निपेतुर्वसुधातले ॥ ३५
ततो वामनिकाः कुब्जा धात्र्यः संपरिचारिकाः[2] ।
रुदन्त्यस्त्वरयाभ्येत्य सर्वास्ताः परिवव्रिरे ॥ ३६
अपराश्चेतनावन्त्यः शीतलोदकबिन्दुभिः ।
गोशीर्षचन्दनाक्तैस्तैः सिषिचुः परितोऽङ्गनाः ॥ ३७
तालवृन्तानिलैर्हारैर्मणिभिः पुष्पदामभिः ।
सुखसंस्पर्शनं चक्रुश्चलद्वलयपाणयः ॥ ३८
अथोपलब्धसंज्ञास्ता युवराजप्रियाङ्गनाः ।
विलपन्त्यो रुदन्त्यश्च स्फुरन्त्यश्च समुत्थिताः ॥ ३९
निरर्था इव वाग्जाला लता निःकुसुमा इव ।
युवराजस्य भार्यास्ता भर्तृहीना न रेजिरे ॥ ४०
काश्चिद्धेमजलास्पृष्टा विपण्णकमलाननाः ।
अश्रुधारां विमुञ्चन्त्यः प्रचेलुर्दुःखवायुना ॥ ४१
गण्डदेशे करं न्यस्य विकीर्णासितमूर्धजाः ।
काश्चिज्जगर्हिरे भोगान्दुरन्तान्विगतस्पृहाः ॥ ४२
काश्चिन्मृदुपदन्यासैः करैः रक्तोत्पलोपमैः ।
दुःखवेगातिविभ्रान्ता ननृतुः कौशलादिव ॥ ४३

१ म निकम्पिताः. २ म सपरिचारकाः.

वियोगतापसंतप्ताः काश्चिन्मम्लुः क्षणात्पुनः ।
काश्चित्प्रकृतितन्वङ्ग्यश्छिन्नमूला लता इव ॥ ४४
काश्चित्कारुण्ययुक्तानि गीतानि मधुरस्वरैः ।
तद्गुणख्यापकान्येव विलेपुर्विविधानि ताः ॥ ४५
कृतान्त निर्भय क्रूर स्त्रीवधं ध्रुवमाप्स्यसि ।
प्रियादस्मान् वियोज्य त्वमित्यूचुः काश्चिदङ्गनाः ॥ ४६
अस्मान्वा नय तं देशं तमिहानय वा प्रियम् ।
अन्यथा हि कृतान्तस्ते महापातो भविष्यति ॥ ४७
एवमाक्रन्दमानास्ताः स्रवदश्रुविलोचनाः ।
उत्पतन्त्यः पतन्त्यश्च जग्मुः श्वशुरमीक्षितुम् ॥ ४८
उपगम्यावनीशस्य प्रणिपत्य हि पादयोः ।
इत्थं विज्ञापयांचक्रुः सर्वा युवनृपाङ्गनाः ॥ ४९
न्यायविद्दुष्टनिग्राही धर्मराजः प्रजाहितः ।
दयावानिति सर्वत्र कीर्तिस्ते विश्रुता भुवि ॥ ५०
अतो वयमिमाः सर्वा अनाथा दीनवृत्तयः ।
आगताः शरणं त्वद्य विना चात्मपतिं प्रभो ॥ ५१
दया स्त्रीबालवृद्धेषु कर्तव्येत्यधुना जगुः[1] ।
इति मत्वा महाराज त्वं प्रमाणं क्रियाविधौ ॥ ५२
इति नानाविचित्राणि विलपन्त्यो वराङ्गनाः ।
चुक्रुशुः करुणं घोरं श्वशुरस्यान्तिके स्नुषाः ॥ ५३
ततः कञ्चुकिनो वृद्धा अन्तःपुरमहत्तराः ।
तदासीदासभृत्याश्च चक्रुराक्रन्दनं महत् ॥ ५४

१ क जगौ.

तेषां स्त्रीबालवृद्धानां रुदतां करुणध्वनिः ।
अभूत्प्रक्षुभ्यतोयस्य समुद्रस्येव निस्वनः ॥ ५५
गुणदेवी स्नुषा दृष्ट्वा स्वपुत्रोत्कण्ठगद्गदा ।
न शशाक वचो वक्तुं बाष्पव्याकुललोचना ॥ ५६
रत्नहारप्रवालांश्च नूपुरप्रकटाङ्गदम् ।
मुक्ताप्रलम्बसूत्राणि मालावलयमेखलाः ॥ ५७
कटकान्यूरुजालानि केयूराः कर्णमुद्रिकाः ।
कर्णपूरान् शिखाबन्धान्मस्तकाभरणानि च ॥ ५८
कण्ठिकावत्सदामानि रसनाः पादवेष्टकाः ।
आलुण्ठ्याकुञ्च्य सर्वाणि चिक्षिपुर्विदिशो दिशः ॥ ५९
पतितैरङ्गतस्तासां राज्ञीनां विगतौजसाम् ।
द्यौरिव ग्रहनक्षत्रैर्भूषणैर्भूरभासत ॥ ६०
सर्वासां राजपत्नीनां समेतानां समग्रतः ।
कृताञ्जलिरुवाचेदं युवराजप्रियाङ्गना ॥ ६१
न जीवितुमितः शक्ता विना नाथेन पार्थिव ।
त्वया प्रसादः कर्तव्यः पावकं प्रविशाम्यहम् ॥ ६२
राजा निशम्य तद्वाक्यं द्विगुणं दुःखविह्वलः ।
क्षरन्नेत्रोदकार्द्रास्यः प्रत्युवाच ततः स्नुषाम् ॥ ६३
मैवं त्वनुपमे मंस्थास्तदत्यन्तमशोभनम् ।
असंमतं च साधूनां पुनर्दुःखाय कल्पते ॥ ६४
शस्त्ररज्ज्वादिघातश्च मण्डलेन च साधनम् ।
भृगुप्रपतनं चैव ज्वलदग्निप्रवेशनम् ॥ ६५

१ [ प्रपुत्रं ]. २ स [illegible]. ३ [ कल्पते ].

देहत्यागश्च गृध्रेभ्यो जिह्वोत्पाटविपाशनम् ।
एतानि मरणान्यार्यैर्निषिद्धानि महात्मभिः ॥ ६६
निःशीला निर्नमस्कारा निर्व्रता निर्गुणा नराः ।
जरामरणरोगार्ताः क्लिश्यन्तीति विनिश्चिनु ॥ ६७
त्रिलोकगुरवोऽर्हन्तः सर्वज्ञास्तत्त्वदर्शिनः ।
ते पवित्रं च माङ्गल्यं मत्कुलस्य ममापि च ॥ ६८
करोषि यदि मद्वाक्यं धर्मे धत्स्वात्मनो मतिम् ।
शनैरेव महाम्भोधिं तारयत्यापदार्णवम् ॥ ६९
इत्युक्ता भूभुजा साध्वी श्वशुरं धर्मवत्सलम् ।
यस्त्वया शिष्यते धर्मः स एवोपास्यते मया ॥ ७०
इति तस्या वचः श्रुत्वा नरेन्द्रः प्रीतमानसः[1] ।
स्नुषाशोकविनाशाय साधूनामन्तिकं ययौ ॥ ७१
राजा ताभिः समाश्रित्य शान्तं यमधरं मुनिम् ।
परिक्रम्य प्रणम्यैवं प्रोवाच विनयान्वितः ॥ ७२
युवराजवियोगेन दुःप्रतिज्ञास्त्ववस्थिताः[2] ।
एतासां बुद्धिमास्थाप्य सद्धर्मं प्रतिपादय ॥ ७३
ततो मुनिपतिस्तासां शोकनिष्टप्तचेतसाम् ।
वक्तुं मनःप्रसादाय प्रारब्धो मधुरा गिरा ॥ ७४
प्रायेण प्राणिनो दुःखं सुखमत्यल्पमुच्यते ।
संस्काराः क्षणिकाः सर्वे भङ्गुराः प्रियसंगमाः ॥ ७५
यौवनं बाधते नृणामैश्वर्यं त्वनवस्थितम् ।
आयुर्वायुविनिर्धूततृणलग्नाम्बुचञ्चलम् ॥ ७६

---

१ म प्रीति°. २ क दुःप्रतिज्ञाः.

प्रीतिः सन्ध्याम्बुदाभेव संपदो विद्युता समाः ।
नानारूपा रुजस्तीव्रास्तनवः फेनदुर्बलाः ॥ ७७
कस्य माता पिता कस्य कस्य भार्या सुतोऽपि वा ।
जातौ जातौ हि जीवानां भविष्यन्ति परे परे ॥ ७८
आत्मैव चात्मनो बन्धुरात्मा चैवात्मनो रिपुः ।
आत्मनोपार्जितं कर्म चात्मनैवानुभुज्यते ॥ ७९
प्रीतिपूर्वं कृतं पापं मनोवाक्कायकर्मभिः ।
न निवारयितुं शक्यं संहितैस्त्रिदशैरपि ॥ ८०
बन्धुभिर्भृत्यमित्रैर्वा मन्त्रोपायबलैरपि ।
वित्तैर्वात्मकृतं पापं तदशक्यमसेवितुम् ॥ ८१
यद्यद्विनिर्मितं कर्म येन येनान्यकर्मणि ।
तस्य तस्यानुमार्गेण तादिहागत्य तिष्ठति ॥ ८२
अज्ञानावृतचित्तानां रागद्वेषवतां नृणाम् ।
क्षणवद्वृद्धिमाप्नोति तत्कर्म यदनेकधा ॥ ८३
तीव्रमध्यममन्दैस्तु परिणामप्रपञ्चनैः ।
तीव्रमध्यममन्दं तत्फलमात्मा समश्नुते ॥ ८४
हिंस्यन्ते हिंसकाः पापैरापद्यन्तेऽपवादकाः ।
मुष्यन्ते मोषकास्त्वन्यैर्विलुप्यन्ते विलोपकाः ॥ ८५
बध्यन्ते बन्धकास्तीव्रं रुध्यन्ते रोधकाः पुनः ।
बाधकास्तु विबाध्यन्ते द्विष्यन्ते द्वेषकारिणः ॥ ८६
दण्ड्यन्ते दण्डका दण्डैः शुच्यन्ते शोककारिणः ।
वञ्चकास्तु प्रवञ्च्यन्ते वियुज्यन्ते वियोजकाः ॥ ८७

१ म तदशक्यं निषेवितुं. २ [ येनान्यकर्मणि ]. ३ क. पापैरापद्यन्ते. [ पापैरापाद्यन्ते ].

सायं पादपमभ्येत्य निशायां तु सहोषिताः ।
इतोऽमुतः प्रभाते तु यथा गच्छन्ति पक्षिणः ॥ ८८
तथा कुलतरुं प्राप्य मर्त्या दुरितवृत्तयः ।
सहोषित्वा पुनर्यान्ति स्वकर्म[1]वृतवर्त्मना ॥ ८९
यथा नावं समारुह्य व्यतीत्य[2] कुलदुर्गमम् ।
स्वभाण्डमथ विक्रेतुं[3] भ्रमन्ति नगराकरान् ॥ ९०
तथा कर्मपथारूढाः प्राणिनो दुःखभाजिनः ।
पापभाण्डं च विक्रेतुं[3] व्रजन्तीह[4] चतुर्गतीः ॥ ९१
यथा पतन्ति पर्णानि प्रकीर्णानि महीतले ।
संचीयन्तेऽनिलैकेन वियुज्यन्तेऽपरेण च ॥ ९२
तथा जीवाः समुद्भूताः प्रकीर्णा हि महीतले ।
चीयन्ते कर्मणैकेन नीयन्ते त्वपरेण च ॥ ९३
यथोदितस्य सूर्यस्य ध्रवं पतनमग्रतः ।
प्रदीप्तस्य प्रदीपस्य चोपशान्तिर्यथोदिता ॥ ९४
यथा नभसि मेघानां विलयः पुरतः स्थितः ।
तथा जातस्य जीवस्य मरणं ध्रुवमग्रतः ॥ ९५
पार्थिवाः खेचराश्चैव केशवाश्चक्रवर्तिनः ।
मानवा ब्रह्मरुद्राश्च योगसिद्धा दमेश्वराः ॥ ९६
इन्द्राश्च चन्द्रसूर्याख्या[5] लोकपालास्त्वनीकिनः ।
पतन्ति स्वेषु कालेषु त्राता कश्चिन्न विद्यते ॥ ९७
यथैव मत्तमातङ्गः प्रविश्य कदलीवनम् ।
पाददन्त[6]कराग्रैश्च प्रमृद्नाति मुहुर्मुहुः ॥ ९८

१ म स्वकर्मकृत°. २ क व्यतीतकुल°. ३ म विक्रीतुं. ४ म च दुर्गतीः. ५ म °सूर्याख्यौ. ६ क पाददण्ड°.

तथैव मृत्युमातङ्गस्तिर्यग्नरसुरासुरान् ।
प्राप्तकालान्प्रमृद्नाति दिवानिशमवारितः ॥ ९९
तिर्यग्योनिषु सर्वासु मर्त्यदैत्यामरेषु च ।
नारकेषु च दुर्वीर्यो विहरत्यन्तकः सदा ॥ १००
विषैश्च विषमाहारैः पानीयैरनलानिलैः ।
शस्त्रोल्कावह्निसंपातैर्व्याधिरूपैरुपैति सः ॥ १०१
जरया मृत्युना जात्या क्लेशाननुभवंश्चिरम् ।
आत्मा संसारवासेऽस्मिन्बम्भ्रमीति पुनः पुनः ॥ १०२
यत्र जीवस्य जातिः स्यात्तत्रावश्यं जरा भवेत् ।
जरापरीतगात्रस्य ध्रुवं त्युर्भविष्यति ॥ १०३
जातेर्दुःखं परं नास्ति जरसः कष्टं न विद्यते ।
भयं च मृत्युतो नास्ति तत्र यत्सेव्यते ध्रुवम् ॥ १०४
ह्योविद्धि[1] निर्गतं जन्म स्वोदश्च तदनागतम् ।
अद्यवद्वर्तमानं स्यादित्युक्तं कर्मदर्शिभिः ॥ १०५
रात्रिस्तमोमयी चात्र कृतान्तं समुपैष्यति ।
कश्चिद्बन्धुर्न हि त्राता कृतो धर्मोऽभिरक्षति ॥ १०६
धर्मो दयामयः प्रोक्तो जिनेन्द्रैर्जितमृत्युभिः ।
तेन धर्मेण सर्वत्र प्राणिनोऽश्नुवते सुखम् ॥ १०७
तस्माद्धर्मे मतिं धत्स्व सुधामिष्टफलप्रदे ।
स वः सुचरितो भर्तुः संयोगाय भविष्यति ॥ १०८
एको धर्मस्य तस्यात्र नृपायः न नु विद्यते ।
तेन पापास्रवद्वारं निरुध्यते ॥ १०९

१ [ ह्योविद्धि ]. २ ख. स्वोदश्च. [ श्वोदश्च ]. ३ [illegible]

व्रतशीलतपोदानसंयमोऽर्हत्प्रपूजनम् ।
दुःखविच्छित्तये सर्वं प्रोक्तमेतदसंशयम् ॥ ११०
अणुव्रतानि पञ्चैव त्रिःप्रकारं गुणव्रतम् ।
शिक्षाव्रतानि चत्वारि इत्येतद्द्वादशात्मकम् ॥ १११
देवतातिथिप्रीत्यर्थं मन्त्रौषधिभयाय वा ।
न हिंस्याः प्राणिनः सर्वे अहिंसा नाम तद्व्रतम् ॥ ११२
लोभमोहभयद्वेषैर्मायामानमदेन वा ।
न कथ्यमनृतं किंचित्तत्सत्यव्रतमुच्यते ॥ ११३
क्षेत्रे पथि कले वापि स्थितं नष्टं च विस्मृतम् ।
हार्यं न हि परद्रव्यमस्तेयव्रतमुच्यते ॥ ११४
स्वसृमातृस्वसाप्रख्या द्रष्टव्याः परयोषितः ।
स्वदारैरेव संतोषः स्वदारव्रतमुच्यते ॥ ११५
वास्तुक्षेत्रधनं धान्यं पशुप्रेष्यजनादिकम् ।
परिमाणं कृतं यत्तत्संतोषव्रतमुच्यते ॥ ११६
ऊर्ध्वाधो दिग्विदिक्स्थानं कृत्वा यत्परिमाणतः ।
पुनराक्रम्यते नैव प्रथमं तद्गुणव्रतम् ॥ ११७
गन्धताम्बूलपुष्पेषु स्त्रीवस्त्राभरणादिषु ।
भोगोपभोगसंख्यानं द्वितीयं तद्गुणव्रतम् ॥ ११८
दण्डपाशविडालांश्च विषशस्त्राग्निरज्जवः ।
परेभ्यो नैव देयास्ते स्वपराघातहेतवः ॥ ११९
छेदं भेदवधौ बन्धगुरुभारातिरोपणम् ।
न कारयति योऽन्येषु तृतीयं तद्गुणव्रतम् ॥ १२०

१ म त्रिःप्रकारगुण°. २ [ कुले ]. ३ [ °मातृसुता° ]. ४ म परिमाणकृतं. ५ क °बिरालाश्च. ६ म योग्येषु.

शरणोत्तममाङ्गल्यं नमस्कारपुरस्सरम् ।
व्रतवृद्ध्यै हृदि ध्येयं सन्ध्ययोरुभयोः सदा ॥ १२१
समता सर्वभूतेषु संयमः शुभभावनाः ।
आर्तरौद्रपरित्यागस्तद्धि सामायिकं व्रतम् ॥ १२२
मासे चत्वारि पर्वाणि तान्युपोष्याणि यत्नतः ।
मनोवाक्कायसंगुप्त्या स प्रोषधविधिः स्मृतः ॥ १२३
चतुर्विधो वराहारः संयतेभ्यः प्रदीयते ।
श्रद्धादिगुणसंपत्त्या तत्स्यादतिथिपूजनम् ॥ १२४
बाह्याभ्यन्तरनैःसंग्याद्गृहीत्वा तु महाव्रतम् ।
मरणान्ते तनुत्यागः सल्लेखः स प्रकीर्त्यते ॥ १२५
इत्येतानि व्रतान्यत्र विधिना द्वादशापि ये ।
परिपाल्य तनुं त्यक्त्वा ते दिवं यान्ति सद्व्रताः ॥ १२६
सौधर्मादिषु कल्पेषु संभूय विगतज्वराः ।
तत्राष्टगुणमैश्वर्यं लभन्ते नात्र संशयः ॥ १२७
अप्सरोभिश्चिरं रन्त्वा वैक्रियातनुभाग्सुराः ।
भोगानतिशयान्प्राप्य निश्च्यवन्ते सुरालयात् ॥ १२८
हरिभोजोग्रवंशे वा इक्ष्वाकूणां तथान्वये ।
उत्पद्यैश्वर्यसंयुक्ता ज्वलन्त्यादित्यवद्भुवि ॥ १२९
विरक्ताः कामभोगेषु प्रव्रज्यैवं महाधियः ।
तपसा दग्धकर्माणो यास्यन्ति परमं पदम् ॥ १३०
इत्येतद्यतिना प्रोक्तं दुःखविच्छित्तिकारणम् ।
ताश्च तद्वचनापास्तशोकाः प्रहधियोऽभवन् ॥ १३१

१ ख. संप्रोषधविधि:.

अथोत्थाय मुनीन्द्रस्य पादौ नरपतेः स्नुषाः ।
प्रणम्य जगृहुः सर्वा व्रतान्युक्तानि शक्तितः ॥ १३२
ततो राजा पुनस्तासां वियोगहतचेतसाम् ।
हृदयानन्दजननीं गिरमित्थमुवाच सः ॥ १३३
मा भूवं विक्लवाः सर्वा आसतां धर्मवाञ्छया ।
उपक्रान्तैरुपायैस्तैः कुमारं मृगयाम्यहम् ॥ १३४
परिगम्य मुनिं राजा भक्तिप्रेमार्द्रचेतसा ।
प्रणम्यान्तःपुरैः सार्धं स्नुषाभिश्च पुरं ययौ ॥ १३५
अथान्यदा सुखासीनं राजानममितप्रभम् ।
चैत्यपूजाभिलापिन्यश्चक्रुर्विज्ञापनं स्नुषाः ॥ १३६
ततो विज्ञापितो राजा कारयामास मासतः ।
शरत्कालाम्बुदाकारं जिनेन्द्रभवनं शुभम् ॥ १३७
मेघचुम्बितकूटाग्रं स्फुरत्केतुविराजितम् ।
चलद्घण्टारवोन्मिश्रं ज्वलत्काञ्चनपीठिकम् ॥ १३८
प्रतिमाः स्थापितास्तत्र नानारत्नविनिर्मिताः ।
भृङ्गारादर्शशङ्खादिपरिवारोपशोभिताः ॥ १३९
पूर्वमष्टाह्निकं भक्त्या देव्यः कृत्वा महामहम् ।
प्रारब्धा नित्यपूजार्थं विशुद्धेन्द्रियगोचराः ॥ १४०
चरुभिः पञ्चवर्णैश्च ध्वजमाल्यानुलेपनैः ।
दीपैश्च बलिभिश्चूर्णैः पूजां चक्रुर्मुदान्विताः ॥ १४१
उपवासेन तन्वङ्ग्यः शुद्धवाग्मनसःक्रियाः ।
स्तोत्रैर्मन्त्रैश्च गीतैश्च जिनान्सन्ध्यासु तुष्टुवुः ॥ १४२
शेषकालं जिनेन्द्राणां धर्मसंकथया तया ।
पुस्तवाचनया चापि गमयामासुरुत्तमाः ॥ १४३

कदाचित्संयतेभ्यस्ता दानधर्मपरायणाः ।
श्रुद्ध्यादिभिर्गुणैर्युक्ता पात्रदानानि संददुः ॥ १४४

इत्येवं नृपवनिता व्यपेतशोका
दानोरुव्रतगुणभावनावसक्ताः ।
देवानां सकलविदां ययाचिरे ताः
पादेषु प्रणतधियः पतिं प्रतीष्टाः ॥ १४५

औत्सुक्यप्रतिहतमानसाः कदाचि-
द्गण्डान्तप्रणिहितचारुहस्तपद्माः ।
पक्ष्माग्रश्रुतसलिला मुहुश्च सन्त्यः
संदध्युर्युवनृपतिसमागमाशाम् ॥ १४६

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
अन्तःपुरविलापो नाम
पञ्चदशः सर्गः ।

---

## [ षोडशः सर्गः ]

अथैवमुर्वीपतिसूनुरिभ्यैर्विभागवद्भिर्ललितैरुदारैः ।
तेषां च पुत्रैरनुगृह्यमाणो रेमे च तस्यां ललिताख्यपुर्याम् ॥
क्रीडां यथा मत्तगजो वनेषु प्रलाल्यमानो गजकामिनीभिः
लेभे गतिं बन्धगतोऽपि तद्वत्स्वाभिर्नृपोऽप्यत्र हि दृष्टिरत्याि
एवं नृपस्यान्यनरेन्द्रपुर्यां व्यामिश्रयोगेन सुखासुखेन ।
कालोऽगमत्कर्मवशेन तस्य यशोगुणश्रीधनभाजनस्य ॥ ३

तस्यां तु पुर्यां वसति क्षितीन्द्रे प्रवृत्तमन्यत्प्रकृतं महद्यत् ।
यथागमं तद्विनिगद्यमानं शृण्वन्तु सन्तो गुणभारनम्राः ॥ ४
आसीन्नरेन्द्रो मधुराधिपस्तु नाम्नेन्द्रसेनः प्रथितो धरण्याम् ।
तस्याग्रपुत्रो वलवीर्यदृप्त उपेन्द्रसेनो युवराड् वभूव ॥ ५
समस्तसामन्तनिवद्धपट्टौ समस्तसामन्तमदावरोधौ ।
समस्तसामन्तगणातिधैर्यौ वभूवतुश्चन्द्रदिवाकराभौ ॥ ६
शौर्योद्धतावप्रतिकोशदण्डौ गृहीतसामन्तसमस्तसारौ ।
तौ देवसेनस्य नरेश्वरस्य गजेन्द्रमाशुश्रवतुश्चरेभ्यः ॥ ७
स वारणेन्द्रः शुभपीवराङ्गो मदस्रुतिक्लिन्नकपोलदेशः ।
अतुल्यवीर्यः स्रवदम्बुदाभश्चलद्गिरिप्रख्यतमोऽतिसत्त्वः ॥ ८
भद्रान्वयो भद्रमना विनीतः क्रियाविधिक्षेत्रगुणैरुपेतः ।
मधुप्रभाख्यः सुविभक्तगात्रः पूर्वप्रदेशोन्नतचारुकुम्भः ॥ ९
तामिन्द्रसेनो वरवारणेन्द्रं वलाज्जिघृक्षुर्धनमानदृप्तः ।
लेखेन साम्ना रहितेन तेन संप्रेषयामास स दूतवर्यम् ॥ १०
ततो हि दूतः पथि काननानि नदीगिरिप्रस्रवणान्तराणि ।
देशान्व्रजन्ग्रामवरांश्च पश्यन् स देवसेनस्य विवेश देशम् ॥ ११
क्रमात्पुरं तल्ललिताभिधानं प्रपासभोद्यानविशेषरम्यम् ।
शनैः समासाद्य स दूतमुख्यो ददर्श भूपं विधिनोपसृत्य ॥ १२
ततस्तु राजा प्रतिमुच्य लेखं लेखोपचारेण च वाचयित्वा ।
विज्ञाय लेखार्थमपेतसामं चिक्षेप लेखं कुपितो धरण्याम् ॥ १३
स ताम्रनेत्रः स्फुरिताधरोष्ठः कोपादविज्ञाय परात्मशक्ती ।
निर्भर्त्स्य दूतं परुषैर्वचोभिर्वामेन पादेन ममर्द लेखम् ॥ १४

१ [ मथुराधिप° ]. २ क °सान्त्वं.

अपेतसामानि वचांसि राजा जगाद दूतं पुरतः स्थितं तत् ।
उक्तेन किंवा बहुना शृणु त्वं युद्धादृते तस्य न शान्तिरास्ति॥१५
समस्तसामन्तधनानि यानि विक्रम्य जग्राह पुरा बलेन ।
तान्येव जीर्यन्त्वलमन्यवित्तैः श्रमव्ययाक्षेमकरैरनर्थैः ॥ १६
भो दूत आस्तां नृपतिस्त्वदीयो निजेन राज्येन हि तुष्टिमेतु ।
स्थाने न चेत्स्थास्यति सर्वथान्यं संस्थापयिष्याम्यहमेत्य तत्र ॥
संस्थाप्यमानोऽपि मयेन्द्रसेनः स्थातुं न चेच्छेत्स्वकुलोचितेन ।
प्राग्यद्गृहीतं च धनं परेषां तद्वा ग्रहिष्यामि दुरात्मनोऽहम् ॥१८
अथ त्वरा वास्ति हि पौरुषं वा आगम्यतां सर्वबलेन सद्यः ।
य आवयोर्जेष्यति युद्धशौण्डो भवन्तु हस्त्यश्वपुराणि तस्मै ॥१९
इत्येवमाघोष्य सभासमक्षं संतर्ज्य रोषादपभीस्तदानीम् ।
विरोधबुद्ध्या न ददौ स्वलेखं कृत्वार्धमुण्डं विससर्ज दूतम् ॥ २०
ततो विसृष्टो वसुधेश्वरेण त्रस्तात्मचित्तस्तु कृतार्धमुण्डः ।
परिस्पृशन्स्वं स शिरः करेण जगाम तूष्णीं ललिताद्रिपुर्याम् ॥ २१
अथो ह्युपस्थानगतः स्वदूतं प्रत्यागतं त्वप्रतिलेखमात्रम् ।
दृष्ट्वा कृताङ्कं पुरतो नृपाणां चुक्रोध राजा भृशमिन्द्रसेनः ॥२२
स्वभावतः प्रोन्नतमानदृप्तः परावमानैकरसानभिज्ञः ।
मुहुर्मुहुः श्वासविकम्पिताङ्गो जज्वाल वाताहतवह्निकल्पः ॥ २३
मत्तोऽधिकाः शक्तिबलप्रतापैर्ये पार्थिवास्तैः सह योद्धुकामः ।
युद्धाय लेखान्विससर्ज तेभ्यो भयार्दितास्ते प्रददुर्धनानि ॥ २४
असौ वराको नयवित्र चासौ परात्मशक्त्यन्तरवान्विमूढः ।
स मृत्यवे केवलमिद्धमग्निं पतङ्गवद्वाञ्छति संप्रवेष्टुम् ॥ २५

विशिष्ट एवाप्रतिमल्लहस्ती ददौ पुनर्मेऽप्रतिमल्लकल्पम् ।
युद्धाभितृप्तिश्चिरकालतो मे भविष्यतीति प्रजगाद राजा ॥२६
मद्वाक्यनीतौ यदि नैव तिष्ठेल्लोभाच्च दर्पादभिमानतो वा ।
निष्कृष्यते श्रीललिताह्वपुर्याः संस्थापयिष्यामि वशस्थमन्यम् २७
एकस्य हेतोः करिणो यदासौ नेच्छेत्सुखं जीवितुमुन्नताशः ।
मत्सैन्यनिर्वासितपौरराष्ट्रो मामेव गन्ता शरणं हताशः ॥ २८
सर्वक्षितीशेष्वहतप्रताप आज्ञां मदीयामवमन्यमानः ।
सभृत्यमित्रः सकलत्रपुत्रः सकोशदण्डः क्षयमेष्यतीति ॥ २९
अनर्थकैः किं बहुभिः प्रलापैः फले ध्रुवं कार्यमुपैति व्यक्तिम् ।
इत्येवमाविष्कृतसत्प्रतिज्ञो बहिस्तदेवाशु पुराज्जगाम ॥ ३०
महेन्द्रसेनप्रवरा महीन्द्रा उपेन्द्रसेनप्रमुखाश्च पुत्राः ।
पदातिहस्त्यश्वरथैः समेता नरेन्द्रयातानुपथं प्रयाताः ॥ ३१
अङ्गाश्च वङ्गा मगधाः कलिङ्गाः सुह्माश्च पुण्ड्राः कुरवोऽश्मकाश्च ।
आभीरकावन्तिककोशलाश्च मत्स्याश्च सौराष्ट्रकविन्ध्यपालाः ३२
महेन्द्रसौवीरकसैन्धवाश्च काश्मीरकुन्ताश्चरकासिताह्वाः ।
ओद्राश्च वैदर्भकवैदिशाश्च पञ्चालकाद्याः पतयः पृथिव्याम् ॥३३
समेत्य सर्वे स्वबलैरुदारैरनेकशस्त्रास्त्रविभूतिमद्भिः ।
उत्थापितच्छत्रसुकेतुचिह्ना निश्चक्रमुर्भूपतयः प्रयोद्धुम् ॥ ३४
प्रदानमानैकरसाप्तवीर्याश्चिकीर्षवः स्वामिहितानि भृत्याः ।
इहात्मशौर्यं प्रतिदर्शयामो रणे नृपाणामिति केचिदाहुः ॥ ३५
अस्वामिकार्याणि पुनर्बहूनि दिनान्यतीतानि निरर्थकानि ।
अद्यात्मशक्तिं नृपतेः समक्षं प्रकाशयिष्याम इति न्यवोचन् ॥ ३६

---

१ क दधौ. २ [ °प्रतापामाज्ञां ]. ३ क आभीरकावान्तिन°. ४ म चौदाश्च, [ औद्राश्च ].

पश्यामि तावत्समराजिरेऽस्मिन् नृणां पुनः सारमसारतां च ।
स्याद्धूमकेतौ कनकस्य शुद्धिर्व्यक्तिं प्रयातीति निराहुरन्ये ॥ ३७
नृपेन्द्रसेनो बृहदुग्रसेनः कृतात्मशक्तिर्बहुकोशदेशः ।
अवार्यवीर्यो दृढबद्धवैरः सुनीतिनीतार्थविशुद्धबुद्धिः ॥ ३८
एतैर्गुणैर्न्यूनतमस्तु राजा मानिकसारो ललितेश्वरोऽसौ ।
तस्यास्य चेति प्रविचिन्त्यमानं तदन्तरं स्यान्मशकेभयोर्यत् ॥३९
अहो तपस्वी ललितेश्वरोऽसौ नोऽपीक्षते स्वं तु बलाबलं यत् ।
महार्णवानन्तबलेन राज्ञा युयुत्सुरज्ञास्त्विति केचिदूचुः ॥ ४०
अथैकमत्तद्विरदस्य हेतोरपीप्सति श्रीपुरकोशदेशान् ।
अकौशलं तस्य हि मन्त्रिणां च निरीक्ष्यतामित्यपरं निराहुः ॥४१
न मन्त्रिणां वा वचनं शृणोति ते वा हितं नास्य वदन्त्युपेत्य ।
विनाशकालः समुपस्थितो वा बलीयसा यत्कुरुते विरोधम् ॥४२
महाबलस्यास्य पुरः कुतः स्यात्स्थातुं हि शक्तिर्ललितेश्वरस्य ।
सदैव नागेन विमुच्य देशं पलायतेऽसाविति केचिदूचुः ॥ ४३
सुनीतिमार्गेण समाचरन्तो जयन्ति शत्रून्बलतोऽपि हीनाः ।
अनीतिमन्तो बलिनोऽपि गम्या नैकान्तमस्तीत्यपरं निराहुः ॥४४
यः शक्तिमांस्तं पुनरप्रमत्तस्तथाप्रमत्तं न च दीर्घसूत्रः ।
तं नीतिमांस्तं खलु दैवयुक्तो जेष्यत्यरीनित्यपरं समूचुः ॥ ४५
एवं ब्रुवाणास्तु परस्परस्य जनं प्रविष्टाः परदेशभाग्र ।
प्रविष्टमात्रेण पुरं विमुच्य ननाश देशं सकलं क्षणेन ॥ ४६
ततः प्रजास्ताः परचक्रभीता हृतावशिष्टं धनधान्यजातम् ।
आदाय सर्वं सकलत्रपुत्राः पुरं प्रविष्टा ललितादिपत्तनस्य ॥ ४७

१ । अशेदति ?. २ । स्तूज ? ? ?.

सा चापि सेना महती क्षितीशां पुरीं महासारवतीं विशालाम् ।
सगोपुराट्टालकतोरणां तां निरुध्य तस्थौ सतृणाम्बुकाष्ठाम् ॥४८
समीक्ष्य सेनां मधुराधिपस्य महर्द्धियुक्तां ललितेश्वरोऽसौ ।
स्वान्मन्त्रिणो मन्त्रगुणप्रवीणानाहूय तैर्मन्त्रविधिं चकार ॥ ४९
एषोऽपि शत्रुः प्रबलः प्रधृष्यः पुरं समावेष्ट्य हि संनिविष्टः ।
वयं च हीना बलमित्रकोशैर्दुर्गं च सद्दुर्गगुणैरपेतम् ॥ ५०
अस्मै न मे दन्तिवरस्य दित्सा परेण साकं न च योद्धुकामः ।
पुरं त्यजामीति न मेऽभिलाषः परीक्ष्य तद्योग्यमिह प्रवाच्यम् ॥५१
इत्येवमुक्ता वसुधाधिपेन सद्बुद्धयः स्वामिनि नित्यभक्ताः ।
तत्कालयोग्यं स्वमतिप्रणीतं यथानुपूर्व्या विदधुर्वचस्तम् ॥ ५२
नैवेह कार्यो बलवद्विरोधो दोषः समस्तुल्यबलैर्विरोधे ।
न्यूने विदित्वा खलु देशकालौ क्रियाप्रसिद्धिं लभते नरेन्द्रः ॥५३
साम्ना प्रदानेन च कार्यसिद्धिं वाञ्छन्ति तज्ज्ञा निरुपद्रवत्वात् ।
क्षयव्ययक्लेशसहस्रमूलौ मृत्योः पदं भूमिप भेददण्डौ ॥ ५४
मानोऽन्तरं सर्वनरेश्वराणां मानस्तु कल्याणफलप्रदायी ।
अयं प्रकृत्या भृशमात्ममानी तस्मात्तु मान्यो भवतीन्द्रसेनः ॥५५
स्यान्मानहानिर्यदि सन्धिभागे मा भूत्स दोषः स्मृतिषूपदिष्टम् ।
स्वकार्यसिध्द्यै प्रददौ महेन्द्रो मानं विहायैहिकलोहिताङ्कम् ॥५६
धनेन देशेन पुरेण साम्ना रत्नेन वा स्वेन गजेन वापि ।
स येन येनेच्छति तेन तेन संदेय[1] एवेति जगौ सुनीतिः ॥ ५७
तद्युक्तिमत्स्यात्खलु सार्वभौमे नरेश्वरे सर्वगुणैरुपेते ।
अयं गुणैर्मध्यम इन्द्रसेनः शक्यो विजेतुं परमं श्रयेण[2] ॥ ५८

१ [ संधेय ]. २ [ परमश्रमेण ].

यद्देयमस्मै वसुधाधिपाय तदेव कस्मैचिदपि प्रदाय ।
अस्योपरिष्टाद्द्वयमानयामो बलान्वितं तं यदि रोचते ते ॥ ५९
उत्साहमन्त्रप्रभुशक्तियोगाज्ज्यायानयोर्ध्याधिपतिः क्षितीशाम् ।
श्रीवीरसेनोऽस्ति तमाश्रयाम इत्याचचक्षे विनयाद्द्वितीयः ॥ ६०
किं तेन राज्ञा बलवत्तमेन स्वकार्यसंसिद्धिपरायणेन ।
इदं पुनर्युक्तिमदर्थमन्यद्ब्रवीमि वाक्यं यदि रोचते ते ॥ ६१
सन्तीह पुर्यां सुजनाः समृद्धा अगाधतोयाश्च तडागवाप्यः ।
शूरा मनुष्याश्च परैरहार्यास्त्वं चापि शक्तित्रयमभ्युपेतः ॥ ६२
मुख्येषु भेदं प्रतिदर्शयन्तस्तद्रीवचां सारधनं नियोज्य ।
पार्ष्णीं तथोत्थाप्य हि तस्य देशे विगृह्यते नाशनमेव युक्तम् ॥ ६३
अभ्यर्ण एषोऽपि च मेऽप्यकाल्यः स पार्ष्णिरप्यस्य तु पार्वतीयः ।
अतो न सन्ध्याश्रयतां प्रयामः स्थास्याम एवेत्यवदत्स मन्त्री ॥ ६४
साधूक्तमेभिर्नृपमन्त्रिमुख्यैः सन्ध्याश्रयस्थानगुणैः प्रसिद्धिः ।
एषां प्रयोगस्य गतस्तु कालो ह्यकालतस्तेऽपि भवन्त्यनर्थाः ॥ ६५
यदूतसंप्रेषणकाल एव सामप्रदानाद्युचितानुपायान् ।
अकुर्म चेद्भूमिप सा सुनीतिः कालात्ययः संप्रति दोष एषः ॥ ६६
एभिस्त्रिभिर्मन्त्रिवरैर्महीश कार्यं यदुक्तं तदपोहनीयम् ।
न मे प्रियं युक्तिविवर्जितत्वादित्याचचक्षे विजयश्चतुर्थः ॥ ६७
यत्कारणः स्यादनयोर्विरोधो नरेन्द्रयोरप्रनिवार्यभाग्गः ।
स एव हस्ती यदि दीयते चेत्पुंस्त्वाभिमानस्य हि कोऽधिकारः ६८
अयं च राजेन्द्र समानसेनो नरेन्द्रसेनः समरे समर्थः ।
सर्वस्वमादाय तु यातुकामः कथं पुनर्यास्यति हन्तिमन्तान् ॥ ६९

कालो व्यतीतो नरदेव शान्तो दानाश्रयस्थानविधिस्तथैव ।
उपस्थितौ संप्रति भेददण्डौ तस्माद्द्वये धत्स्व मतिं न चान्यत् ॥ ७०
धनं शरीरं बलमायुरैश्यं चिरं न तिष्ठन्ति मनुष्यलोके ।
यशांसि पुंभिः समुपार्जितानि स्थायीनि यस्माद्यशसे यतस्व ॥७१
उपेन्द्रसेनो बलवानिति त्वमवेहि मंस्थाः प्रथितोरुसत्त्वः ।
कार्यस्य तस्या [ ] पुरःसरस्य नासाध्यमस्ति क्षितिपाल लोके।७२
तथापि भूपाः समरे कृतार्थाः स्निग्धा नरेन्द्राः स्वमनोऽनुकूलाः ।
गृहीतशस्त्रास्त्रबलार्थशास्त्राः सन्ति प्रभूता नृपतेः सहायाः ॥ ७३
अर्थ्यं यशस्यं विदुषां प्रशस्यं तेजस्करं मन्त्रिवरोपदिष्टम् ।
निशम्य वाक्यं हृदयावकर्षी क्षितीश्वरः संमुमुदे स तस्य ॥ ७४
संपूज्य तान्मन्त्रिगणानशेषान्विशेषपूजां विजयाय कृत्वा ।
सभासमक्षं समराभिलाषी युद्धाय सर्वं नृपतिः शशास ॥ ७५
राजानुमत्या विजये जयैषी शूरानुरक्तप्रतिबोधनाय ।
तस्यां महत्यां ललिताह्वपुर्यां सघोषणां निर्गमयांचकार ॥ ७६
राजापि युद्धाभिमुखः सबन्धुः प्रवीक्ष्यते शत्रुविमर्दनाय ।
सन्मानदानैकरसाप्तवीर्याः पुंस्त्वाभिमानास्त्वरयाभ्युपेताः ॥७७
एवंविधा सर्वजनाधिगम्या महाविभूत्या नृपशासनेन ।
भेर्या नदन्त्या परिघोषणा हि वंभ्रम्यते वारणमस्तके सा ॥७८
कश्चिद्भटः कान्तवपुस्तदानीं वामोग्रहस्तापितगण्डदेशः ।
बलं समीक्ष्य स्वपुरान्तकस्य दध्यौ स्वयं किं क्रियते मयेति ॥७९

---

१ क कार्यस्य सन्तीति. २ [ तस्यात्म ]. ३ म अर्थं. ४ म सर्वान्नृपतीन् शशास. ५ [ विजयी ]. ६ [ स्वघोषणां ]. ७ म युद्धाभिमुखः. ८ [प्रतीक्षते]. ९ [ °हस्तार्पित° ].

सं[1]व्याधिते च व्यसनिन्यनाथे क्षुत्पीडिते शत्रुजनाभिभूते ।
द्वारे नृपाणां पितृभूमिभागे संतिष्ठते यः किल सोऽतिबन्धुः ॥८०
अहं च अत्रैव कयापि युक्त्या वसामि मूढः स्वाहिताहिताय ।
एषोऽपि मे मातुल एव राजा प्रियोऽरिसैन्यैरभिविद्रुत[2]श्च ॥ ८१
अभ्येत्य[3] दूरादपि युक्तिमत्स्यात् सहायकृत्यं स्वजनेन कर्तुम् ।
तद्बन्धुना कार्यविदा मयाद्य समक्षभूतेन कथं प्रहेयम् ॥ ८२
वराङ्गनामा तव भागिनेयः सुतोऽस्म्यहं धर्मनरेश्वरस्य ।
इति ब्रुवं[4] चेल्ललितेश्वराय न श्रद्दधात्येष च मां हसेद्वा ॥ ८३
इमान्स्वबन्धून्मम धर्मलब्धानुद्दिश्य योत्स्येऽहमिति ब्रवीमि ।
वणिक्सुतत्वात्परिभूयमानः सभासमक्षं लघुतां व्रजामि ॥ ८४
कोस्यान्न[5] युक्तिर्निरवद्यरूपा समाश्रयेयं[6] श्वशुरस्य हेतोः ।
अज्ञातशस्त्रव्यवहारदक्षो भटोऽहमस्मीत्युदिते न दोषः ॥ ८५
नृपोपकारं मम कुर्वतस्तु कीर्त्यात्मवासः प्रकटो ध्रुवं स्यात् ।
इत्यात्मचिन्तागतमानसः सन् शुश्राव घोषं स तु घोषणायाः ॥८६
तां मत्तमातङ्गशिरोऽधिरूढामाप्लु[7]ष्यमाणां पटहस्वनेन ।
संश्रुत्य कश्चिद्भट उन्नतश्रीः किं किं किमित्येतदपृच्छदाशु ॥८७
ते पृच्छ्यमाना वरवारणस्थाः स्वस्वामिसंदेशवशानुवृत्ताः ।
यात्यद्य राजा समराङ्गणाय रिपून्निहन्तुं त्विति संजजल्पुः ॥८८
निशम्य तेषां वचनं पृथुश्रीः कश्चिद्भटः सोऽप्यनवार्यवीर्यः ।
सहायकृत्यं नृपतेश्चिकीर्षन् शूरः प्रकृत्या द्विगुणं जहर्ष ॥ ८९
एषा हि नूनं मम भाविनी श्रीर्नृपस्य वा पूर्वकृतो विपाकः ।
यदत्र कार्यं प्रतिचिन्तयामि तदेव साक्षात्समुपस्थितं मे ॥ ९०

१ क यो व्याधिते, [ सव्याधिके ]. २ क °विधृतश्च. ३ म अभीत्य. ४ [ इत्यब्रुवं ]. ५ [ का स्यान्नु ]. ६ [ समाश्रये यां ]. ७ क तां पुष्यमाणां, [ °माघुष्यमाणां ].

इति प्रचिन्त्यात्मनि निश्चितार्थो गुरुं समाहूय निवेश्य भूयः।
युद्धाय राज्ञा सह संव्रजामि त्वं मामनुज्ञाय विसृज्य तात ॥ ९१
तद्वाक्यसंत्रस्ततनुः पितास्य स्नेहानुरागादभिगृह्य पादौ ।
कुरु प्रसादं शृणु मे वचस्त्वं हितानुबन्धं प्रियमप्रियं वा ॥ ९२
जानामि ते शौर्यमवार्यमन्यैः शस्त्रास्त्रयोः कौशलमप्रधृष्यम् ।
प्रत्यक्षमेतन्मम सर्वमासीत्तथाप्यहं कार्यमिदं प्रवक्ष्ये ॥ ९३
युद्ध्वापि केचित्सुकृतैर्विहीना अप्राप्तभोगा मरणं प्रयान्ति ।
व्यपेतशोकाः स्वगृहे वसन्तो भोगान्विचित्रानुपभुञ्जतेऽन्ये ॥९४
वृत्तिं विचित्रां स्वकृतानुरूपां पुंसां विचार्य क्षयिणीं च लक्ष्मीम् ।
प्रीत्येह च श्रेयसि यद्युनक्ति तदेव कार्यं विदुषा नरेण ॥ ९५
भोगाभिलाषात्तव विक्रमश्चेद्भोगान्यथेष्टानहमानयामि ।
अथार्थहेतोर्यदि ते प्रयासः सन्तीह ते पुत्र हिरण्यकोट्यः ॥ ९६
देशं च कालं च कुलं बलं च परीक्ष्य कृत्यानि जनैः क्रियन्ते ।
संचिन्त्य तत्सर्वमुदारबुद्धे निर्वर्त्यतां युद्धकृताभिलाषः ॥ ९७
युद्धं त्वया यत्कृतमासि[1] पूर्वमद्यापि तन्मे भयमादधाति ।
तस्मादहं त्वां शिरसाभियाचे युद्धेन किं वा सुखमास्व वत्स ॥९८
अहो तपस्वी बत मन्दसत्त्वः स्वजातिसादृश्यमताभिधानः ।
मामप्ययं यन्मनुते स्वजाताविन्येवमात्मन्यथ संप्रदध्यौ ॥ ९९
पित्रैवमुक्तः सुत इत्थमूचे नार्थेन कृत्यं विषयेन कार्यम् ।
न यौवनोद्दामम[2]मुदां वशस्थो न चाप्यहं श्लाघ्यतया करोमि ॥ १००
स्त्रीबालवृद्धानगतीन्विपन्नाननाथदीनातुरभीतवर्गान् ।
आपद्गतानाश्रमवासिनश्च त्रातुं ममायं मनसि प्रयासः ॥ १०१

१ [ यत्कृतमस्ति, यत्कृतमास ]. २ म °मुदा°.

प्रजाहितक्षेमसुखप्रसिद्ध्यै राज्ञो विजित्यैव[1] रिपोर्वधार्य । 38
तवापि कीर्त्यै मम धर्महेतोर्युद्धेऽनुमन्यस्व न वारयस्व ॥ १०२
श्रेष्ठी सुतस्याभिमतं विदित्वा चेष्टानुरूपां च यथार्थवार्ताम् ।
तस्योत्तरं वक्तुमशक्नुवन्स तूष्णीं बभूवार्थपतिर्विधिज्ञः ॥ १०३
हये रथे वा वरवारणे वा पञ्चायुधेनात्मपराक्रमेण ।
महाहवे योऽत्र मया युयुत्सुस्तस्यास्ति कालः कथितेन किं वा १०४
इत्येवमाभाष्य पितुः समीपे तदेव[2] संप्रेष्य पुनर्घटायाम् ।
समर्थ्य सम्यक्पितरं सहायैः संप्रेषयामास नृपान्तिकं सः॥१०५
कश्चिद्भटो मे तनयो वरिष्ठः साचिव्यमिच्छुः समरागमे ते ।
मां प्राहिणोद्देव यदत्र युक्तं तत्संविधत्स्व त्वमकालहीनम् ॥१०६
पुराप्यशृण्वन्विजयप्रधानास्ते तस्य सर्वं श्रुतवीर्यसत्त्वम् ।
ध्रुवं जयो देव तवैव भावी इति ब्रुवाणाः सचिवाः शशंसुः ॥१०७
न श्रेष्ठिपुत्रस्त्ववणिक्स्वभावान्न प्राकृतः पार्थिवलक्षणत्वात् ।
क्षात्राणि कर्माणि विशेषवन्ति बहूनि तस्मिन्नुपलक्षितानि॥१०८
हता किलैकेन पुलिन्दसेना द्विषट्सहस्रा मददन्तिगर्वा ।
देवेन देवेन्द्रसमेन साकं शत्रून् विजित्येति किमत्र चित्रम् ॥१०९

अथ गुणगणमुक्त्वा श्रेष्ठिनस्ते सुतस्य
नृपसचिवपुरोधाः शिष्टमित्रेष्टवर्माः[3] ।
इति जगदुररीणां धारयन्ती मनांसि
नदतु विजयिनी नो युद्धसन्नाहभेरी ॥ ११०

नृपतिरनुनिशम्य क्षेमयोगावहानि
श्रुतविनयधराणां मन्त्रिणां तद्वचांसि ।

१ [ विजित्यै च ]. २ [ तमेव ]. ३ [ °वर्गाः ].

श्रुतपरिणतबुद्धिस्त्वर्हदर्चाः प्रपूज्य
रिपुबलमथ तीर्थं निश्चितार्थो बभूव ॥ १११

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥

राजसंक्षोभो नाम
षोडशः सर्गः ।

---

[ सप्तदशः सर्गः ]

अथावनीशो मतिमद्भिरार्यैः स्वबन्धुभिर्मन्त्रिभिराप्तवर्गैः ।
संमन्त्र्य युद्धाभिमुखस्तदैव स्वाहूतवान्सागरवृद्धिसूनुम् ॥ १
कश्चिद्भटः स्वैर्ललितैर्वयस्यैर्वणिग्भिरन्यैश्च समेत्य तूर्णम् ।
सिंहासनस्थं वसुधेन्द्रसिंहं ददर्श सोऽन्तर्गतहर्षभावः ॥ २
अन्योन्यनामश्रवणाभिरागावन्योन्यमुद्वीक्ष्य च संप्रहृष्टौ ।
ज्ञानंश्च नेयेऽथ नरेश्वराय वक्तुं वराङ्गो न विवेद राजा ॥ ३
स्थितं पुरस्ताद्विनयं प्रयुज्य सल्लक्षणैरूर्जितसर्वगात्रम् ।
समीक्ष्य नागेन्द्रसमानलीलं कश्चिद्भटं भूपतिरित्थमूचे ॥ ४
यो भूपतेरप्रतिकूलकारी योऽनर्थतासंशमनं करोति ।
यो वा युधि स्थैर्यमतिं न जह्याद्यो वा सहायत्वमुपैति युद्धे ॥ ५
यो दर्शयेद्युक्तिमतीं च नीतिं हितप्रवृत्तिं प्रतिबोधनाय ।
स एव बन्धुश्च सुतश्च मित्रं गुरुर्गरीयानिति लोकसिद्धम् ॥ ६
तथापि मैत्री ध्रुवमावयोस्तु पुरातनी काचिदिहापि चास्ति ।
अकृत्रिमप्रेमगुणावबद्धस्त्वयि स्वबन्धाविव मेऽनुरागः ॥ ७

---

१ म °बुद्धिस्त्वर्हदब्जाः. २ [ तर्तुं ]. ३ [ जानंश्च ]. ४ म द्रुतमावयोस्तु.

मत्पुण्यतो वा तव भाग्यतो वा महाजनानां सुकृतप्रभावात् ।
जित्वारिसैन्यं यदि संनिवृत्तो दास्यामि ते मत्सुतयार्धराज्यम् ॥८
ततो बृहद्रत्नपिनद्धहारं किरीट[1]केयूरककुण्डलानि ।
प्रलम्बसूत्रं कटिबन्धनं च पट्टं च तस्मै प्रददौ नरेन्द्रः ॥९
अन्यांश्च सन्मान्य यथोपचारं भृत्यान्भृशं निश्चितमर्थवादी ।
आहूय मन्त्रीश्वरदण्डनाथान्संनह्यतेत्याशु शशास योद्धुम् ॥१०
नरेश्वरो भास्वरसत्किरीटै[2]श्छत्रोच्चलच्चामरकेतुलक्ष्यः ।
सुकल्पितं मत्तमहागजेन्द्रमारुह्य देवेन्द्र इवाभ्यराजत् ॥ ११
संनह्य सर्वायुधसंवृतस्य स्कन्धे गजस्याप्रतिमल्लनाम्नः ।
कश्चिद्भटस्त्वप्रतिमश्चकाशे यथोदयस्योपरि वालसूर्यः ॥ १२
मदप्रभिन्नस्त्रवदार्द्रगण्डं मातङ्गमम्भोदसमाननादम् ।
अरिंजयं तं विजयोऽधिरूढः शोभां दधौ चन्द्रमसोऽभ्रमूर्ध्नि ॥१३
चमूपमन्त्रीश्वरराजपुत्राः गृहीतशस्त्रा युधि दुःप्रधर्षाः ।
आरुह्य मत्तद्विरदेन्द्रवृन्दं प्रतस्थिरे योद्धु[3]मभीप्सवस्ते ॥ १४
ते कुञ्जराः काञ्चनरज्जुधाराः श्वेतोल्लसच्चामरवीज्यमानाः ।
मयूरपिञ्छध्वजतुङ्गकूटा रेजुर्विसर्पीगिरयो यथैव ॥ १५
रथाश्च सद्रत्नसुवर्णनद्धा भास्वद्ध्वजच्छत्रचलत्पताकाः ।
महारथैरप्रतिमैर्निविष्टाः कल्पान्तसूर्या इव ते विरेजुः ॥ १६
युद्धाध्वभारक्षमसत्त्वयुक्ता विचित्रवर्णाः कुलशीलशुद्धाः ।
तुरङ्गमा वायुसमानवेगाः समीयुरुर्वीपतिशासनेन ॥ १७
अनेकवेषो वहुदेशभाषस्तटिद्विपुञ्जै[4]श्चलघूर्णितास्त्रः ।
तेषां पुनर्वाजिरथद्विपानां पदातिसंघः पुरतः प्रतस्थे ॥ १८

१ क तिरीट°. २ क °तिरीटः. ३ क योद्धुमभीप्सुवंस्ते. ४ [ °तडिद्विपु° ].

केचित्पुनर्भूपतिशासनस्थाः केचित्स्वभावोत्तममानदृप्ताः ।
केचित्परेन्द्रैः परिभूयमाना उत्तस्थिरे योद्धुमभीप्सवस्ते ॥ १९
देशार्थसंग्रामपुराकरांश्च ताम्बूलवस्त्रोत्तमभूषणानि ।
प्रदाय योऽस्मान्सकलत्रपुत्रान् बभार सन्मानपुरस्सराणि ॥२०
तस्येश्वरस्याप्रतिशासनस्य समक्षतो मानमदोद्धतानाम् ।
शिरांस्यरीणामसिभिर्निकृत्य[1] निवेदयन्तो निरुणो[2] भवामः ॥२१
स्वजीवितं बन्धुजनं विहाय जिघृक्षवो ये प्रतिमल्लनागम् ।
प्रगृह्य तेषां वरवाहनानि निष्कासयामो निरपत्रपांस्तान् ॥२२
ये निष्कृपा न्यायपथादपेता विनाश्य देशान्स्वजनं विलुम्प्य ।
तेषां गदाभिः प्रविचूर्ण्य देहान् विशोषयिष्याम इहाजिभूमौ॥२३
ये स्वामिनं नः परिभूय हृष्टाः प्रत्यागता लोभनिविष्टचेष्टाः ।
तानद्य हत्वा समरे दुराशांश्च[3] काकगृध्रानभितर्पयामः ॥ २४
एवं भटाश्चित्रमुदाहरन्तस्तुरङ्गमातङ्गरथाधिरूढाः ।
समुद्यतास्त्रा[4] धरणीन्द्रगेहान्निश्चक्रतुर्[5] भूपतिना सहैव ॥ २५
कश्चिद्भटं योध्दुमभिव्रजन्तं नरेन्द्रवेषोद्धतचारुलीलम् ।
समीक्षमाणाः पुरवासिनस्ते जजल्पुरित्थं स्वमनोगतानि ॥ २६
नैवासि भद्रार्थविशेषदर्शी हितस्य वक्ता च न तेऽस्ति कश्चित् ।
न योग्यमेतद्वणिजां हि युद्धं किं वान्वयाचिन्तितमेतदार्य[6] ॥ २७
अनेकहस्त्यश्वरथैः प्रकीर्णं बलं महद्योधसहस्रपूर्णम् ।
युद्धाविजेतुं[7] समरे न शक्यं मा साहसं कर्म कृथाः प्रशाम्य ॥२८
कुताश्चिदागत्य वणिक्सुतोऽभूत्कुताश्चिदागत्य वनेश्वरोऽभूत् ।
कुताश्चिदागत्य जनप्रियो[8]ऽभूस्त्वं वत्स मा मृत्युपथं प्रयाहि ॥ २९

---

१ म निकृन्त्य. २ [ निर्ऋणा ]. ३ [ °श्वकाक ]. ४ म समुद्युतास्त्रा. ५ [ निश्चक्रमुः ] ६ क °चिन्तितमेतदायम्, [ किं वा त्वया चिन्तितमेतदार्य ]. ७ [ युद्धं विजेतुं ]. ८ क जनेश्वरो.

पुरा वराकानटवीचरांस्तानशिक्षितानल्पमतीन्पुलिन्दान् ।
जित्वा रणे सागरवृद्धिपुण्यादिदं तथैवेति मनस्यमंस्थाः[1] ॥ ३०
सुनन्दया किं तव राजपुत्र्या संक्लेशवैरास्पदभूतया ते ।
या काचिदत्रैव वणिग्जनानां सुतानुकूला च सुखेन लभ्यते ॥३१
किं श्रेष्ठिपुत्रस्य नृपात्मजा वै वेलोदधिं तर्तुमयं प्रयासः ।
गजेन्द्रवृन्दैः परिमृद्यमानं समुद्धरेत्किं वद सा सुनन्दा ॥ ३२
एवंब्रुवाणानपरे निषिध्य समूचुरित्थं वचनैर्यथार्थैः ।
वणिक्सुतो राजकुमार एष वपुः प्रकाशीकुरुते स्ववंशम् ॥ ३३
जयारिसेनां स्वभुजोरुवीर्य[2] भद्राणि मंक्ष्वाप्नुहि[3] भद्रमार्या[4] ।
इत्थं शशंसुस्त्वपरे वचांसि स्वाशीर्जयप्रीतिपुरःसराणि ॥ ३४
जित्वा रिपूनप्रतिमप्रभावो व्यपास्य राज्ञो हृदयस्य तापम् ।
लभस्व देशं स्वसुतां च पूजां यशःपताकामिति केचिदूचुः ॥ ३५
एवं जनानां बहुभिर्वचोभिः प्रशंस्यमानः स्तुतिमङ्गलैश्च ।
पुरो बहिर्भूपतिना सहैव जगाम कश्चिद्भट ऊर्जितश्रीः ॥ ३६
ज्वलत्किरीटाङ्गदचारुहाराः समुच्छ्रितातिध्वजकेतुलक्ष्याः ।
नरेन्द्रसिंहा बृहदुग्ररोषाः परस्परं ते ददृशुः ससैन्याः ॥ ३७
प्रभञ्जनाभ्याहतचञ्चलोर्मिरदभ्रनादो जलधिर्यथैव ।
तथैव रोषानिलवेगनुन्नः सेनार्णवः सोऽतिभृशं चकम्पे ॥ ३८
गजा जगर्जुस्तुरगा हिहेषुर्ज्यामन्दनादान् रथिनः प्रचक्रुः ।
पदातिसैन्यस्य च सिंहनादैराध्मातदिक्का[5] धरणी बभूव ॥ ३९
शङ्खाश्च भेर्यः पटहाश्च घण्टा वंशास्तथा मर्दलका हलाश्च ।
प्रावृट्पयोदा इव ते रवेण प्रपूरयन्तो गगनं विनेदुः ॥ ४०

---

१ म मनस्यमंस्थ. २ म °वीर्यात्. ३ [ भंक्ष्वाप्नुहि ]. ४ [ भद्रमार्य ].
५ [ °राध्मात° ].

स्थानानि संपाद्य चतुर्विधानि विस्फार्य चारूणि धनूंपि दोर्भिः।
आकर्णपूर्णानवकृष्य पाणौ परस्परं ते विविधुर्नृशूराः ॥ ४१
तैरीर्यमाणा निशिताः पृपत्का मनोजवा हेमनिबद्धपुङ्खाः।
वक्षांस्यरीणां बिभिदुः पृथूनि कूटान्यथोल्का इव पर्वतानाम् ॥४२
अथेन्द्रसेनस्य नराधिपस्य सेनाऽप्रसह्याभियर्यौ सरोषा।
उद्धार्य खड्गानशनिप्रकाशान्प्रत्युद्ययौ देवनरेन्द्रसेनाम् ॥ ४३
स्वस्वामिसंबन्धकृतप्रतिज्ञा निबद्धरागाः समरेऽभिलाषाः।
स्ववीर्यमानोन्नतबद्धकक्षाः परस्पराङ्गानि भृशं प्रजह्रुः ॥ ४४
ईलीभिरालालितभासुराभिः पादातयःप्राक्सहसाभिहन्य।
शिरांस्युरांस्यूरुकटीररीणां विचिच्छिदुस्तीक्ष्णमुखीभिराशु ॥४५
शरैः परास्त्राण्यभिताड्य शूरा निर्भर्त्स्य वक्षांसि ललङ्घिरेऽन्ये।
ते लङ्घ्यमाना विगतास्त्रहस्ताः प्रसह्य तान्मुष्टिभिराशु जघ्नुः॥४६
गुर्वीभिरुर्वीभिरथायसीभिर्गदाभिरुद्भ्राम्य महाबलास्ते।
विचूर्णयांचक्रुरभीत्य शत्रून्वज्राभिघाता इव पर्वतेन्द्रान् ॥ ४७
कचग्रहेण प्रदने प्रसह्य निपात्य भूमौ छुरिकाप्रहारैः।
विदार्य वक्षो जठराण्यरीणां प्राणान्विचिन्वन्त इवाशुरन्ये ॥४८
केचित्पुनर्लब्धशिरःप्रहाराः क्षरन्नवासृक्स्थगितात्मवक्त्राः।
नैरेक्ष्यमाणा ध्वनिनावगम्या इतोऽमुतो जग्मुरहीनसत्त्वाः॥ ४९
विहाय चाभ्यर्णतयाप्नवाने प्रसह्य चक्रुः सहसा नियुद्धम्।
केचित्परेषां प्रतिगृह्य शस्त्रं व्याहन्तुकामा मुमुचुस्तदानीम् ॥ ५०
परे पराक्षीणि वितुद्य कुन्तैस्ते निःक्रिया वाक्टुरूक्षबाणैः।
अधिक्षिपन्तो ज्वलिताग्निकल्पा विसर्जयामासुरवज्ञयान्यान् ॥५१

---

१ [ °सेना ]. २ क °यसाभिः. ३ [ अभीत° ]. ४ [ प्रथमे ]. ५ म छुरिता°. ६ [ इवासुरण्ये ]. ७ म °स्थनितात्म°. ८ [ निरीक्ष्यमाणा ]. ९ क °प्नुवाने, [ विहायसाभ्यर्णतया प्रयाणे ].

प्रत्यागतानुद्यतशस्त्रपाणीन् प्रहर्तुकामानभितः समीक्ष्य ।
प्रवञ्च्य शिक्षाबलकौशलेन विनम्य पाशैर्निबबन्धुरन्ये ॥ ५२

केचित्पुरापि प्रतिबद्धवैराः पुनर्विशेषेण हि युद्धशौण्डाः ।
संज्ञाभिराहूय परस्परस्य गात्राणि शस्त्रैर्बिभिदुर्नृशंसाः ॥ ५३

केचित्पुनर्लोहनिबद्धदण्डैश्चण्डाः परेषामभिसंस्कृतानि ।
एकप्रहारैस्तु दृढैरभिन्दन् शिरांस्यलासूत्पलवत्प्रसह्य ॥ ५४

केचित्प्रभिन्नाः परशुप्रहारैः समुद्गरैस्तीक्ष्णमुखैश्च टङ्कैः ।
परे गदाघातविचूर्णिताङ्गास्तदैव जग्मुः परलोकमुग्राः ॥ ५५

तेषां मदोद्भिन्नगजाकृतीनां रणप्रियाणां कृतपौरुषाणाम् ।
शूरव्रणालङ्कृतभासुराणां सुसंप्रहरास्तुमला बभूव ॥ ५६

नृकुञ्जराः केचिदहीनसत्त्वाः पादप्रदेशग्रथितान्त्रमालाः ।
विरेजिरे युद्धभुवि भ्रमन्तः पाशावबद्धा इव मत्तनागाः ॥ ५७

केचिन्नृसिंहा रुधिराक्तशस्त्राः परप्रहारप्रभवोरुवीर्याः ।
विरेजुराजावतिघोररूपा घ्नन्तो गजेन्द्रानिव दृप्तसिंहाः ॥ ५८

स्वान्त्राणि केचिज्जठरधृतानि निगृह्य वामाङ्गकरैर्नृशूराः ।
संगृह्य खड्गान्यथ दक्षिणैस्तु विरेजुराजाविव राक्षसास्ते ॥ ५९

अन्तःप्रकोपात्परिवृत्तनेत्राः केचित्पराघातनिरस्तजीवाः ।
निःपीड्य दन्तैर्दशनच्छदांस्ते निपेतुरुर्व्यां तु सहस्रकोट्या ॥६०

उरस्सु केचित्समरप्रियाणां निहत्य पूर्वं पृथुसर्वलोहैः ।
निःकृष्य यातांब्ररयानुबाध्य तैरेव तांस्तीव्ररुषः प्रजहुः ॥ ६१

परस्पराघातविघट्टितास्त्राः परस्परं पीनभुजैर्निपीड्य ।
निपात्य भूमावतिरोषरौद्राः क्रमेण चक्रुस्तदरोत्तरांस्तान् ॥ ६२

१ [शिरांस्यलाबूत्पल°]. २ [बभूवुः]. ३ म °द्रुतानि. ४ [यातांस्त्वरयानुबाध्य].
५ [ चक्रुस्त्वधरोत्तरांस्तान् ].

खड्गैः प्रहन्तॄनितरेतरस्य विलोक्य वैराग्यमयुः सुभीताः ।
रागः समो मध्यमधीषु जातः शौर्यान्वितेषु द्विगुणो बभूव ॥६३
लब्धव्रणाः श्रान्ततमा रुदन्तस्तृषार्दिताः शीतजलाभिलाषाः ।
लज्जां विहायैव जिजीविषन्तः प्रदुद्रुवुः साध्वससन्नचित्ताः ॥६४
मत्तद्विपानां चरणाभिघातैः खुरावपातैर्वरवाजिनां च ।
पदातिपातै रथनेमिनद्धै रजस्ततानाम्वरदिग्मुखानि ॥ ६५
अभ्यर्णयोगात्प्रतिमिश्रिताश्च रजोऽवतानान्मतिविभ्रमाच्च ।
प्रहर्तुकामाः प्रसमुद्यतार्था न जज्ञिरे ते स्वजनाङ्गनांश्च ॥ ६६
एवं प्रवृत्ते समरेऽतिघोरे परस्पराघातरवातिभीता ।
रजःपटागुंठितविग्रहा सा मही न रेजे सभयाङ्गनेव ॥ ६७
ते चापि योधाः पिहिताक्षिवक्त्राः करावमर्शप्रतिवद्धसंज्ञाः ।
चिरादिवात्मप्रियवन्धुवर्गान्नाश्लिष्यते मोचयितुं समर्थाः ॥ ६८
नृणां हयानां करिणां बृहद्भिर्व्रणैर्महच्छोणितमुद्गिरद्भिः ।
रणाजिरोत्कीर्णरजः शशाम प्रावृट्पयोदैरिव रेणुरुर्व्याः ॥ ६९
प्रवृद्धधूमाकृतिधूसराणि नभोभुवं च प्रति तानि यांति ।
असृग्विमिश्राणि रजांसि तत्र तान्येव सिन्धूरवपूंषि वभ्रुः ॥ ७०
प्रशान्तरेणौ चरणप्रचारे परस्परालोकविवृद्धवैराः ।
आहूय तान्नामभिरुग्ररोषाः पदातयो जघ्नुरतीव शूराः ॥ ७१
हयांस्तु जातिप्रवरान्विनीतानारुह्य कार्योद्वहने समर्थान् ।
विकृत्य कुन्तेष्वसिपाशहस्ता वलं रिपूणाममृदुः प्रसह्य ॥ ७२
अथेतरेऽप्यस्त्रकलाप्रगल्भा भृशं द्विषाद्भिः परिभूयमानाः ।
प्रति प्रधान्याश्च सहस्रवृन्दैः समन्ततस्तान् रुरुधुः क्षणेन ॥ ७३

१ क वद्धव्रणाः. २ म °नेमिनर्धैः. ३ [ यान्ति ]. ४ [ रिपूणां ममृदुः ].

रथाधिरूढाः प्रचलत्किरीटा[1] ज्वलत्तनुत्रावृतसर्वगात्राः ।
धनुर्भिराश्विन्द्रधनुर्वपुर्भिर्वर्षासु धारा इव तेऽप्यदीव्यन् ॥ ७४
मदोद्धतानामथ कुञ्जराणां चलन्महाशैलसमाकृतीनाम् ।
स्कन्धाधिरूढाः प्रतियोद्धुकामाः परस्परं तेऽभ्यनयन्गजेन्द्रान् ७५
एवंप्रकारे तुमुले विमर्दे शौर्यस्य पुंसामनुयोगभूतम् ।
समुद्धृतासिद्युतिसंनिरस्ता प्रभाविभूतिः स ब [–⏑– –][2]॥ ७६
ते योधमुख्याः कणयैर्गदाभिः सतोमरैः पट्टिसभिण्डिमालैः ।
चक्रैश्च शूलैः पृथुलोहवृन्तैः प्रजघ्नुरन्योन्यममोघमोक्षैः ॥ ७७
केचिद्विसृष्टानि वरायुधानि स्वकौशलाच्चिच्छिदुरन्तरिक्षे ।
केचिद्गृहीत्वान्तर एव वीरास्तदैव [–][3]तान्यमुचन्परेभ्यः ॥ ७८
गजैर्गजाः प्रस्फुरदद्रिकल्पा रथै रथाश्वैत्कृतताः समेताः (?) ।
तदातियुध्यन्त हयैर्हयास्ते पदातयस्तत्र पदातिभिश्च ॥ ७९
गजास्तुरङ्गाश्च विपन्नदेहाः क्षितौ पतन्तः करुणं चकूजुः ।
नरा वराका युधि भीरवोऽन्येऽप्यलब्धकामा मरणं प्रयाताः ॥ ८०
लब्धव्रणानां रणकर्कशानां वक्षस्स्थलेभ्यः स्तुतरक्तधाराः ।
युतं[4] विरेजुः कृतसाहसानां शैलेन्द्रभित्तिष्विव धातुधाराः ॥ ८१
महाजिभूमौ रुधिराक्तगात्रा प्रभग्नमातङ्गरथाश्ववृन्दा ।
वहिर्गतान्त्राभविलम्बमाला सन्ध्याभ्ररागं सकलं बभार ॥ ८२
क्वचिद्गजानां शवसंकटत्वात्क्वचिद्धयाङ्गावयवैकदेशात् ।
क्वचित्कबन्धप्रतिनर्तनाच्च महारणो भीमतमो बभूव ॥ ८३
स्थितः क्वचिच्च क्वचिदेव नम्रः[5] क्वचित्पुनः शूरगतिं प्रपन्नः ।
क्वचिच्च नीचः क्वचिदेव तुङ्गः क्वचिज्जयं प्राप्य भृशं जहर्ष ॥ ८४

१ क तिरीटाः. २ क बभूव शूराः. ३ [ ते ]. ४ [ द्रुतं ]. ५ [ भग्नः ].

इति गजरथवाजिपादभारै-
विपुलबलैः समदैश्चतुर्विधैस्तैः ।
उभयनृपयशोवसन्तभूतै-
र्निचिततया बभूव मिश्रयुद्धम् ॥ ८५
ललितपुरपतेर्नराधिपस्य
प्रथितधियो मधुराधिपस्य राज्ञः ।
यदभवदनयोर्विशेषयुद्धं
तदहमशेषमतस्तु संप्रवक्ष्ये ॥ ८६

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
मिश्रकयुद्धो नाम
सप्तदशमः[1] सर्गः ।

---

## [ अष्टादशः सर्गः ]

नरेश्वरा ये मधुराधिपस्य भृत्याः प्रकृत्यर्थपराः समेताः ।
तान्सामदानप्रमुखैरुपायैः स देवसेनः स्ववशे चकार ॥ १
ततो महत्त्वं त्वविगण्य तस्य जिगीषया नीतिपराक्रमाभ्याम् ।
तदेन्द्रसेनेन स योद्धुकामः स्वयं प्रतस्थे खलु देवसेनः ॥ २
संतेजनोपायविधानमार्गैः प्रोत्साह्यमानामथ सान्त्वदानैः ।
विजेतुकामोऽथ वरूथिनीं तां व्यूहं विधिज्ञः कृतवानभेद्यम् ॥ ३
कृतोपधानाः खलु योधमुख्याः पृष्टा यथाकाममपमृत्युभीताः ।
अन्वागता येऽप्यनुरागिणश्च सवाहनास्तान्प्रशशास योद्धुम् ॥ ४

---

१ [ सप्तदशः ].

स्वभावतः शूरतमाः कृतास्त्रा लब्धाभ्यनुज्ञाश्च पुनर्नृपेण ।
इतस्ततः शत्रुचमू वरास्त्रैर्घ्नन्तो विचेरुर्युधि कालकल्पाः ॥ ५
एवं प्रवृत्तं समरं सुघोरं महार्णवक्षुब्धतरङ्गलोलम् ।
शस्त्रातिसंघट्टनजातवह्निं समीक्ष्य राजा च तदेन्द्रसेनः ॥ ६
वलाहकाख्यं वरवारणेन्द्रं द्रुतं समारुह्य गृहीतशस्त्रः ।
षड्भिर्गजानां तु वृतः सहस्रैः किमास इत्येतदथाजगाम ॥ ७
आयान्तमालोक्य तदिन्द्रसेनं[1] महेन्द्रविक्रान्तमपारवीर्यः ।
करीन्द्रवृन्दैर्विजयोऽभ्युपेत्य पुरःसरीं तस्य चमूं रुरोध ॥ ८
आकर्णपूर्णानि शरासनानि कृत्वैव लक्ष्येषु निपात्य दृष्टीः ।
अन्योन्यमिष्वस्त्रविदः समेताः समन्ततः संविविधुः[2] प्रसह्य ॥ ९
गजाधिरूढैस्तु निपात्यमानास्ते शङ्कवो हस्तिषु वद्धपिच्छाः ।
शिखण्डिनः पर्वततुङ्गकूटान्निलीयमाना इव पर्वतेषु ॥ १०
तेषां तु संनाहवतां गजानां मुखेषु संयन्त्रिवचोदितानाम् ।
आदन्तवेष्टादितरेतरस्य दन्ता ममर्जुर्दृढलोहबद्धाः ॥ ११
ते तोमराघातविभिन्नगात्राः प्रचक्षर[3]ल्लोहिततीव्रधाराः ।
गजा मदान्धाः समरे रिपूणामौत्पातिकाम्भोधरभीमरूपाः ॥ १२
गदाश्च गुर्व्यः परिघा बृहन्तो निशातधारा दृढशक्तयश्च ।
निपात्यमाना युधि योधमुख्यैश्चक्रुः परास्तत्करिणः स्वयन्तॄन्[4] १३
अन्योन्यदन्तांस्तु वलाद्गजेन्द्रा उत्पाट्य रोषाद्विसतत्क्षणेन[5] ।
स्वलोहितार्द्रैरभिजघ्नुरन्यान्नीराजनायामिव तैरलातैः ॥ १४
योधान्गजस्योर्ध्वगतांस्तु केचित्सपूर्वमध्यान्तनिपादिनोऽन्यान् ।
संवन्धविद्धैर्निशितैः पृषत्कैर्निपातयामासुरपेत्य धीराः ॥ १५

१ [ तामिन्द्रसेनं ]. २ क संविदधुः. ३ [ परिक्षरल्लोहित° ]. ४ म सयंतॄन्. ५ [ रोषाद्विसवत् ].

विनिश्चितार्था विजयस्य योधा धनुर्विमुक्तैरिषुभिः किरन्तः ।
उपेन्द्रसेनस्य बलं विशालं पराङ्मुखीचक्रुरतुल्यवीर्याः ॥ १६
पराङ्मुखानामथ सैनिकानां पृष्ठेषु कान्ताननवीक्षितेषु ।
बाणा निपेतुर्द्रवतां जवेन पश्चार्धकायेषु च कुञ्जराणाम् ॥ १७
तेषां पुनः प्रद्रवतां ध्वजाश्च छत्राणि चामीकरदण्डवन्ति ।
विधूतबालव्यजनानि चैव पेतुः पताकाश्च सवैजयन्त्यः ॥ १८
उपेन्द्रसेनस्तु विलोक्य सेनां विभज्यमानां विजयप्रधानैः ।
विहाय लज्जामथ विद्रवन्तीमपारसत्त्वः प्रसभं चुकोप ॥ १९
संनाहिनः स्वान्करिणां समूहांस्ततस्तिरस्कृत्य धनुर्विकृष्य ।
उपेन्द्रसेनस्त्वरितोऽभ्यगच्छज्जिघांसया तं विजयस्य सैन्यम् २०
आयातमारोपितचारुचापं शरैः किरन्तं रिपुवाहिनीं ताम् ।
स्वतेजसा प्रज्वलितार्कभासं मेने जनः कालमिवोग्ररूपम् ॥ २१
जयश्रिया संजनितानुरागैः स्वसैनिकैः संपरिवारितस्तैः ।
तस्थौ परस्याभिमुखो मुहूर्तं रणाजिरे युद्धमदोपनद्धः ॥ २२
उपेन्द्रसेन प्रतिचोद्ययातास्तद्योधवीरा विदितास्त्रयोगाः ।
शरोरुधारास्त्वमुचन्नजस्रं प्रावृट्पयोदा इव वारिधाराः ॥ २३
तच्छौर्यवीर्यप्रतिनष्टचेष्टस्तत्सैनिकाक्रान्तहृतप्रतापः ।
तद्बाणनिर्भिन्नतनुः स मन्त्री तिरोदधे स्म स्वनराधिपेन ॥ २४
उपेन्द्रसेनाभिहतप्रतापं प्रभग्नसेनं विजयं निरीक्ष्य ।
कश्चिद्भटस्तूर्णमुपेत्य तस्य स्थितः पुरस्तादनपेतसत्त्वः ॥ २५
घण्टारवोन्मिश्रिततूर्यघोषं रत्नप्रभाहेपितभानुभासम् ।
गजेन्द्रकेतुं प्रतिलक्ष्यमाणं गजाधिपं त्वप्रतिमल्लसंज्ञम् ॥ २६

१ क पराङ्मुखं. २ [ उपेन्द्रसेनं ].

आरुह्य नीलाद्रिसमा[1]सकल्पं कश्चिद्भटं बालरविप्रकाशम् ।
घ्नन्तं स्वसैन्यं प्रसमीक्षमाणस्तमैन्द्रसेनिः प्रसहं[2]न्नुवाच ॥ २७

किं वा स्ववंशानुचितेन तेन तवार्धराज्येन सुखेन मृत्योः ।
सुनन्दया वा किमु कालराऽया जीवन्नरः पश्यति भद्र भद्रम् ॥२८

नृपैर्नृपाणां समरे प्रवृत्ते नैवासि योग्योऽत्र वणिक्सुतत्वात् ।
अपोह्य[3]थास्मत्पुरतोऽल्पबुद्धे न्यूने वयं नो भुजमुच्छ्रयामः ॥ २९

लप्स्येऽहमुर्वीशसुतामिति त्वं दुराशया क्लेशमुपैष्यकस्मात् ।
तादृग्विधं निस्त्रपमप्रवीणं न हन्मि निष्कारणमाशु याहि ॥ ३०

यदि प्रया[4]तं पुरतो न चेच्छेस्तावत्प्रतीक्षस्व मुहूर्तमात्रम् ।
निकृत्य तेऽङ्गानि नृपात्मजायै संप्रेषयाम्यद्य हि मा त्वरिष्ठाः ॥३१

उपेन्द्रसेनस्य युवाधिपस्य युवत्वतेजोबलगर्वितस्य ।
गिरं निशम्यात्ममनोरुजन्तीं कश्चिद्भटः प्रत्यवदद्रुषा तम् ॥ ३२

यो वा स वाहं तव किं मयात्र गजः स एवायमभीप्सितार्थः ।
मयाधिरूढस्तु सहैव पित्रा त्वां प्रापयत्यद्य यमातिथित्वम् ॥३३

गजं परेषां परराजधानीं ग्रहीतुकामस्तु विनैव वैरात् ।
किमागतस्त्वं धनमानदृप्तो लज्जान्वितश्चेद्वद जातिधीर ॥ ३४

विक्रीतवा[5]न्यो नयवद्विनीतः शूरः कृतास्त्रो न च मृत्युभीरुः ।
संग्रामकाले स जयत्यरातीनाकृष्यमाणो म्रियते न कश्चित् ३५

स्वजीवितेनात्र ममाग्रतस्तु यदि प्रयातो निरुपद्रवेण ।
प्रेक्षस्व पश्चात्तव मृत्युकल्पं श्रीदेवसेनाख्यमदीनसत्त्वम् ॥ ३६

अवज्ञयान्यांस्तु वि[6]वक्षते वा यत्किंचिदात्मोन्नतिगर्वदग्धः ।
निरस्तविज्ञानगुणावबन्धः स लाघवं सत्सु परं प्रयाति ॥ ३७

१ क °समान°. २ क प्रसमन्, [ प्रहसन् ]. ३ [ अपेह्यथास्मत् ].
४ [ प्रयातुं ]. ५ [ विक्रान्तवान्यो ]. ६ क विवाक्षिते.

न केवलं वाकलहेन कार्यं निरर्थकेनैवमथावयोस्तु ।
व्यक्तीभवत्यद्य हि पौरुषस्य सुवर्णसारो निकषाश्मनीव ॥ ३८
प्रशस्य तावद्वणिजां प्रहारान्प्राणक्षयं कर्तुमनीहमानान् ।
इति ब्रुवाणो वरवारणेन्द्रं कश्चिद्भटो योद्धुमुपानिनाय ॥ ३९
अभ्यर्णमायान्तमुपेन्द्रसेनः समीक्ष्य कोपायतताम्रदृष्टिः ।
बलाहकं ताम्रगिरिप्रकाशं कश्चिद्भटस्याभिमुखं निनाय ॥ ४०
मृगेन्द्रशावाविव संप्ररुष्टौ युद्धातिशौण्डाविव भर्त्सयन्तौ ।
परस्परं व्यङ्कमयःशरौघैः प्रारब्धवन्तौ प्रतिबद्धवैरौ ॥ ४१
बृहत्पृपत्कैस्त्वथ वत्सदन्तैः सूचीमुखैः पूर्णतमार्धचन्द्रैः ।
कर्णेषु नाराचवरैश्च तीक्ष्णैरविध्यतां तौ च परस्परं हि ॥ ४२
ताभ्यां धनुर्वेदविशारदाभ्यां विमुक्तनाराचशरोरुवर्षाः ।
विभासमानाः खतलं वितत्य वर्षासु धारा इव संनिपेतुः ॥ ४३
अन्योन्यमर्माणि निरीक्षमाणावन्योन्यशस्त्राणि च वञ्चयन्तौ ।
स्वसन्धिमर्माण्यभिपालयन्तौ शार्दूलपोताविव भर्त्सयन्तौ ॥ ४४
सर्वायसैः प्रासवरैश्च शूलैश्चक्रैश्च गोलायसशङ्कुभिश्च ।
संभिण्डिमालैः कणयैश्च तीक्ष्णैरद्रेरिवाद्रिं क्षिपतः स्म तूर्णम् ४५
उपेन्द्रमुक्तानि वरायुधानि विकुण्ठितान्यप्रतिमल्लमूर्ध्नि ।
मुखे ममज्जुर्वणिजात्मजेन मुक्तानि तानीन्द्रसुतद्विपस्य ॥ ४६
अथेन्द्रसेनस्य सुतेन मुक्ता ममज्जु मूर्ध्नी प्रतिमल्लनाम्नः ।
बलाहकस्योन्नतकुम्भभेदं चकार कश्चिद्भटमुक्तशक्तिः ॥ ४७
उपेन्द्रसेनाहतशङ्कवस्ते निपेतुराशु प्रतिमल्लमूर्ध्नि ।
कश्चिद्भटप्रेरिततोमराणि बलाहकाङ्गावयवानभिन्दन् ॥ ४८

१ क शूचीमुखैः. २ [ संभिन्दिपालैः ]. ३ क ममज्जुं, [ ममज्ज मूर्ध्नि ].

तौ वारणेन्द्रौ भवतस्तदानीं व्रणाननेभ्यः स्नुतरक्तधारौ ।
उल्काभिघातक्षतभिन्नरूपौ यथा नगौ स्यन्दितधातुधारौ ॥ ४९
असृक्परिक्लिन्नतमाङ्गरागौ गलोज्ज्वलत्काञ्चनरज्जुबद्धौ ।
सविद्युतौ सान्ध्यवपुर्भृतौ तौ विरेजतुर्वारिधराविवेभौ ॥ ५०
अन्योन्यमुक्तानि च तोमराणि सर्वायसान्यप्रतिमद्युतीनि ।
नभस्तले रेजुरतीव तानि सविद्युदुल्का इव संपतन्त्यः ॥ ५१
उपेन्द्रसेनेन विमुक्तशक्तिः करेण वामेन निपात्य भूमौ ।
कश्चिद्भटो दक्षिणबाहुनाशु जघान शक्त्या हृदि सर्वशक्त्या ॥ ५२
तत्तीक्ष्णशक्तिप्रहतोऽभिपद्य चक्रेण सन्ध्यार्कवपुर्धरेण ।
पाश्चात्यमप्याशु निपात्य भूमौ कश्चिद्भटस्य प्रचकर्त केतुम् ॥५३
किं वा त्वयाहं चिरमत्र योत्स्ये वणिक्सुतेनास्त्रगुणाश्रयेण[1] ।
इति प्रभाष्य प्रतिभत्स्यनीतिर्मुमोच चक्रं पुनरैन्द्रसेनिः ॥ ५४
आयान्तमालोक्य हि कालचक्रं तद्वञ्चयित्वा स्थिरधीः सुचक्रम् ।
धृतं प्रगृह्यान्यदमोघचक्रं चिच्छेद हस्तं कटकावनद्धम् ॥ ५५
भूयोऽप्युपेन्द्रस्य हि पारिपार्श्वान्निहत्य तूर्णं कणयप्रहारैः ।
ध्वजातपत्रामलचामराणि निपातयां भूमितले बभूव ॥ ५६
शिक्षाबलेनात्मपराक्रमेण छिन्नैकहस्तः पुनरैन्द्रसेनिः ।
मुहूर्तमेवं युयुधेऽतिवीरो भग्नैकदन्तो द्विरदो यथैव ॥ ५७
कश्चिद्भटोऽस्त्राण्यमुचद्विशङ्को द्वाभ्यां भुजाभ्यां द्रुतमायताभ्याम् ।
जवेन गत्वा विविशुः शरीरे यथोरगेन्द्रा विवरेऽचलस्य ॥ ५८
उपेन्द्रसेनस्य वरायुधानि सव्येन हस्तेन विनिःसृतानि ।
ययुः पुनस्तानि च मन्दमन्दं लूनैकपक्षा विहगा यथैव ॥ ५९

१ म °गुणाश्रमेण.

निर्वीर्यतां राजसुतस्य बुद्ध्वा कश्चिद्भटश्चारुभटोऽतितूर्णम् ।
गजं गजेन्द्राप्रतिमल्लनाम्ना बलाहकं वायुरिवोन्ममर्द्ध[1] ॥ ६०
दिवा इपन्तं प्रतिभग्नदन्तं बलाहकं चाप्रतिमल्लनागः ।
प्रहत्य तूर्णं करपाददन्तैर्हितेन हस्तं करिणो न्यकासीत्[2] ॥ ६१
शक्तिं सुतीक्ष्णां त्वरया विगृह्य सूपेन्द्रसेनोरसि[3] निर्मुमोच ।
विभिद्य वक्षस्स्थलमीश्वरस्य ममज्ज भूमावतिचण्डवेगा ॥ ६२
शक्तिप्रहारेण विभिन्नदेहं भ्रान्तेक्षणं वीक्ष्य वणिक्सुतस्तु ।
उद्धृत्य खड्गं च तटित्प्रकाशं शिरश्च तस्य प्रचकर्त शूरः ॥ ६३
चलज्ज्वलत्कुण्डलमण्डितास्यं मणिप्रभारञ्जितसत्किरीटम्[4] ।
शिरः पपातेन्द्रसुतस्य तस्य सौरं यथा मण्डलमस्तमूर्ध्नि ॥ ६४
मानोन्नतं नावनतं परेभ्यो दोलायमानं भ्रमरावलीकम् ।
शिरः सपादं[5] विनिपात्य भूमौ प्रफुल्लपद्माकृतिमादधार ॥ ६५
प्रभञ्जनप्रेरितनीरदे खे दुःप्रेक्षतां याति यथा ग्रहेन्द्रः ।
तथारिपक्षक्षपणोदितश्रीः कश्चिद्भटश्चारुभटो बभूव ॥ ६६
संप्राप्य युद्धे विजयावतंसं स्वसैनिकानां मुदमादधानः ।
महाबलः सिंहनिनादमुच्चैर्ननाद चेतो द्विषतां च भिन्दन् ॥ ६७
अथोभयोर्भूपतयो नृसिंहाः स्वमानविश्रम्भरसोरुवीर्याः ।
स्वान्स्वान्करीन्द्रानधिरुह्य सर्वे संनह्य युद्धाभिमुखा बभूवुः ॥ ६८
ततः करीन्द्राः प्रतिगर्जयन्तो वाग्वीरनादागतमेघतुल्याः ।
परस्परं पादकराग्रदन्तैर्जघ्नुः सयोधाः समुपेत्य चण्डाः ॥ ६९
मुखण्डिभिः[6] शक्त्यासियष्टिभिश्च चक्रैर्गदाभिः कणयैश्च टङ्कैः ।
समुद्गरैस्तोमरसर्वलोहैः परस्परं ते च भृशं प्रजह्रुः ॥ ७०

१ [ °ममर्द ]. २ [ न्यकार्क्षीत् ]. ३ [ सोऽपीन्द्रसेनोरसि ]. ४ क सत्तिरीटम्. ५ [ सपातं ]. ६ [ शिखण्डिभिः ].

केषांचिदास्यानि सकुण्डलानि पादाश्च केषांचिदथाम्बुजाभाः ।
कराः स्फुरत्काञ्चनभूषणाढ्याः शस्त्रप्रहारादवनौ निपेतुः ॥ ७१
किरीटपट्टोज्ज्वलहारसूत्रैश्छत्रध्वजैश्चामरकेतुमाल्यैः ।
करीन्द्रघण्टाहयकिङ्किणीभिः कृतोपहारेव मही बभासे ॥ ७२
अथेन्द्रसेनश्च हि देवसेनः प्रबद्धवैरौ दृढबद्धकक्षौ ।
कृतप्रतिज्ञावसुरेन्द्रकल्पौ परस्परं तावबलोक्य वीरौ ॥ ७३
स्वनामगोत्राण्यभिधाय रोषात्सभ्रूविभङ्गे वदने प्रकृत्य ।
आदाय तान्यस्त्रवराणि दोर्भिरुल्लासयन्तावभिमानया तौ ॥ ७४
देशाकरग्रामपुराणि यानि बलद्वयेनैकविबन्धनं च ।
य आवयोरेक इहावशिष्टस्तस्मै भवत्वेतदिति ब्रुवाणौ ॥ ७५
कुरु त्वमेकं प्रथमं प्रहारं त्वं पश्य पश्येति च भर्त्सयन्तौ ।
वने गजेन्द्राविव जातदर्पावभीयतुस्तौ समराभिलाषौ ॥ ७६
शस्त्राणि वज्राग्निविषोपमानि नानाकृतीनि त्वरया प्रगृह्य[2] ।
परस्पराङ्गावयवान्प्रतीत्य व्यमुञ्चतां वीतभयौ महीशौ ॥ ७७
प्रवृद्धकान्तिद्युतिसत्त्वरोषः श्रीदेवसेनः प्रगृहीतचक्रः ।
लघ्वीन्द्रसेनस्य महाबलस्य चिच्छेद भास्वन्मकुटं च केतुम् ॥ ७८
तथेन्द्रसेनोऽतिविवृद्धमन्युर्विद्युत्प्रभां शक्तिमरं[3] प्रगृह्य ।
श्रीदेवसेनं प्रति निर्मुमोच नुनोद सा तस्य किरीटमिद्धम् ॥ ७९
श्रीदेवसेनेन पुनर्विमुक्ता शक्तिः स्फुरद्रत्नगभस्तिमाला ।
श्वेतातपत्रं मधुराधिपस्य न्यपातयद्धस्तिपकेन सार्धम् ॥ ८०
छत्रं प्रभग्नं मधुराधिपस्य दन्तप्रभङ्गादिव वारणेन्द्रः ।
रोषा[4]तितूर्णं कणयां मुमोच स तस्य चिच्छेद मृगेन्द्रकेतुम् ॥ ८१

१ क तिरीट°. २ क विगृह्य. ३ [ शक्तिधरां ]. ४ [रुषातितूर्णं ]

भिन्नात्मकेतुर्बृहदुग्ररोपः प्रलम्बबाहुः प्रतिलब्धसंज्ञः ।
प्रगृह्य चक्रं मधुरेश्वरस्य गदाग्रहस्तं प्रचकर्त वीरः ॥ ८२
अथोभयोच्छिन्नविपन्नकेत्वोर्निपातितोपाग्तगजाधिनेत्रोः ।
प्रमर्दितात्मद्विपपादगोत्रोर्मुहूर्तमेकं समयुद्धमासीत् ॥ ८३
तस्मिन् रणे भीमतमे प्रवृद्धे वलाहकस्त्वप्रतिमल्लनुन्नः ।
युगान्तवाताहतविन्ध्यकल्पः पपात भूमौ करुणस्वनेन ॥ ८४
वज्राभिघातादिव शैलशृङ्गं शस्त्रप्रहारप्रतिभग्नगात्रम् ।
उपेन्द्रसेनं विगतासुमाशु समीक्षिषातामवनीश्वरौ तौ ॥ ८५
गजावपातध्वनिमप्रगल्भं महाभ्रनादप्रतिमं निशम्य ।
तौ युध्यमानौ वसुधेन्द्रचन्द्रौ वभूवतुर्द्वैधमनःप्रचारौ ॥ ८६
श्रीदेवसेनो रिपुमर्दनश्रीरुपेन्द्रसेनव्यसनं समीक्ष्य ।
जयं परं प्राप्य विभासमानं कश्चिद्भटं चापि भृशं जहर्ष ॥ ८७
सोऽपीन्द्रसेनस्तनयावभङ्गाद्द्विषां प्रवृद्धे द्विगुणातिरुष्टः ।
समित्समिद्धाग्निरिव प्रकामं जज्वाल जात्यादिमदावलिप्तः ॥ ८८
धिक्शूरसेनाधिपतित्वलक्ष्मीं धिगिन्द्रसेनत्वमिदं मयाद्य ।
निर्देवसेनां यदि नैव कुर्यां महीमिमां सागरवागुरान्ताम् ॥ ८९
इति ब्रुवन्नेव सुनिश्चितार्थो विपन्नहस्तादवतीर्य नागात् ।
मदान्धमन्यं द्विषदेककालं सुकम्पितं वारणमारुरोह ॥ ९०
ततोऽस्तु सम्यक्प्रभवान्गुणान्स्वान्प्रकाशयामास रणे प्रचण्डः ।
यद्यत्पुनर्दृष्टिपथोपनीतं द्विपद्बलं स्थातुमलं न तस्य ॥ ९१
तद्देवसेनस्य तु सैन्यमाजौ शङ्कां परां संजनयन्नृपस्य ।
भङ्गावतंसां विजयैकलक्ष्मीं निजां चकारेव भयात्तदानीम् ॥ ९२

१ क द्विपसाद, [ °गोप्त्रो° ]. २ क कश्चिद्भटश्चापि. ३ क प्रवृद्धिः.
४ [ ततस्तु ]. ५ [ भग्नावतंसां ].

उपेन्द्रसेनं युवराजमाजौ निहत्य भूयः प्रतिलब्धसंज्ञः ।
कश्चिद्भटः साधुयशोऽवतंसं बिभ्रत्स बभ्राम मृगेन्द्रलीलः ॥९३
परिभ्रमन्काल इवान्तरूपः कश्चिद्भटः शत्रुषु लब्धतेजाः ।
स देवसेनं सबलं मनस्वी ददर्श मृद्नन्तमथैन्द्रसेनम् ॥ ९४
दृष्ट्वा तमाराद्विजयं परीप्सन्सव्यापसव्यं प्रकिरञ्छरौघान् ।
निसृष्टवानप्रतिमल्लमाजौ युयुत्समानो मधुराधिपेन ॥ ९५
तमाप्नुवन्तं बलवन्तमन्तं सूनोः समीक्ष्याशु स इन्द्रसेनः ।
शरासनं स्वं बलवद्विकृष्य मुमोच नाराचवराञ्जिघांसन् ॥ ९६
तानन्तरिक्षे स्वधनुर्विमुक्तैर्विच्छिद्य तीक्ष्णैः पुनरर्धचन्द्रैः ।
विव्याध बाणैरपरैर्बृहद्भिर्वक्षस्यरिं सोऽन्तमुपानिनीषुम्[१] ॥ ९७
सन्तानमुक्तैर्विशिखैरनेकैर्गजस्य नेतारमधो[२] निपात्य ।
चकर्त भल्लेन शितेन रोषात्कश्चिद्भटस्तद्धनुरैन्द्रसेनम् ॥ ९८
परं न गृह्णाति धनुः स यावद्विव्याध तावद्भुजमुन्नतांसम् ।
गजेन्द्रकुम्भोद्भिदुरान्पृषत्कान्ससर्ज शुष्काशनिभीमरूपान् ॥९९
इतोऽमुतो भग्नविशीर्णसेनामात्मानमत्यन्तमुरक्षताङ्गम्[३] ।
समीक्ष्य चापस्य च भङ्गमाजौ विपन्नबुध्यस्त्रवपुर्बभूव ॥ १००
ततोऽवरुह्याशु स मेघनादात्क्षतस्रवच्छोणितवारणेन्द्रात् ।
हयं समारुह्य तदातिभीतः पराप्रतस्थे मधुरावनीशः ॥ १०१
गते नरेन्द्रे मधुराधिपे तु विनायकं त्रस्तभयेतवीर्यम्[४] ।
बलं तदा वातसमूहघातविशीर्णतूलप्रतिमं बभूव ॥ १०२
ततश्च कश्चिद्भट ऊर्जितश्रीर्हतावशेषं बलमाजिघांसन् ।
अनुप्रतस्थे सशरौघवर्षी रूपी प्रजाः संहरतीव कालः ॥ १०३

१ [°निनीषुः]. २ म नेतारमथो. ३ [ °शरक्षताङ्गम्]. ४ क °भयोत्थवीर्यम्.

केषांचिदङ्गान्यसिनो चकर्ष पिपेष वीरो गदया शिरांसि ।
विदार्य केषांचिदुरांसि चक्रैर्निपातयामास वसुंधरायाम् ॥ १०४
केषांचिदुत्क्षिप्तसुचामराणि छत्राणि चन्द्रोदयपाण्डुराणि ।
धनूंषि पुष्पध्वजकेतुमालाः शरावपूर्णानि सुधीश्चकर्त ॥ १०५
शङ्काभिवर्तक्रमसौष्ठवाभ्यां सतोमराभ्यां स्थिरधीः कराभ्याम् ।
वर्माणि वर्मप्रतियातनानि क्षणाद्बिभेदाप्रतिमान्यरीणाम् ॥ १०६
छिन्नाग्रहस्ता विमुखाश्च केचित्केचिन्नताः साञ्जलयो विभीताः ।
केचिच्च तत्रैव विमोहमायुर्ललम्बिरेऽन्ये गजमस्तकेभ्यः ॥ १०७
अन्तर्दधुर्गुल्मलतासु केचित्केचिच्च वाल्मीकशिखाधिरूढाः ।
केचित्तृणादाः प्रतिमुक्तकेशा गतासवः केचिदुपेयुरुर्वीम् ॥ १०८
यतो यतस्त्वप्रतिमल्लनागं स्थूलोच्चयेनैव गतिक्रमेण ।
संचारयामास स जातहर्षस्ततस्ततः शत्रुबलं दधाव ॥ १०९
अथावशिष्टां रिपुवाहिनीं तां निरुध्य सर्वांश्च कृतानुयात्रान् ।
स्वपक्षतुष्ट्यै परपक्षभीत्यै दध्मौ स शङ्खं बृहदभ्रघोषम् ॥११०
ततोऽरिचक्रं प्रविजित्य धीमान्निदाघमध्याह्नरविप्रकाशम् ।
उपेत्य राजानमुदारकीर्तिं ननाम पादौ कमलावदातौ ॥ १११
विलोक्य पादावनतं नरेन्द्रः प्रोत्थाप्य नागात्स्वपुरो निवेश्य ।
प्रसारितेनात्मभुजद्वयेन स हृष्टचेता भृशमालिलिङ्गे ॥ ११२
दृष्टं मया पौरुषमेतदार्य तवाद्वितीयं युधि दुःप्रधर्षम् ।
त्वत्तः परोऽन्यो न च मेऽस्ति बन्धुरित्यब्रवीद्दर्पविबुद्धवक्त्रः ॥
मन्त्रीश्वरश्रेणिगणप्रधानाः समक्षभूताः परिहृष्टभावाः ।
त्वयाद्य कश्चिद्भट साधु साधु नामानुरूपं कृतमित्यवोचन् ११४

१ [ चकर्त ]. २ [ विमोहमापु° ]. ३ [ वल्मीक ].

संपूज्य तं सागरवृद्धिमिभ्यं काश्चिद्भटं चाप्रतिमप्रभावम् ।
गजेन्द्रमारोप्य धृतातपत्रः पुरं विवेशावनिपः सलीलम् ॥ ११५
आनन्दभेर्यः पटहा मृदङ्गा वीणाः सवंशाः सह कंसतालैः ।
जयं नरेन्द्रस्य निवेदनार्थमाशीर्गिरश्चाप्याधिकं विनेदुः ॥ ११६
गृहे गृहे चन्दनधामचित्राः समुच्छ्रिताः पञ्चविधाः पताकाः ।
प्रभञ्जनस्पर्शविवर्तिताङ्गा रेजुस्तरङ्गा इव सागरस्य ॥ ११७
प्रासादगर्भादभिनिस्सृतानि वराङ्गनानां मुखपङ्कजानि ।
बभुर्भ्रमत्षट्चरणावलीभिः सबन्धनानीव सरोरुहाणि ॥ ११८
वातायनेभ्यः खलु पुष्पवर्षं वराङ्गनाबाहुलताः सलीलाः ।
प्रचक्षरुश्चूर्णरजोविमिश्रं वातावधूता इव कामवल्ल्यः ॥ ११९
पुराङ्गनास्ताः पुरमाविशन्तं काश्चिद्भटं भूपतिनैव सार्धम् ।
समीक्ष्य वाक्यानि मनोनुगानि जातप्रहर्षा कथयांबभूवुः ॥१२०
काश्चिद्भटं पश्यत पश्यतैनं श्रियोज्ज्वलन्तं विबुधेन्द्रलीलम् ।
एकोऽप्यनेकान्बलवीर्यदृप्ताञ्जिगाय शत्रूनिति काश्चिदूचुः ॥१२१
एकस्य हेतोः करिणो नरेन्द्रः स माधुरो दूरतरादथैत्य ।
स्त्रियं सुतं कोशगजांश्च सारानुत्सृज्य यातस्त्विति काश्चिदाहुः १२२
जगज्जनानां पुरपुण्यतस्तु रिपुं जिगायायमथाश्रमेण ।
अतोऽन्यथा केवलमानुषेण कुतो जयो लप्स्यत इत्यवोचन् ॥१२३
काश्चिन्नरेन्द्रार्जितपूर्वपुण्यात्काश्चित्सुनन्दासुकृतप्रभावात् ।
काश्चित्स्वयं स्वेन पराक्रमेण रिपुं जिगायेत्यवदंस्तरुण्यः ॥१२४
कुतस्तु काश्चिद्भट एष धीमान्कुतो वणिक्केवलमानुषोऽयम् ।
कुतो वणिक्त्वं कुत एतदैश्यं नास्माकमस्मात्खलु विस्मयोऽस्ति ॥

१ क दृप्तान्.

राज्ञा सहायान्तमिभेन्द्रमूर्ध्नि विलोक्य तं सागरवृद्धिमूचुः ।
इदं पुनः पश्यत दर्शनीयं कश्चिद्भटाय[1] श्रियमेष भुङ्क्ते ॥ १२६

येनात्मनोपार्जितमत्र पुण्यं तेनैव भोक्तव्यमिति प्रदिष्टम् ।
इदं विपर्यस्तमिवोपलक्ष्यं परैः कृतं यद्धि परस्तु भुङ्क्ते ॥ १२७

अवश्यमन्यत्र महाकृतिभ्यामाभ्यां सहैवाचरितं तपः स्यात् ।
तदेतदुद्भूतफलमपश्वं सुव्यक्तमासीदिति काश्चिदूचुः ॥ १२८

इत्येवं ललितपुराधिवासिनीभिः
प्रीत्या तौ कथितौ विलासिनीभिः ।
तेनैव क्षितिपतिना वणिक्सुतौ तौ
संप्राप्तौ नृपगृहमृद्धिवृद्धिशालम्[2] ॥ १२९

राज्ञीभिर्मदनरसं प्रदायिनीभिः[3]
कान्ताभिः प्रचलितचारुभूषणाभिः ।
युद्धश्रीश्रुतिसंकथारताभिर्हृष्टः
स [ – – ] नृपतिरथाविशत्स्वगेहम् ॥ १३०

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥

कश्चिद्भटविजयो नाम
अष्टादशः सर्गः ।

---

१ [ कश्चिद्भटस्य ]. २ क °ऋद्धिवृद्धिशालम्, [ °ऋद्धिमद्धिशालम् ].
३ [ °रसप्रदायिनीभिः ].

## [ एकोनविंशः सर्गः ]

अथान्यदा वृद्धतमैर्नरेन्द्रैः[1] सुखं निषण्णः तनयां प्रदित्सुः ।
आहूय कश्चिद्भटमासयित्वा पप्रच्छ वंशानुगतां प्रवृत्तिम् ॥ १
विज्ञानकान्तिद्युतिसत्त्वयुक्तो यतो दिगन्ते प्रथितोरुकीर्तिः ।
धन्यौ ततस्ते पितरौ कुतस्तौ विज्ञातुमिच्छामि न चेद्विरोधः ॥२
स्मित्वा ततः सोऽर्थपरेङ्गितज्ञः कश्चिद्भटो नात्मगुणप्रशंसी ।
प्रच्छाद्य सद्भतमदार्थमन्यद्वचो बभाषे क्षितिपाय युक्त्या ॥ ३
कश्चिद्भटः शूर उदारकीर्तिः श्रेष्ठ्यङ्गसूनुस्त्विवति लोकवादः ।
स एव मे बन्धुतमः पिता च पिता न चान्यो भुवि विद्धि राजन् ॥४
जानामि तेऽहं क्रियमाणमर्थं वचोविकारैर्हृदि वर्तमानम् ।
कुतस्त्वयं किं कुलमस्य वेति कन्याप्रदानं प्रति ते विमर्शः ॥ ५
सा तिष्ठतु स्वा सुसुतानवद्या न तां महीपाल वृणे त्वदीयाम् ।
वणिक्सुतश्चेति मनो निधाय प्रसीद मे वा परिणामरम्याम् ॥६
सभागतास्तद्वचनं निशम्य प्रसन्नतां वीक्ष्य विनीततां च ।
आकूतमीशस्य च संप्रबुध्य विज्ञापयां भूमिपतिं बभूवुः ॥ ७
त्वयेन्द्रसेनः समरे जितश्चेत्तुभ्यं प्रदास्ये सुतयार्धराज्यम् ।
इत्येवमाघोष्य सभासमक्षं भूयो विचारस्तव नानुरूपः ॥ ८
यत्पूर्वमाख्याय सदस्सु राज्ञां तत्प्रत्यनीकं न च युक्तिमेति ।
महाजनानां परिहास एष धर्मस्य चात्यन्तविरुद्धमेतत् ॥ ९
ब्रवीति चक्षुर्मनसो विकारं ब्रवीति सौख्यं वपुषश्च शोभा ।
कुलं हि नृणां विनयो ब्रवीति इत्येवमुक्तं सदसि प्रधानैः ॥ १०

१ [ नरेन्द्रः ]. २ [ सद्भूतमपार्थं ].

स्वैर्मन्त्रिभिः स्वस्य हितं ब्रुवद्भिस्तथा त्वनुज्ञातमिदं मयेति ।
कन्याप्रदाने कृतनिश्चयोऽभून्मुदा नरेन्द्रो मतिमान्विधिज्ञः॥ ११

ततो नरेन्द्रो विजयप्रधानैः समेत्य वृद्धैः पुरवासिभिश्च ।
प्रहृष्टचेताः कृतसत्यसन्धो विवाहकार्याय शशास सर्वान् ॥ १२

नित्यप्रवृद्धाः प्रचलत्पताका नित्योत्थितान्येव च तोरणानि ।
नित्योत्सवाढ्यां ललिताह्वपुर्यां तानेव संपादितमास पूर्वम् (?) ॥

त्रिकांश्चतुष्कानथ चत्वरांश्च वीथीप्रदेशान्सुमहान्पथांश्च ।
विशोध्य सच्चन्दनतोयगन्धैः पुष्पाणि तत्र प्रकिरन्विधिज्ञाः ॥१४

यावद्गृहद्वारमिलाधिपस्य यावत्पुनः सागरवृद्धिगेहम् ।
तावच्च संस्कारितमृद्धिमद्भिः प्रेक्षागृहैश्चित्रितमण्डपैश्च ॥ १५

क्वचिच्च मुक्तास्तरलाः पराढ्याः क्वचित्क्वचिद्विद्रुमदामकानि ।
क्वचिच्च हैमाम्बुरुहाणि रेजुः प्रलम्बितान्यप्रतिमानि तानि ॥१६

क्वचिद्विचित्रं ननृतुस्तरुण्यः क्वचिच्च गीतं मधुरं जगुश्च ।
आस्फोत्य भाण्डाः करतालशब्दान्विलम्बनां चक्रुरितोऽमुतश्च॥

श्रीमण्डपे लम्बितपुष्पदाम्नि विचित्रविन्यस्तवलिप्रदेशे ।
सिंहासने काञ्चनपादपीठे निवेश्य कश्चिद्भटमीशपुत्र्या ॥ १८

पद्मापिधानैर्वरहैमपुष्पैः सुशीतगन्धोत्कटवारिगर्भैः ।
श्रेणिप्रधानेश्वरमन्त्रिमुख्यास्तौ स्नापयां प्रीतिमुखा बभूवुः॥

ज्वलत्किरीटं प्रणिधाय मूर्ध्नि स्वयं नरेन्द्रस्तु बबन्ध पट्टम् ।
कृत्वाग्निधर्मोदकसाक्षिभूतं कश्चिद्भटाय प्रददौ सुनन्दाम् ॥ २०

---

१ म किंतु प्रदाने सुविचार्य कार्यं कन्याप्रदाने कृतनिश्चयोऽभूत्।. २ क दान्वेव सपादितमास°. ३ क रत्न, [ पुष्पाणि रत्नान्यकिरन् ]. ४ म प्रेष्या. ५ [ विडम्बनां ]. ६ क ज्वलत्तिरीटं.

मत्तद्विपानां तु सहस्रसंख्या द्विषट्सहस्राणि तुरङ्गमानाम् ।
ग्रामाः शतेन महताः सहस्रा हिरण्यकोटयश्च चतुर्दशैव ॥ २१
द्वात्रिंशदायोजितनाटकानि वृद्धाः किराता विविधाश्च दास्यः ।
सुशिल्पिनः कर्मकरा विनीता दत्तानि पित्रा विधिवद्दुहित्रे ॥
अन्यच्च लोकेऽतिशयप्रवृत्तसुसंस्कृतं द्रव्यमनेकभेदम् ।
क्रीडानुरूपं विधिना विभूत्यै प्रीत्या ददौ भूमिपतिः सुतायै ॥
सद्रत्नसंस्कारितचारुरूपां दिवाकरांशुप्रतिमां महाहीम्[1] ।
आरुह्य तौ तां शिबिकां महर्घ्यां प्राचक्षितां सागरवृद्धिगेहम् (?)
अष्टादशश्रेणिगणप्रधानैरष्टादशान्येव दिनानि तत्र ।
कश्चिद्भटस्यावनिपात्मजायाश्चक्रे विभूतिं महतीं महद्भिः ॥ २५
ताम्बूलवस्त्रोत्तमभूषणानि विलेपनं स्रग्वरभोजनानि ।
प्रस्पर्धयेवाहरहस्तदानीं संप्रेषयन्ति स्म नरेन्द्रपत्न्यः ॥ २६
स्वबाहुवीर्यार्जितभोगवत्या भूपश्रिया साधु विभासमानम् ।
कश्चिद्भटं राजसुतां च वीक्ष्य जगज्जनः स्वैरमभाषतेत्थम् ॥२७
किं किन्नरीणां मिथुनं त्विदं स्यादाहोस्विदायातमथेन्द्रलोकात् ।
विद्याधराणां विषयादपेतं यदृच्छयेहागतमित्यमंस्त ॥ २८
अज्ञातवंशः परदेशजातो धन्योऽयमस्याः पतितामुपेतः ।
पुण्यान्वितानां हि नृणां नृलोके पुण्यान्विता एव भवन्ति भार्याः ॥
ईदृक्सुरूपाणि महीगतानां कीदृक्[2] शिवा तत्र नभश्चराणाम् ।
ईदृग्यदि स्याल्ललितं नराणां कीदृक्सुराणामिति किं वचोऽस्ति ३०
किं वानयोः पूर्वकृतं तपः स्यात्काराधिताभ्यां खलु देवता वा ।
व्रतानि कान्याचरितान्युभाभ्यामित्यब्रवीद्विस्मयफुल्लनेत्रः ॥ ३१

१ [ महार्हां ]. २ [ कीदृक्श्रियस्तत्र ].

एवं जनानां स्थितवान्मनस्सु स्वपूर्वनिर्वर्तितपुण्यभागी ।
विस्मित्य[1] कश्चिद्भट आत्मबन्धून्रेमे नवैर्बन्धुजनैः समेतः ॥ ३२
नरेन्द्रपुत्रीमनवद्यरूपामवार्यकान्तिद्युतिसौकुमार्यैः ।
रहोविहारेष्वनुवर्तितैः स्वैः[2] स रञ्जयामास गुणैर्गुणज्ञः ॥ ३३
गन्धर्वगीतश्रुतिगन्धयुक्त्या काव्यप्रयोगेन कथाप्रपञ्चैः ।
नाट्यावलोकेन कथाविशेषैस्तस्या मनस्स्वैः स्वबबन्ध[3] वध्वाः[4] ॥ ३४
साप्यात्मनीयैर्ललितैरुदारैः कलागुणज्ञानकथाविशेषैः ।
दाक्षिण्यवेषैर्विनयोपचारैर्जहार चेतः सततं स्वभर्तुः ॥ ३५
उद्यानयानैश्च नदीविहारैर्वनप्रदेशाद्रिनिरीक्षणैश्च ।
महार्हहर्म्येषु रतिप्रमोदैः कश्चिद्भटस्तां रमयांबभूव ॥ ३६
अन्योन्यसंभाषणसक्तचित्तमन्योन्यसंदर्शनतत्पराक्षम् ।
अन्योन्यमङ्गेषु कृताङ्गरागमन्योन्यमेवं मिथुनं जहर्ष ॥ ३७
एवं तयोस्तु प्रथितोरुकीर्त्योः परस्परोद्वर्तितभोगरत्योः ।
विश्रम्भभावानुगतप्रणीत्योः कालो व्यतीतः पुरपुण्यमूर्त्योः ॥ ३८
ततः कदाचिन्नृपसेवनार्थं कश्चिद्भटाख्यं नृपतिं विशन्तम् ।
मनोरमा नाम नरेन्द्रकन्या यदृच्छयापश्यदतुल्यशौर्यम् ॥ ३९
समीक्ष्य रूपं च युवत्वमस्मिन्नास्थां चकार क्षितिपालकन्या ।
लब्धावकाशो[5] मदनस्तदानीं हृदि प्रविश्याथ मनोरमायाः ॥ ४०
अनङ्गमुक्तः स च तीक्ष्णबाणः संप्राप्य वेगादथ चित्तलक्ष्यम् ।
ददाह तस्यास्तनुमन्तरन्तो वह्निर्यथान्तःसुषिरं द्रुमस्य ॥ ४१
नालङ्कृता सा न सखीभिरासे संभाष्यमाणा न ददौ च वाचम् ।
नैवासं[6] किंचिन्न पपौ न सास्मो[7] कन्दर्पदर्पाभिहता वराङ्गी ॥ ४२

१ [ विस्मृत्य ]. २ म °वर्तितैस्तैः. ३ [ स बबन्ध ]. ४ म बन्ध्वाः. ५ म शब्दावकाशो. ६ [ नैवाश ]. ७ [ सास्वीत् ].

कदाचिदुद्यानवनैकदेशे स्थिता पुनः सास्मितनिश्चलाक्षी ।
काश्चिद्भटं चित्रकलाविदग्धा लिलेख पुंस्त्री[1] नृपतेः शिलायाम् ४३
अवेक्ष्य चित्रस्थमतीवविद्धं तद्दुर्लभत्वं च विचिन्तयन्त्याः ।
सदीर्घनिःश्वासमुखं रुदन्त्या हिमाहताम्भोजमिवास तस्याः ॥४४
सखी तिरोऽभ्येत्य ततस्तदानीं वैचिन्त्यमस्या ह्यवगम्य युक्त्या ।
सा पृष्ठतस्तां शनकैरुपेत्य नेत्रद्वयं तत्पिदधौ कराभ्याम् ॥ ४५
सख्याः कराग्रप्रतिमर्शनेन मृगीव तत्रास तदानभिज्ञा ।
तद्वाक्यतः सा विदितानयेति किंचित्प्रहस्यात्मनि सा ललज्जे॥४६
अन्यार्थसंव्रीडनवेपिताङ्गी हस्तद्वयेन प्रममर्ज चित्रम् ।
सखी च तद्वीक्ष्य जगाद वाक्यं चित्रं किमेतद्वद मे निशङ्का[2] ॥४७
भूयश्च तस्या वदनं निरीक्ष्य ससाध्वसं मूढमनोभवार्ता ।
एकाकिनी त्वं हि किमर्थमासे वने वदेत्येवमथाभ्यपृच्छत् ॥ ४८
सा चैवमुक्ता धरणीन्द्रपुत्री सख्या तदाचारगुणं ह्यवत्या[3] ।
नैवालि मे कार्यमवश्यभावि क्रीडाप्रसङ्गादहमागतास्मि ॥ ४९
इत्थं ब्रुवाणा कुशला सखी सा विज्ञाय तस्या हृदि वर्तमानम् ।
अन्यापदेशेन सदर्थमन्यं मनःप्रसादार्थमिमां जगाद ॥ ५०
मुखं परावर्तितकान्ति कान्ते ग्लानिं गता ते तनुरङ्गतन्वी ।
विगूहसे[4] किं हृदि यद्व्यलीकमेकाकिनी वोढुममुं समर्था ॥ ५१
मातुः पितुश्चैव विलासिनीनां विश्रम्भनीया ननु साध्वि सख्याः
नियन्त्रणां त्वं मयि संविधत्स्व शक्ता विनेतुं हृदयस्य तापम् ५२
जानामि विद्यां विविधप्रकारां मायामदृश्यां मदनप्रयोगम् ।
आवेशनं भूतवशीकृतिं च यदीच्छसि त्वं प्रवदेत्यवोचत् ॥ ५३

१ [ पुत्री ]. २ [ विशङ्का ]. ३ [ ह्यवेत्य ]. ४ क विगूहसि, [ निगूहसे ].

संश्रुत्य सा तद्वचनं यथार्थं लब्ध्वावकाशं नरदेवकन्या ।
मनोगतार्थप्रतिबोधनाय संमानपूर्वा गिरमित्थमूचे ॥ ५४
का मे प्रिया का च हितप्रवक्त्री मनःप्रसादस्य च का नियोक्त्री ।
का देवता कः सुजनोऽनुवर्ती ऋते भवत्या शरणं न मेऽस्ति॥५५
नरेन्द्रसेवार्थमिहागतं तं यदा नु कश्चिद्भटमभ्यपश्यम् ।
तस्मिंस्तदैवात्ममनः ससञ्ज किं गूहितव्यं हितमित्युवाच ॥ ५६
यथा यथा तं मनसा स्मरामि मृगेन्द्रविक्रान्तमनङ्गरूपम् ।
तथा तथा मां प्रदहत्यनङ्गः कुरुष्व तच्छान्तिमरं वयस्ये ॥ ५७
एवं प्रदिष्टा मनसो विकारं विज्ञाय तस्याः कमलायताक्ष्याः ।
सर्वैरुपायैस्तव कार्यमार्ये संसाधयामीति ततो जगाद ॥ ५८
अथामितं तं शनकैरुपेत्य कश्चिद्भटं सा तु विविक्तदेशे ।
मनोरमायाः सकलामवस्थां व्यजिज्ञपद्वागुपपत्तिदक्षा ॥ ५९
नयादपेतं बहुदोषमूलं निशम्य तस्या वचनं पृथुश्रीः ।
कश्चिद्भटो मेरुरिवाप्रकम्प्यो न युक्तमेतद्विनयादवोचत् ॥ ६०
एतद्वचस्ते न च युक्तरूपं विभ्राजते कर्मणि नैव भासः ।
स्वदारसंतोषमणुव्रताख्यं साध्वीश्वरो मह्यमुपादिदेश ॥ ६१
इत्युक्तवत्युत्तमचारुरूपे कश्चिद्भटे सापि पुनर्जगाद ।
व्रतोपदेशात्समनुग्रहीतुं मनोरमां नेच्छसि मे सखीं ताम् ॥ ६२
प्रत्यक्षभूतं फलमुद्विहाय परोक्षपातं मृगये ह्यपार्थम् ।
न पण्डितस्त्वं बत बालिशोऽसि संदिग्धवस्तुन्यथ मुख्यमास्ते ॥
व्रते दिवं यान्ति मनुष्यवर्या दिवश्च सारोऽप्सरसो वराङ्ग्यः ।
व्रताभिगम्या यदि देवकन्या इयं हि ताभ्यो वद केन हीना ॥ ६४

१ [ संमानपूर्वं ]. २ [ तच्छान्तिकरं ]. ३ क साध्वीति रोमाञ्चमुपादिदेश.
४ [ मुख्यता ते ].

सा चापि तन्वी त्वयि सक्तभावा प्रसीद नाथानुगृहाण भद्राम् ।
इति ब्रुवाणां परिशुद्धबुद्धिः सहेतुकं वाक्यमिदं जगाद ॥ ६५
ये शीलवन्तो मनुजा व्यतीता दृढव्रतास्ते जगतः प्रपूज्याः ।
परत्र देवासुरमानुषेषु परं सुखं शाश्वतमाप्नुवन्ति ॥ ६६
न मज्जयन्त्यम्बुनिधौ[1] सुशीलान्न दग्धुमीशो ज्वलदर्चिरग्निः ।
न देवता लङ्घयितुं समर्था विघ्ना विनश्यन्ति दशामयत्नात् ॥६७
इहाप्यशीलाः परिभूयमाना दुःखान्यनेकानि समश्नुवन्ति ।
परत्र तीव्राण्यसुखानि भद्रे ध्रुवं लभन्ते नरकेषु मूढाः ॥ ६८
ये शीलवेलामिह लङ्घयेयुर्दमं महान्तं नृपतेर्लभन्ते ।
यथा तथा दर्शय वाग्मुखानां नृणां परत्रापि यशश्च साध्यैः[2] ॥
सुशीलमाहात्म्यवशेन[3] पूर्वं विमुक्तशापोऽहमभूवमेषः ।
ततो मया लङ्घयितुं न शक्या व्रतस्थितिः सा मुनिसाक्षिभूता ॥
यद्यप्यनुज्ञां कुरुते नरेन्द्रो गृह्णामि कन्यां विधिपूर्वकेन ।
आप्तोऽन्यथा सर्वजनापवादं वोढुं न शक्तो न हितं परत्र ॥७१
इत्येवमुक्त्वा प्रतिभग्नवाक्या सखी विनिर्गम्य नरेन्द्रपुत्रीम् ।
मनोरमां मन्मथशापबद्धामाश्वासनार्थं मधुरं जगाद ॥ ७२
यत्प्रार्थितं राजसुते त्वया तु तत्सर्वमाचाक्षितमन्वियाय ।
सोऽप्यादरेणानुमतः क्रियार्थः प्रकाशयामात्ममनो बभूव ॥ ७३
तस्मात्सुखं साध्वि सखीभिरास्स्व स्नात्वा हि भुंक्ष्व त्वमलंकुरुष्व
द्वित्रिष्वहस्सु प्रतिपादयिष्ये शोकं विनुद्य स्थिरधीर्भव त्वम् ॥
मद्विप्रलम्भार्थमयं प्रयोगः श्रोत्रप्रियः केवलमर्थदूरः ।
ज्ञातुं मया मन्दधिया हि शक्यं धन्या न जाताश्च मृता युवत्यः ॥७५
एवं वदन्ती व्यपयातहर्षा सरोदनारोपितरक्तदृष्टिः ।
फलोदयं स्वस्य पुराकृतस्य पुनः पुनस्तं तरुणी जहार्ह[4] ॥ ७६

१ [ मज्जयत्यम्बुनिधिः ]. २ [साध्यम्]. ३ म सुशीलसंपन्नवयेन. ४ [ जगर्ह ].

पृथुश्रियं यौवनकर्कशाङ्गं पद्मेक्षणं मत्तगजेन्द्रलीलम् ।
कश्चिद्भटं वश्यमनं न लप्स्ये सलज्जवत्या न हि मेऽस्ति शान्तिः ॥

इति नरपतिपुत्री कामवह्निप्रतप्ता
ज्वलदनलशिखार्ता प्रातपत्रा लतेव ।
अहरहरभिमानक्षीयमाणाङ्गयष्टि-
र्नभसि वहुलपक्षे चन्द्रलेखेव सासीत् ॥ ७८

यदि मम गृहधर्मे जीवितं जीवयोर्नौ
भवति भवतु सम्यक्त्वेन[1] कश्चिद्भटेन ।
वदनकमलसङ्गं तेन सार्धं मम स्या-
द्वरचरणसुवोधं लब्धं[2] मे मुक्तिमार्गम् ॥ ७९

जिनवरमतमग्र्यं स्वर्गसोपानपङ्क्ति-
र्यदि मम न हि भाग्यात्संपनीपद्यते[3] चेत् ।
स्फुरदनलकलापज्वालमालासु देहं
मदनशर[4]सुलक्ष्यं तद्रहोष्ये (?) तमाशु ॥ ८०

स्थिरमतिरकृतार्था सम्यगीदृक्प्रतिज्ञा
व्रतगुणनियमान्तां[5] भावयन्ती क्रमेण ।
स्वसनदवथपक्ष्मास्वासभाषा[6] च साध्वी
प्रियँगति[7]रतितृष्णालापदा पाण्डुगण्डा ॥ ८१

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
मनोरमामतिविभ्रमो नाम
एकोनविंशति[8]: सर्गः ।

---

१ म सम्यक्तेन. २ क लब्ध ते, [ लभ्यते ]. ३ [ संप्रती° ४ क मदनशत. ५ [ °नियमांस्तान् ]. ६ [ श्वसनदवथुपक्ष्माश्वासभाषा ७ [ प्रियमति° ]. ८ [ एकोनविंशः ].

## [ विंशतितमः सर्गः ]

अथ च धार्मिकसात्त्विकमानवै-
र्बहुकलागुणशास्त्रविशारदैः ।
ललितपूर्वपुरप्रतिवासिभि-
श्चिरमरंस्त सुखेन वणिग्नृपः ॥ १

नृपतिकान्तसुतां कुलनन्दिनी-
ममरराजवधूप्रियदर्शनाम् ।
जनपदार्धहयद्विपनाटकैः
समुपलभ्य न चैव मदं[1] ययौ ॥ २

प्रवरहर्म्यतलेषु च शर्वरीं
नयत[2] शीलगुणानथ पर्वसु ।
द्रविणमर्थिषु साधुजनेषु च
[..............................] ॥ ३

अनुभवन्विषयांश्च मनोहरान्
सुकृतकर्मफलोदयपाकतो ।
ललितनामपुरे पुरुषोत्तमः
सुखमुवास नृपात्मजया तया ॥ ४

पुनरितः क्रमतः पितृपुत्रयोः
अमितसत्त्वपराक्रमधैर्ययोः ।
प्रवरधर्म[3]सपूर्ववराङ्गयोः
यदभवत्कथयामि तदीक्ष्यतां ॥ ५

---

१ म मुदं. २ [ नयति ]. ३ [ °धर्मजपुण्य° ].

अपहृते सुसुते वरवाजिना
नरपतेर्मनसोऽसुखशान्तये ।
मतिवरप्रमुखा नृपमन्त्रिणः
समभिमन्त्र्य सुपेणमतिष्ठिपन् ॥ ६

युवनृपत्वमवाप्य नृपात्मजः
प्रतिविबुद्धनवाम्बुरुहाननः ।
भृशतरं स कृतार्थतया बभौ
गतघने च निशीव निशाकरः ॥ ७

उदितबालदिवाकरतेजसो
विपयरागवशीकृतचेतसः ।
जगदनर्थगणात्परिरक्षतः
कतिपयानि दिनान्यगमन्मुदा ॥ ८

परनरेन्द्रबलेन विमर्दितं
स्वविषयं परिभूय[1] महाजनम् ।
अथ कदाचिदवेत्य युवाधिपः
स्वयमियाय स[2] योद्धुमना बलैः ॥ ९

रथपदातितुरङ्गमवारणैः
समुपगम्य भृशं युयुधे युधि ।
रिपुनृपोऽतिरुषा भृकुटीपुटः[3]
प्रतिजघान सुषेणबलं बलात् ॥ १०

युवनृपोऽभिहतो रिपुसेनया
क्षणविभिन्नविचूर्णितशासनः ।

---

१ [ परिभूत° ]. २ म रुषा स बलान्वितः. ३ [ भृकुटीधरः ].

अथ जितः समरे सतुरङ्गमो
द्रुततरं प्रययौ पुरमात्मनः ॥ ११
रिपुनरेन्द्रबलाहतपौरुषं
प्रतिनिवृत्तमवेक्ष्य पुनः सुतम् ।
नरपतिश्चिरमात्मनि संस्मरन्
वरतनोः स्मृतवान्बहुशो गुणान् ॥ १२
विनयशीलविचित्रसमन्वितं
बहुजनप्रियमप्रतिपौरुषम् ।
परमधार्मिकमाहववल्लभं
समुपलभ्य न चाहमवञ्चितः ॥ १३
स्वतनुदुर्बलतां जरयान्वितां
परिभवं रिपुभिः कृतमात्मनः ।
वरतनोश्च गुणाननुसंस्मर-
न्न च शशाक स धीरयितुं[1] धृतिम् ॥ १४
युवनृपस्य ततः प्रपलायनं
विबलतामुपलभ्य च भूपतेः ।
हयरथद्विपदेशधनेच्छया
रिपुनृपस्त्वरया पुनराययौ ॥ १५
दलितभागतया वयमास्थिता
विषयभाग इतो भवतामिति ।
जनपदार्धमथ प्रविरुध्य त-
त्प्रविससर्ज ततः स वचोहरम् ॥ १६

१ [ धारयितुं ].

परुषवाक्यसमन्वितमीश्वरः
समभिवीक्ष्य च पत्रगताक्षरम् ।
अतिकषायविषाञ्चितलोचनः
प्रतिजगर्ज मृगेन्द्र इव द्विपम् ॥ १७
यदि मदात्स[1] कुलोचितया तया
प्रथितया धरया न हि संस्थितः ।
ध्रुवमहं विनिहत्य मदोद्धतं
परनृपाय ददाम्यतिवर्तिनम्[2] ॥ १८
इति वचः सदसि प्रविलोक्य सः
सम[3]जगर्ज मृगेन्द्रपराक्रमः ।
सपरुषं प्रतिलेखविसर्जनं
प्रतिविहार्य[4] तदैव ययौ पुरात् ॥ १९
परिवृतो नृपतिश्चतुरङ्गया
रिपुमदप्रशमप्रदसेनया ।
चलदुरुध्वजचित्रपताकया
स निविवेश[5] गताध्वनियोजनम् ॥ २०
सुमतयोऽजितचित्रसुरादयो
विनयतः समुपेत्य नरेश्वरम् ।
वचनमित्थमिदं हितमर्थव-
ज्जगदुरेवमनिन्दितपौरुषम् ॥ २१
तव नरेश्वर सत्त्वपराक्रमौ
सुविदितौ जगता[6] न विलङ्घितौ ।

१ क °स्वकुलोचितया. २ म ददाम्यनुवर्तिनः, ३ [ समजगर्जदथेन्द्र° ]. ४ म प्रतिविवाय, [ प्रतिविधाय ]. ५ क निनिवेश. ६ क जगतां.

प्रतिविधानवियुक्ततया वयं
परिचितेन च वक्तुमुपाश्रिताः ॥ २२
सखिजनाः स्वसुताः कृतपौरुषाः
परबलस्य मदं प्रतिभाञ्जिनः ।
तव न सन्त्यरयोऽपि बलोत्कटाः
कथमिदं त्वपरीक्ष्य कृतं त्वया ॥ २३
विगतगाधमथोदकमप्लवः
समुपलङ्घयितुं विघटेत कः ।
रिपुबलार्णवमुत्क्रमितुं पुन-
र्नृप न शक्यमपक्षवतस्तव ॥ २४
ललितसाह्वपुराधिपतिर्भृशं
प्रियहितोऽहितदर्पविघाटनः ।
यदि वयं नरदेव वचोहरान्
प्रविसृजामहि[1] चेद्ध्रुवमेष्यति ॥ २५
अथ च युक्तिमदर्थसमान्वितं
हितमिताक्षरसारसमुच्चयम् ।
अनुनिशम्य हि मन्त्रिवचोऽवद-
न्नृपतिराशु तथा क्रियतामिति ॥ २६
क्षितिपशासनतीव्रतया [⏑–][2]
जनपदस्य विनाशभयेन च ।
स्वपतिभक्तितया च वचोहरा
ललितसाह्वपुरं प्रययुर्द्रुतम् ॥ २७

१ [ प्रविसृजेमहि ]. २ क ( जवैः ), [ तदा ].

समभिवीक्ष्य तथोचितवृत्तित:
क्षितिपतेरथ लेखमदर्शयत् ।
तमवगृह्य निधाय स मस्तके
प्रतिविमुच्य तदर्थमबुध्यत ॥ २८

समवतार्य मृगेन्द्रधृतासना-
त्समुपविश्य ततोऽन्यदुपह्वरे ।
अभिजिजल्पिपुराप्ततमैः सह
नृपतिराह्वयदाशु वणिग्नृपम् ॥ २९

वरतनोस्तुरगेण विनाशनं
रिपुबलाच्च सुषेणपराभवम् ।
परनृपस्य पुनः समराङ्गणं
ह्यकथयत्सकलं सकलार्थवित् ॥ ३०

प्रकटमास्स्व भवान्परिपालयन्
जनपदं स्वपुरं निरुपद्रवम् ।
मम धुरंधरता च भवत्वथो
जिगमिषामि सुहृद्व्यसनार्थ्यहम् ॥ ३१

इदमिह प्रहितं जनकेन मे
त्वमभिपश्य गुणार्णव पत्रकम् ।
करपुटेन नवाम्बुरुहत्विषा
समुपगृह्य पुनस्तदवाचयत् ॥ ३२

परिभवं द्विषतः पितृदुःस्थितिं[1]
वरतनोर्गमनं पितृराहूतः ।

---

१ म °दुस्थितं.

प्रतिनिशम्य च पन्नगतं त्वभू-
त्सलिलबिन्दुपरिप्लुतलोचनः ॥ ३३
नयनवारिपरिप्लुतमाननं
हृदयवेपथुना सह वीक्ष्य च ।
अथ नृपो ललिताख्यपुराधिपः
प्रतिविबुध्य सुधीरनुमानतः ॥ ३४
वरवराङ्ग पुरा विदितो मया
कथमिहोषितवानसि संवृतः ।
इति वदन्नुपसृत्य नरेश्वरो
हर्षफुल्लमुखः[1] परिषस्वजे ॥ ३५
वनगतोऽहमथोदधिवृद्धिना
करुणया परया तनयीकृतः ।
तदनु ते[2] तनयामुपधाय मे[3]
नरपतित्वपदे त्वमधिष्ठिपर्न्[4] ॥ ३६
अथ ततो भवतो ह्यधिको न मे
भुवि न कश्चन बन्धुतमः परः ।
इति वदन्तमवेक्ष्य पितुर्जन-
श्चरणयोरपतत्करुणं ब्रुवन् ॥ ३७
गतवति त्वयि नाथ समन्ततो
गिरिगुहासु वनेषु नदीषु च ।
नृपनियोगधराः परिबभ्रमु-
र्न विविदुश्च भवन्तमिहागतम् ॥ ३८

१ [ हृषित° ]. २ [ मे ]. ३ [ मां ]. ४ [ त्वमतिष्ठिपः ].

इति निवृत्तगिरि स्वजने ततो
नृपतिरित्थमुवाच मुदान्वितः ।
भवत एव मया परिवर्धितं
परिगृहाण पुनस्तनयाशतम् ॥ ३९

अनुनिशम्य स मातुलभारतीं
हृदयपङ्कजकुड्मलबोधिनीम् ।
नृपगणः कुरुतात्तव शासनं
समरुपं त्वनयेत्यवदत्पुनः ॥ ४०

स्वभगिनीसुतवाक्यरतो नृपो
गुरुतयाभिदधौ[1] स निगृह्य तम् ।
परिगृहाण गुणोदयभूषणां
प्रियसुतां मम वत्स मनोरमाम् ॥ ४१

नृपतिवाक्यमुदारमतिस्तत-
स्तदनुमत्य तथास्त्विति संजगौ ।
युवनृपाय मतङ्गजगामिने
समददात्तनयां मुदितस्तदा ॥ ४२

प्रणयवानपि यन्नृपतिः पुरा
स्वजनताश्रुतिवद्धमनोरथः ।
द्विगुणया स महोत्सवसंपदा
प्रतियुयोज सुधीर्भगिनीसुतम् ॥ ४३

इति समाप्य विवाहमनुत्तमं
जिगमिषुः स्वपुरात्परमार्दितः ।

---

१ क विदधौ.

स्वसुतया सकलैः[1] सह बन्धुभि-
नरपतिः कृतवान्सह भोजनम् ॥ ४४
मदनतापनखेदितचेतना
पतिमुपेत्य मनोगुणितं चिरम् ।
रविकराभिहता जलदागमे
वसुमतीव जहर्ष मनोरमा ॥ ४५
अथ यियासुरतुल्यपराक्रमो
वरतनुर्विषयं प्रति चात्मनः ।
उदधिवृद्धिमुपेत्य वचः स्फुटं
समधुराक्षरमित्थमभाषत ॥ ४६
असुहृदो वनगोचरिणो भवा-
न्मम पिता न पितापि पिताभवत् ।
किमिह खेदकरैर्बहुभाषितै-
रुभयलोकहितो न परो गुरुः ॥ ४७
विनय एव हि भूषणमुत्तमं
विनयमूलमिदं जगतः पदम् ।
तत इतो विनयं वणिजां पते
तव करोमि यशःपरिवृद्धये ॥ ४८
अविदितं भवता न च विद्यते
नरपतेरिदमस्य चिकीर्षितम् ।
रणनिमित्तमनेन हि गच्छता
जिगमिषामि सहानुमतेन ते ॥ ४९



१ म सबलैः.

इति वचः कथितं तनयेन त-
त्समवबुध्य पिता पुनरभ्यधात् ।
इह भवन्तमपास्य हि जीवितुं
मम मतिः सुमते न च वाञ्छति ॥ ५०

तव गुणेन च पुत्र गुणप्रिय
प्रथितकीर्तिरभूवमहं भुवि ।
नृपतिना समतां पुनराप्तवा-
ननुपमां जगतो बहुमानताम् ॥ ५१

इह विहाय हि मां प्रगते त्वयि
किमवलम्ब्य मया प्रतिपज्यते ।
व्रजसि मन्दरधीर यतो यत-
स्तनय मां च नयस्व ततस्ततः ॥ ५२

इति वचोविरते वणिगीश्वरे
वरतनुस्त्वथ चास्त्विति चोक्तवान् ।
अथ पुरान्नृपतेर्ललिताह्वया-
दुदयितुं समयश्च तदाभवत् ॥ ५३

विविधवन्दिमहाविटमागध-
स्फुटमुखोष्ठपुटप्रविजृम्भितः ।
जय जयेति जयावह ऊर्जित-
स्त्वविरतध्वनिरास समन्ततः ॥ ५४

अपि च पर्वणि वृद्धिमथर्च्छेतः[1]
पवनघट्टितचारुतरङ्गिणः ।

---

१ क वृद्धिमथार्चतः

ललितपूर्वपुरं नृपतेर्गमे[1]
जलनिधेः सकलध्वनिमादधौ ॥ ५५
हयरथद्विपपादविघट्टना-
त्स्फुटसमुच्छ्रितधूलिविधूसरः ।
न ददृशे खलु तत्क्षणमम्बरं
दिनकरश्च परिस्फुरदंशुमान् ॥ ५६
अपनयाशु जड[2] स्वतुरङ्गमं
मदविभिन्नकटाद्द्विरदान्तिकात् ।
तुरगपूर्वगतां च किशोरिका-
मपनयेति रवः परिशुश्रुवे ॥ ५७
मधुरवाक्यरसैरनुगच्छतः
पुरजना नृपतिं त्ववशिष्यताम् ।
युवनृपेण दिवाकरतेजसा
परबलोन्मथनार्थमतोत्युधैः (?) ॥ ५८
प्रबलकेतुपतद्विहगाकुला
प्रथितमुत्तमनामपुरार्णवम् ।
ललितपूर्वपुराद्रिगुहामुखा-
दभिससार च सैन्यनदी द्रुतम् ॥ ५९
तदनु सागरवृद्धिवणिक्पतिः
शकटसार्थसहस्रसमन्वितः ।
नृपसुताशिविकाग्रगतस्ततो
बहुभटानुवृतः प्रययौ शनैः ॥ ६०

१ [ नृपनिर्गमे ]. २ क जडः.

गिरिगुहामुखकाननसंकटे
नरपतेर्व्रजतः परिपार्श्वतः ।
युवनृपः पृतनां परिपालय-
न्नगमदिन्द्रसुतोपमविक्रमः ॥ ६१
स्वविपर्[1]याद्विपयान्तमुपेत्य च
प्रतिनिवेश्य नृपस्तु वरूथिनीम् ।
अभिनिवेदयितुं द्रु[2]तमागतं
जलधिवृद्धिमतो विससर्ज सः ॥ ६२
नृपवचोर्थविशेषपरावरं
मनसि वाक्यपटुर्गणयंस्ततः ।
अभिसमीक्ष्य नृपस्स्थितपौरुषं[3]
स्वनृपकार्यमशेषमदुद्रुवत् ॥ ६३
उपगतं ललिताह्वपुराधिपं
जलधिवृद्धिमुखादवबुध्य तम् ।
अपजयं च परस्य जयं स्वकं
मनसि निश्चितवान्स महीपतिः ॥ ६४
परमहर्षविबुद्धमुखाम्बुजो
हृषितरोमचिताञ्चितविग्रहः ।
कुशलतां नृपतेः परिपृच्छ्य तं
पुनरपृच्छदसौ बलसंपदाम् ॥ ६५
कति गजाः समदाः कति वाजिनः
कति हि योधगणाः कति नायकाः ।

---

१ म स विपयाद्. २ [ स्रुतमागतं ]. ३ [ नृपं स्थितपौरुषं ].

कति च मन्त्रविदः कति वल्लभाः
कथय वेदितुमिच्छति मे मतिः ॥ ६६
इति महीपतिना प्रतिचोदितः
स्वपतिचक्रबलस्थितिपौरुषम् ।
युधि वराङ्गविनिर्मितसाहसं
जलधिवृद्धिरजिज्ञपदाशु तत् ॥ ६७
हृदयहारिवचःश्रवणामृतं
सपदि सम्यगिदं समुदाहृतम् ।
सकलमेतदवैमि वराङ्ग इ-
त्यभिहितं भवता वद कीदृशम्[1] ॥ ६८
स्थितिगतिद्युतिरूपपराक्रमैः
प्रियसुतस्तव सोऽस्ति भवत्समः ।
व्यतिगतेषु दिनेष्विभकारणो
नृवर येन कृतः प्रथितो रणः ॥ ६९
इति सरित्पतिवृद्धिवचः पुन-
र्हृदयतुष्टिकरं तु निशम्य सः ।
कटककुण्डलहारवरादिभिः
सदसि पूजितवान्बहुभूषणैः ॥ ७०
गतसुतस्य कथाश्रुतिविस्मितो
विकसितोत्पललोलविलोचनः ।
नृपतया[2] नृपतिश्चतुरंगया
द्रुतमगात्तनयस्य दिदृक्षया ॥ ७१

१ [ कीदृशः ]. २ [ पृतनया ].

स्वतनयाभिनिरीक्षणकाङ्क्षया
हृदयति क्षितिपे मुदितात्मनि ।
पथि वराङ्गकथाभिरतो जनो
न बुबुधेऽध्वपरिश्रममादृतः ॥ ७२

प्रहतदुन्दुभिशङ्खमहारवै-
स्तमुपगम्य नृपं समुपाश्रितम् ।
[1]परिगतो युवराट् ललितेश्वर-
श्चरणयोः समुदौ प्रणिपेततुः ॥ ७३

वरवधूस्तनकुट्मललम्पटं
[2]प्रमुदितोत्तमचन्दनकुङ्कुमम् ।
भुजयुगं प्रविसार्य महीपति-
स्तत उभावधिकं परिषस्वजे ॥ ७४

प्रियसुतं च स[3]मैथुनमात्मन-
श्चिरतरेण समीक्ष्य महीपतिः ।
वसुमती लवणार्णवमेखला
प्रविजितेति मया स्फुटमभ्यधात् ॥ ७५

अतुलहर्षसमन्वितमानसौ
समनुरक्तजनैः सह भूभुजौ ।
वरतनोः कथया श्रवणीयया
ह्यवसतां तदहर्विगतोत्सुकौ ॥ ७६

प्रतिगमय्य निशामुदयागते
दिनकरे त्वरया कृतमङ्गलः ।

१ [ परिगतौ......ललितेश्वरौ चरणयोः ]. २ [ प्रमृदितोत्तम° ]. ३ क सुमैथुन°.

विश पुरं जननीमभिवादय
त्वमिति भूमिपतिः सुतमन्वशात्[1] ॥ ७७
इति नृपाभिहितो रणकर्कशः
पितरमित्थमवोचदिदं वचः ।
तमवतर्प्य रणातिथिमायुधै-
स्तदनु नाथ पुरं प्रविविक्ष्यते ॥ ७८
तमवगम्य चरैर्बकुलेश्वरो[2]
वरतनोर्भटतां बलसंपदम् ।
अपजगाम मनाग्भयविक्लवं
न्यगपगन्धहतो द्विरदो यथा ॥ ७९
बकुलराजबलाबलमीक्षितुं
नृपनियोगकराः पुरुषा गताः ।
अपगमस्य निवेदनसंभ्रमाः
प्रतिनिवृत्य महीपतये जगुः ॥ ८०
अपरपक्षपराभवसंश्रया-
त्प्रतिविबुद्धमुखाम्बुरुहा नृपाः ।
प्रजहृषुर्जयदुन्दुभयो ध्वनं (?)
जलधरा इव ते जलदागमे ॥ ८१
उदितबालरविप्रतिमद्युतिं
प्रथमयौवनभूपितविग्रहम् ।
भुवनवल्लभमेकपतिं भुवः
स्वजनमेव जनाः खलु मेनिरे ॥ ८२

१ [ सुतमभ्यधात् ]. २ क चरैश्च.

अवनिराज्यधुरं भजतामिमां
प्रतिगृहाण न चान्यदिहोच्यताम् ।
इति जगुर्गुरवः सदसि स्थितं
वरतनुं मुदिता[1] गुणभाजनम् ॥ ८३

स च गुरुप्रतिकूलभयादतः
किमपि चात्मगतं हृदि चिन्तयन् ।
न च शशाक निवारयितुं बला-
न्नृपतिता क्षितिपैः समधीयत ॥ ८४

रजतरुक्मघटैरभिषेचितः
प्रवरपट्टविभूषितमस्तकः[2] ।
प्रचलदुज्ज्वलचामरवीजितः
प्रविरराज शशीव गताम्बुदः ॥ ८५

समदवारणमूर्ध्नि प्रतिष्ठितो
नृपतिभिर्बहुभिः परिवारितः ।
प्रचलदुच्छ्रितकेतुलसद्ध्वजः
पुरवरं प्रविवेश महेन्द्रवत् ॥ ८६

प्रवरहर्म्यतलस्थितयोषितो
विलसितामलसन्नयनावलीः ।
सललितं स हरं[3] मुदितः शनै-
रुपससार गृहं स[4] नरोत्तमः ॥ ८७

उदितकाञ्चनतोरणगोपुरं
रुचिमदुच्छ्रितकूटतटोत्कटम् ।

१ म मुदितो. २ क °विभूषणभूषितः. ३ [ स हरन् ]. ४ [ गृहं च ].

नृपगृहं प्रविशन्विबभौ नृपो
जलदगर्भमथेन्दुरिवामलः ॥ ८८

प्रमुदिता च वराङ्गवराङ्गना
सकलचन्द्रमुखी कुलनान्दिनी ।
प्रहतमङ्गलतूर्यरवैः सह
प्रविशति स्म मनोरमया पुरम् ॥ ८९

अथ नरपतिरन्तर्गेहलक्ष्मीमिवैकां[1]
सविनयमुपसद्य प्राञ्जलिर्जातहर्षः ।
विकचकमलभासः सन्ननाम स्वसारः
प्रणतजनविभूत्या पादयोः पादयोः सः ॥ ९०

सदयमनुपमाद्यासन्नतान्ताश्च दृष्ट्वा
हृदयमपि वसन्तीर्योषितैः[2] संप्रपृच्छय ।
चरितपरिकथां तामात्मनः संनिवेद्य
क्षपितरिपुबलौघः स्वस्थचित्तो बभूव ॥ ९१

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
स्वजनसमागमो नाम
विंशतितमः सर्गः ।

---

१ म लक्ष्मीमिवैतां. २ म वसन्ती योषितः.

[ एकविंशः सर्गः ]

पुरा वराङ्गस्तु कुमन्त्रिमन्त्रित-
स्तदात्मदुर्वृत्तविपाकतश्च सः ।
वनान्तरे व्यालमृगादिसेविते
निरन्तरं दुःखमनेकमाप्तवान् ॥ १

स एव पूर्वार्जितपुण्यपाकतः
समुद्रवृध्यादिभिराप्तसंगतः ।
क्रमेण भूयः समवाप्य सच्छ्रियं
स्वबन्धुमित्रेष्टजनैः सहोषितः ॥ २

विपत्तयश्च व्यसनानि संपदः
सुखासुखोन्मिश्रफलप्रवृत्तयः ।
वियोगसंयोगसमृद्धिहानयो
भवन्ति सर्वत्र मनुष्यजातिषु ॥ ३

जिनेन्द्रसच्छासनमार्गयायिना
त्रिलोकसद्भावविदा महात्मना ।
उदारवृत्तेन शुचं व्यपास्यता
सुखं परत्रेह च लभ्यते ध्रुवम् ॥ ४

ततः कदाचित्सुरसेनभूपतिः
समाप्तकार्यो नृपमायतश्रियम् ।
सुखोपविष्टं समुपेत्य सादरं
व्यजिज्ञपद्यातुमथात्मनः पुरीम् ॥ ५

विचिन्त्य लोकानुगतिप्रवर्तनं
मृगेन्द्रमत्तद्विपविक्रमक्रमः ।

प्रदानमानादिभिरर्चनार्हणैः
समर्च्य राजा विससर्ज भूपतिम् ॥ ६
स देवसेनो भगिनीं सुताद्वयं
समर्प्य लोकस्य गतिस्थितिक्रियाः ।
विमोच्य जामातरमानतद्विषं
स्वदेशमृध्द्या परया ययौ नृपः ॥ ७
गते वराङ्गः श्वशुरे महाद्युतौ[1]
दिगन्तरख्यातविशिष्टपौरुषः ।
समेत्य कान्तापितृमातृबन्धुभि-
र्गतश्रमः[2] संमुमुदे पुरोत्तमे ॥ ८
अथैवमुर्वी तु वराङ्गनामनि
प्रशासति न्यायपथेन भूभुजि ।
सुषेणमाता च सुषेणधीवरौ
कृतापराधानिति[3] नैव शिस्यरे (?) ॥ ९
अहो क्षमा धैर्यमहो गभीरता
वराङ्गनाम्नोऽमितसत्त्वतेजसः ।
सति प्रभुत्वेऽपि कृतापराधिनः
कृपान्वितो नः सहते दुरात्मनः ॥ १०
विहाय मानं क्षममस्य दर्शनं
पुरापि नास्मद्वचसि स्थितौ[4] युवाम् ।
यदुक्तमेतद्ध्युपपद्यते यदि
तदेव साध्वभ्युपगम्यतामिह ॥ ११

१ म महोद्यतौ. २ क गतः श्रयः. ३ क कृतापराधा निशि. ४ म स्थितो.

इति प्रधार्यात्मनि ते हिताहितं
विनिश्चितार्थाः प्रणिपातनं प्रति ।
महाभयाकम्पितगात्रयष्टयो
विविक्तदेशे प्रणिपेतुरीश्वरम् ॥ १२

महानथास्माभिरकार्यपण्डितैः
कृतोऽपराधोऽनपराधिनस्तव ।
जिजीविताशाः शरणागता वयं
प्रसादमस्मासु कुरुष्व सांप्रतम् ॥ १३

तामुत्थितो[1] मातरमागतां विभु-
र्ननाम मैवं प्रकृथा[2] इति ब्रुवन् ।
करेण पस्पर्श सुपेणमञ्जसा
जगाद मा भैरिति तं च धीवरम्[3] ॥ १४

विगृह्य येऽत्र प्रतिलोमगाः स्थिता
नयामि तांस्तान्यमसादनं प्रति ।
वशास्थिता[4] ये परिपालयामि तान्
स्थिता प्रतिज्ञा महती ममेदृशी ॥ १५

कृतापराधेषु हि ये क्षमान्विताः
क्षमावतस्तान्पुरुषान्विदुर्बुधाः ।
गुणेषु विन्यस्तधियां कृतागसां
विचेष्टते दैवकृतेव सा क्षमा ॥ १६

वराङ्गवाक्चन्दनतोयबिन्दुभि-
स्त्रयः समाप्यायितमानसास्तदा ।

---

१ म तमुत्थितो. २ म प्रकथा. ३ क देवरं. ४ म यशास्थिता.

प्रहर्षफुल्लाननपङ्कजाः पुन-
र्व्यपेतशोकाः स्वगृहं ततो ययुः ॥ १७

गतेषु तेषु त्रिषु मित्रभावतः
प्रतापदाक्षिण्ययशोबलान्वितः ।
स्वयं जगामोदाधिवृद्धिना सह
पितुः सकाशं खलु कार्यवत्तया ॥ १८

यथोचितन्यायपथेन संश्रितः
प्रणम्य पादौ पितुरायतश्रियः ।
मनोभिसंधारितकार्यगौरवः
कृतावकाशं शनकैर्व्यजिज्ञपत् ॥ १९

प्रशास राजन्स्वकुलोचितां महीं
सुषेण एषोऽपि तदर्धभाक्पुनः ।
अहं च राज्ये विनियोजितस्त्वया
नृपाः पुरेऽस्मिन्कथमासते त्रयः ॥ २०

आदाय तन्मानुषवर्जितं वनं
निवेशयिष्यामि तवाभ्यनुज्ञया ।
यदि प्रसादो मयि विद्यते प्रभो
विमुञ्च मा भूदुपरोध एष ते ॥ २१

निशम्य पुत्रस्य वचो महीपति-
र्जगाद वाक्यं हृदयङ्गमाक्षरम् ।
त्वमेव पुत्रः शरणं गतिश्च मे
विहाय यातुं न हि मामतोऽर्हसि ॥ २२

य एवमुक्तो जनकेन सोऽभ्यधा-
दवैमि राजन्ननुरागमात्मनि ।
तथापि मे बुद्धिरियं विजृम्भते
ह्यपूर्वदेशग्रहणाय शाधि माम् ॥ २३

इतिं ब्रुवन्तं गमने दृढव्रतं
विबुध्य राजा प्रियमात्मनः सुतम् ।
मनोरथानां परिवृद्धिसंपद-
स्तवाचिरात्सन्त्विति मुक्तवान्सुतम् ॥ २४

ततो वराङ्गः पितरौ प्रणम्य तौ
विमुच्य सर्वान्स्वजनान्यथाक्रमम् ।
कृतानुयात्रान्मुदितैर्महाजनै-
र्ययौ महर्ध्या नगरादथोत्तमात् ॥ २५

पितुर्नियोगाद्वरयोधमन्त्रिणो
विपश्चितोऽथागमसागरान्तगाः ।
अनुप्रयाताः सुतराज्यदुर्धराः
प्रयातमत्तं[1] मदगर्वितां द्विषाम् ॥ २६

मुहूर्तनक्षत्रविलग्नसंपदं
विलोक्य सद्भिः सह चारुविग्रहः ।
मुदा प्रतीतः कमलायतेक्षणो
नगेन्द्रमापन्मणिमन्तमीश्वरः[2] ॥ २७

सरस्वती नाम नदी च विश्रुता
मणिप्रभावान्मणिमान्महागिरिः ।

१ क प्रयातमात्रां, [°मन्तं... °गर्वितद्विषाम्]. २ म नरेन्द्रमापन्मणिमन्त्रमीश्वरः.

तयोर्नदीपर्वतयोर्यदन्तरे
बभूव चानर्तपुरं पुरातनम् ॥ २८
पुरा यदूनां विहगेन्द्रवाहनो
जनार्दनः कालियनागमर्दनः ।
रणे जरासन्धमभीर्निहत्य य-
न्ननर्तवान्नर्तपुरं ततोऽभवत् ॥ २९
वराङ्गराजो मृगराजविक्रमो
जितारिपक्षो विजितेन्द्रियः स्वयम् ।
अनन्तनामप्रमुखैः स्वमन्त्रिभिः
सुमन्त्र्य सम्यग्बहुनीतिपारगैः ॥ ३०
पुरापि यत्कालपरंपरागमा-
न्नरेन्द्रसंक्षोभविशेषजर्जरम् ।
समीक्ष्य तद्वस्तुविदा प्रदर्शितं
निवेशयामास पुरं स पूर्ववत् ॥ ३१
पुरस्य बाह्यं गिरिकूटसंकटै-
स्तडागवापीपृथुदीर्घिका[1]ह्रदैः ।
विबुद्धपद्मैः कलहंसमालिभी
रराज सोद्यानवनैः समाकुलम् ॥ ३२
बभूव यस्मिन्परिखा समुद्रव-
द्गिरिप्रकाशः परिवेष्टितश्च यः ।
हिमाद्रिकूटोपममास गोपुरं
शरत्सिताभ्रप्रतिमा गृहावली ॥ ३३

१ म दीर्घिता°.

सभाप्रपादेवगृहाश्रमाश्रयं
विभक्तनानात्रिचतुष्कचत्वरम् ।
पुरं विशालं वृतिलोचनप्रियं
बभौ सदोद्घाटितविश्रुतापणम् ॥ ३४

पुरस्य मध्ये प्रविभक्तभूतले
समुन्नते श्रीमति वीरवस्तुनि ।
सुखावलोके बहुशिल्पिनिर्मितं
रराज तद्राजगृहं महर्द्धिमत् ॥ ३५

सभागृहं वासगृहं रहोगृहं
जलाग्निदोलागृहनन्दिवर्धनम् ।
महानसं सज्जनमण्डनाह्वयं
त्रिपञ्चषट्सप्तनवाष्टभूमिकम् ॥ ३६

गजाश्वशालायुधगेहपङ्क्तयः
सुवर्णधान्याम्बरभेषजालयाः ।
पृथक्पृथग्भाण्डविकल्पतस्तदा
सुसंस्कृता राजगृहे समन्ततः ॥ ३७

नरेन्द्रगेहोत्तरदिक्प्रतिष्ठितो
जिनेन्द्रगेहो मणिरत्नभासुरः ।
चलत्पताको ध्वजवृन्दसंकुलः
सहस्रकूटोत्कटसंकटोऽप्यभूत् ॥ ३८

नृपस्य पुण्योदयतो महाजनः
समन्ततः प्रश्रुतवान्समागमत् ।

१ [ श्रुति°, स्मृति° ]. २ म भैषजालयाः.

महाटवीग्रामसहस्रसंकटो
वनं त्वभूद्घोव्रजसंनिवेशितम्[1] ॥ ३९
तपोधनानां निलया वनान्तरे
शिलालयाः कृत्रिमरम्यभूतलाः ।
महापथोपान्तविरूढपादपाः
क्वचिज्जलोपाश्रितफुल्लवल्लिकाः ॥ ४०
क्वचित्सगोधूमयवातसीतिलाः
क्वचिच्च केदारविपक्वशालयः ।
क्वचित्पुनर्व्रीहिसमाकुला मही
क्वचिच्च मृद्वीक्षुवनं व्यराजत ॥ ४१
सरांसि शालीं जहसुः स्वपङ्कजैः
विबुद्धपत्रैरिव चारुविग्रहैः ।
ह्रियोत्तमाङ्गान्यवनम्य शालयः
स्थिता इव स्थूलतया चकासिरे ॥ ४२
क्वचिच्च नार्यः कमलायतेक्षणाः
पिधाय कुम्भान्कुमुदोत्पलाम्बुजैः ।
सुमङ्गलायैव कृतप्रसादनो-[2]
ज्ज्वलत्प्रवभ्रुर्विलसत्पयोधराः ॥ ४३
पथिश्रमाः[3] काञ्चनविभ्रमाञ्चिताः
प्रसज्य कण्ठे वनिताः स्वयं ययुः ।
परस्परं ग्रामसहस्रदर्शिनो
निपेतुरभ्यर्णतया हि कुक्कुटाः[4] ॥ ४४

१ क °संनिवेशितुम्. २ [कृतप्रसाधना जलं]. ३ [ पथिश्रयाः ] ४ म कुर्कुटाः

उपद्रवासङ्गभयदोषवर्जना-
त्प्रदानमानोत्सवमङ्गलोद्यमात् ।
प्रभूतभोगार्थविशेषसंपदः
कृतार्थतां तत्र जनाश्च मेनिरे ॥ ४५

सुखोपभोगात्सुजनः कुरूपमो
धनागमैरप्रतिमैः सदाकरः ।
प्रदानमानप्रशमोपचारतो
विदेहदेशेन समानतां ययौ ॥ ४६

व्रजास्तु ते ग्रामसमानतां गताः
पुरोपमा ग्रामवरास्तदाभवन् ।
पुरं जहासेव च वज्रिणः पुरं
रराज शक्रप्रतिमो महीपतिः ॥ ४७

पुराकरग्राममडंबपत्तने-
ष्ववाप वृद्धिं क्रमशो जनार्णवः ।
मुदं महीन्द्रो महतीमवाप्नुवान्
पुरात्मसंस्कारितपुण्यकर्मणा ॥ ४८

ततः स जित्वाम्बुधिमेखलां धरां
यशोवितानस्थगिताम्बरावधिः[1] ।
सुरेन्द्रवच्चारुमहर्द्धिशोभितो
रराज राजाप्रतिमोरुपौरुषः ॥ ४९

नृपश्च निर्वर्तितकार्यनिश्चयः
सहासितः प्राज्ञतमैश्च मन्त्रिभिः ।

१ म °स्थनिता°.

विचिन्तया सागरवृद्धिना कृतं
नृपाभिषेकाय तदाशिसंमुदा[1] ॥ ५०
निशम्य राज्ञो वचनं वणिक्पतिः
प्रसादमात्मन्यवगम्य धीमतः ।
वणिक्तया दुर्लभतां नृपाश्रियो
हृदि प्रकुर्वन्निदमभ्यधाद्वचः ॥ ५१
नृपाभिषेको नृप नः पुरातनै-
रनाप्तपूर्वः कुलसंततिस्त्वयम् ।
कुलोचितं मार्गमपोह्य मे पुन-
र्नवेन मार्गेण गतिर्न शोभते ॥ ५२
अथैवमुक्तश्च समुद्रवृद्धिना
तमब्रवीन्नान्यदिहोच्यतां त्वया ।
सुतो नृपस्तस्य पिता वणिक्किल
इति प्रहास्यं भुवि किं न बुध्यसे ॥ ५३
ततः प्रसह्यर्द्धिसमन्वितं नृपः
सचामरं विष्टरमुच्छ्रितातपम् ।
ददौ नृपत्वं स समुद्रवृद्धये
भवान्विदर्भाधिपतिर्भवत्विति ॥ ५४
समुद्रवृध्द्यग्रसुताय धीमते
ददौ धनाख्याय महीं सकोशलाम् ।
कलिङ्गराष्ट्रं करिवृन्दसंकटं
वसूक्तये संप्रददौ कनीयसे ॥ ५५

१ [ तदादिशन्मुदा ].

अनन्तनाम्ने स्थिरसत्त्ववुद्धये
दिदेश देशं प्रार्थितं हि पल्लवम् ।
सकाशिभूमिं विवुधाय मन्त्रिणे
सुचित्रसेनाय च वैदिशं तथा ॥ ५६

अमातिराष्ट्रं त्वजिताय संददौ
प्रतिप्रधानाय च मालवाह्वयम् ।
स्ववन्धुशिष्टेष्टजनोपसेवितां
यथानुरूपं प्रविभक्तवान्महीम् ॥ ५७

ततः सुषेणाय युवाधिपाय तां
महीमपश्यन्नथ संविभाजितुम् ।
विमृश्य सस्मार यदृच्छया पितुः
कृतापराधं च [1]कुलाधिपं तदा ॥ ५८

गुरुं मदीयं परिभूय दुर्दमो
विनाश्य देशं प्रविलुप्य गोधनम् ।
विगृह्य योद्धुं पुनरागतो वलैः
प्रवृद्धभोगोच्छ्रितमानदर्पितः ॥ ५९

तथैव शौर्यं त्वभिमानसंभवं
तदस्ति चेद्योद्धुमिहैतु सांप्रतम् ।
उत प्रभावो न च तस्य विद्यते
विमुच्य देशं वनमभ्युपेतु वा ॥ ६०

इति प्रगर्ज्यात्मसखासमक्षतो
व्यपेतसामं प्रतिलेख्य लेखकम् ।

---

१ म वकुलाधिपं.

वचोहरानाप्ततमान्मनस्विनः
 शशास सद्यश्च कुलाधिपान्तिकम् ॥ ६१
असामयुक्तं प्रसमीक्ष्य लेखकं
 उपप्रदानाद्रहितं च शासनम् ।
निशम्य वाक्यं च वचोहरोदितं
 सदश्चकम्पे सहसैव साकुलम् ॥ ६२
कृतापराधादकृतात्मवीर्यतो
 निराश्रयान्निःप्रतिकारकारणात् ।
मृगेन्द्रनिर्भर्त्सनतो मतङ्गजो
 यथाहवे विद्धि कुलाधिपस्तथा ॥ ६३
बलेन वित्तेन पराक्रमेण च
 महीपतिभ्योऽतिमहान्महीपतिः ।
कृतार्थकृत्यस्त्वनवार्यवीर्यवान्
 किमत्र योग्यं वदतार्थचिन्तकाः ॥ ६४
स्वनाथवाक्यं हि निशम्य मान्त्रिणो
 हिताहितोपायविचारदक्षिणः
मनोहरं तच्च हितं मिताक्षरं
 स्वकार्यसिध्यर्थमुदाहरन्वचः ॥ ६५
सुखं हि साम्नैव तु कार्यसाधनं
 ह्युपप्रदानेन च मध्यमं भवेत् ।
प्रभेददण्डौ खलु मृत्युनाशगौ[1]
 चतुष्टयी वृत्तिरिहोवतां[2] महीम् ॥ ६६

---

१ क °नाशनौ. २ क वृत्तिहिवाहतां.

अतो वरिष्ठा तनया मनोहरां
प्रदाय सम्यग्विधिना महीपतेः ।
कृतैककार्याः सुखमास्महे वयं
न चान्यथास्तीश्वर सन्धिकारणम् ॥ ६७

स्वमन्त्रिसंदर्शितनीतिचक्षुषा
विचिन्त्य दीर्घं प्रविचार्य चात्मनि ।
प्रदातुकामो वरविग्रहाय तां
निनाय पुत्रीमनवद्यरूपिणीम् ॥ ६८

निवेद्य चात्मागमनं महीपते-
रनुज्ञया तस्य विवेश मन्दिरम् ।
विलोक्य सिंहासनमध्यधिष्ठितं
ननाम मूर्ध्ना नमितात्मशत्रवे ॥ ६९

कुलोचितं राज्यमपोह्य मामकं
विभज्य तावत्स्वमनोऽनुवर्तिने ।
कृतापराधस्तु[1] मया सहस्व तं
नृनाथ इत्येवमयाचत प्रभुम् ॥ ७०

अनुप्रभाष्यैवमतीव नीतिवि-
न्नरेन्द्रचित्तं च कुलेश्वरोऽहरत् ।
स्वभावभद्रः कृपया समन्वितो
नृपः स तस्मै कृतवाननुग्रहम् ॥ ७१

प्रसादलाभात्परितुष्टमानसः
कृतार्थतां तामवगम्य चात्मनः ।

---

१ [ कृतोऽपराधस्तु ].

मनोहरां मूर्तिमतीमिव श्रियं
ददौ सुतां भूपतये मनोहराम् ॥ ७२
यया हि भूतिः[1] कनकावदातया
मनोहरश्रोणिकुचप्रदेशया ।
नरेन्द्रपुत्र्या नरदेवसत्तमो
न सा विभूतिर्गदितुं हि शक्यते ॥ ७३
तुरङ्गमानां तु सहस्रमात्रया
मतङ्गजानां शतसंख्यया तथा ।
हिरण्यकोट्या वरलम्बिकाशतै-
र्वराङ्गराजं च कुलोऽभ्यमूमुदत् ॥ ७४
ततः परेषामविलङ्घ्यशासनः
स्ववीर्यसंपादितकार्यसाधनः[2] ।
रराज रक्षन्सकलां वसुंधरां
पुरन्दरो द्यामिव सुव्रतालयाम् ॥ ७५
नवान्नवान्हर्षविशेषहेतवः[3]
प्रियाङ्गनाभृत्यसुमित्रबान्धवान् ।
सुरत्नहस्त्यश्वरथान्महीपतिः
समाप्तवान्निम्नतलं जलं यथा ॥ ७६
समस्त[4]सामन्तसमाहृतैर्दिनै-[5]
र्नरेन्द्रनीत्यायतबाहुकर्षितैः ।
भृशं पुपूरे नरदेवसंमतं[6]
सरित्प्रवेगैरिव वारिधेर्जलम् ॥ ७७

---

१ क यया हि सस्ना. २ क कार्यसाधिनः. ३ [ °हेतून् ]. ४ क प्रशस्त°. ५ [ °धनै° ]. ६ [ °संपदं ].

दिगन्तविख्यातवसुंधरेश्वराः
कुलर्द्धिदेशार्थसमन्वितास्तदा ।
प्रसादमन्विष्य वराङ्गराजतः
प्रचक्रुरानर्तपुरस्य सेवनम् ॥ ७८

इति गुणवति शासत्यप्रतिख्यातकीर्तौ
सुजनजनपदं तं सर्वसंपत्तिमन्तम् ।
व्रतनियमसुदानैर्देवपूजाविशेषै-
र्मुनिभिरपि च शान्तै रेमिरे तत्र मर्त्याः ॥ ७९

जनयति रतिकार्यां श्रीमदानर्तपुर्यां
वहुगुणजनवत्यां धर्मकर्मार्थवत्याम् ।
नरपतिरभिवृद्धिं कोशदेशार्थसारै-
रहरहमुपयातः शुक्लपक्षे यथेन्दुः ॥ ८०

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
आनर्तपुरनिवेशो नाम
एकविंशतितमः सर्गः ।

---

## [ द्वाविंशः सर्गः ]

वसुंधरेन्द्रस्य[1] तदा पृथिव्यामनेकहस्त्यश्वपदातिदेशैः ।
वराङ्गनाभिर्वहुरत्नदेशै[2]रवर्धतात्यर्थमनर्थघाती ॥ १
सवारणं सर्वजगत्प्रधानं धर्मार्थकामत्रयरत्नपुण्यम् ।
तदात्मनीनस्य जनस्य सम्यक् स संविभेजे हि समाहितात्मा[3] ॥२

---

१ [ वसुंधरेन्द्रश्च ]. २ [ °कोशैः ]. ३ क समाहितार्था.

सोत्साहधैर्यद्युतिपौरुषाणि संदर्शयां शत्रुगणे बभूव ।
सत्यार्जवक्षान्तिदयादमादीन् गुर्वङ्गनासाधुषु संचचार ॥ ३
नापत्सु मूढो व्यसनेष्वसक्तो न विस्मितस्त्वभ्युदये नतारिः ।
अकृत्यकृत्यप्रतिपक्षपक्षमित्रारिमित्रप्रकृतिक्रियाज्ञः ॥ ४
स्त्रीबालवृद्धाश्रमदुर्गतानामनाथदीनान्धरुजान्वितानाम् ।
बलाबलं सारमसारतां च विज्ञाय धीमानथ संबभार ॥ ५
धर्मैककार्यान्गुरुवन्ननाम प्रशान्तवैरान्सुतवद्ररक्ष ।
दर्पोच्छ्रितात्मानमदावलेपान् दूरं स्वदेशादतिनिश्चकास ॥ ६
पुरार्जितात्यन्ततपःप्रकर्षात्सदिन्द्रियप्रार्थितभोगभागी ।
जगज्जनाक्षिक्षमचारुरूपो मृष्टार्थशिष्टेष्टविशिष्टभाषी ॥ ७
खरो मृदूनां क्रमनायिनां च स्वकालनिर्वर्तितसद्गुणानाम् ।
श्रियं नरेन्द्रोऽनुभवन्रराज शरद्विनिर्धौत इवेन्दुराजः ॥ ८
शरद्यथार्कांशुविजृम्भितायां प्रसन्नदिक्तोयनभस्तलायाम् ।
विपक्वशालीनवलोकमानो महीपतिर्भूमितलेऽतिरेमे ॥ ९
हेमन्तकाले रतिकर्कशाभिः क्रीडानुषङ्गक्रमकोविदाभिः ।
प्रियाभिरापीनपयोधराभिश्चिक्रीड रम्येषु निशामुखेषु ॥ १०
शीतार्दितासेवितवालभानौ[2] तुषारसंसर्गविशीर्णपद्मे ।
करीन्द्रवृन्दैः शिशिरे नरेन्द्रो बभ्राम देशान्स विहारयोग्यान् ॥ ११
ततो वसन्ते वरुणातिक्रान्ते फुल्लद्रुमार्त्तभ्रमरोपगीते[3][4] ।
तमिन्दुवक्त्राः कुसुमावतंसाः कान्ता वनान्ते रमयांबभूवुः ॥ १२
मयूरमातङ्गमदावहायां विरूढबालाङ्कुरशाड्वलायाम्[5] ।
प्रियावृतः[6] प्रावृषि नीरदाभान्बभ्राम राजा धरणीधरांस्तान् १३

१ म खलो. २ म वालभागौ. ३ क °द्रुमार्तभ्रमतोप°. ४ म °नीते.
५ [°शाद्वलायाम्]. ६ म स्त्रियो वृतः.

वर्षासु भीमाशनिगर्जितासु विद्युल्लतानद्धवलाहकासु ।
खद्योतनात्माकुलितक्षपासु प्रासादमालासु दिनान्यनैपीत् ॥ १४
अहीनपञ्चेन्द्रियकल्पगावो यदृच्छयाभ्यागतशक्रकल्पः ।
तत्कालयोग्यान्विविधप्रकारानिष्टैः समेतोऽनुबभूव भोगान् ॥१५
कदाचिदुद्यानवनेषु रेमे रेमे पुनः काननपर्वतेषु ।
क्वचिन्नदीनां पुलिनेषु रेमे रेमे सरस्स्वम्बुजसंकुलेषु ॥ १६
कदाचिदाप्तैः सुतबन्धुमित्रैः शिष्टैश्च[1] तुष्टैर्बहुशास्त्रगोष्ठ्या ।
युद्धातिशौण्डैर्यमदण्डकल्पैः सुरैः सुरूपैः सुभगैश्च रेमे ॥ १७
गन्धर्वगीताभिरतिः कदाचित्कदाचिदर्हत्कथया प्रसक्तः ।
प्रासाददेशेषु वराङ्गनानां क्रीडासु रेमेऽतिमनोहरासु ॥ १८
यद्यन्नृलोके पुरुषेश्वराणां प्राप्तव्यमासीदनवाप्यमन्यैः ।
महीपतिः सोऽप्रतिमप्रकाशस्तत्तत्समग्रं समवाप सम्यक् ॥ १९
इत्थं व्यतीते च सुखेन काले महीपतिः प्राप्तमनोरथानाम् ।
रन्त्वा कदाचिद्वनकाननेषु कृतानुयात्रः पुरमाविवेश ॥ २०
तस्याग्रपत्नी पुरमाविशन्तं प्रजातिकान्तं सततोपशान्तम् ।
द्विषज्जनान्तं विविधर्द्धिमन्तं प्रासादजालान्तगता ददर्श ॥ २१
तस्यास्तदानीमवलोकयन्त्या मनस्यभूवन्सकला विशेषाः ।
पुरप्रमोदो जनतानुरागः सन्माननीयत्वमथात्मनश्च ॥ २२
पुरा तु मत्स्वामिनि निर्गतेऽस्मिन्नन्याङ्गनासह्यमवापि दुःखम् ।
तदागमाम्भःपरिषेकयोगान्मनः पुनः सा कुरुतामपेतम् (?) ॥२३
कृतं मदीयं कियदस्ति भद्रं कियच्चिरं तिष्ठति वा मयि श्रीः ।
इतः किमु स्याद्भवितव्यता वा मया पुनः किं करणीयमत्र ॥२४

१ म शिष्यैश्च.

एतानि चान्यानपि चिन्तयन्त्याः सामीप्यमभ्यैद्धरणीपतिश्च ।
ससंभ्रमा सा प्रविलोक्य देवं ननाम पादाम्बुरुहाय तस्य ॥ २५
अनुज्ञया तस्य नृपस्य देवी पार्श्वोपविष्टा हि तदा प्रहृष्टा ।
कृतांञ्जलिं[1] पङ्कजकुट्मलाभां विज्ञापयामात्मवती[2] बभूव ॥ २६
कथं सुखं केन कुतश्च किं वा कथं भवेत्कर्म सुखानुबन्धि ।
अखण्डितं तन्निरुपद्रवं च श्रोतुं मनो मां त्वरयत्यतीव ॥ २७
निशम्य वाणीं सकलां प्रियायाः स्वभावसद्धर्मरतिर्नरेन्द्रः ।
विमुक्तिधर्मं प्रविहाय तस्यै[3] प्रोवाच सम्यग्गृहिधर्ममेव ॥ २८
स्थूलामहिंसामपि सत्यवाक्यमचोरतादाररतिव्रतं च ।
भोगोपभोगार्थपरिप्रमाणमन्वर्थदिग्देशनिवृत्तितां च ॥ २९
सामायिकं प्रोषधपात्रदानं सल्लेखनां जीवितसंशये च ।
गृहस्थधर्मस्य हि सार एषः संक्षेपतस्तेऽभिनिगद्यते[4] स्म ॥ ३०
अनन्यदृष्टित्वमनन्यकीर्तिर्निःशङ्कता निर्विचिकित्सता च ।
जिनेन्द्रपादार्चनतत्परत्वं नामार्हतीं दृष्टिमभिष्टुवन्ति ॥ ३१
शीलानि दानानि तपांसि पूजाः सम्यक्त्वपूर्वाणि महाफलानि ।
सत्पुण्यनिर्वर्तनकारणानि चतुर्विधानीह वदन्ति तज्ज्ञाः ॥ ३२
सर्वेषु तेष्वप्रतिमेषु भद्रे तत्साधनेषु प्रवरा जिनार्चा ।
सास्मद्विधानामपि शक्यरूपा शेषं तु सर्वं गृहिणामशक्यम् ॥ ३३
ख्यातार्ककीर्तिर्वृषभस्य सूनुः प्रजापतिश्चक्रभृतां वरिष्ठः ।
धर्मार्थकामत्रयरत्नमूर्तिः स नः प्रमाणं भवतो नरेन्द्रः ॥ ३४
गृहाश्रमे संवसते[5] नराणां धर्मार्थिनामत्र[6] सुखप्रियाणाम् ।
अस्मद्विधानां मनुरादिराजः सोऽष्टापदेऽतिष्ठिपदर्हदर्चाः ॥ ३५

१ [ कृत्वाञ्जलिं ]. २ क °मात्मपती, [ °मात्मपतिं ]. ३ म तस्मै. ४ म निनिगद्यते. ५ [ संवसतां ]. ६ क धर्मार्थिनामर्थ°

शचीपतिर्दक्षिणलोकपालो महाप्रभावोऽष्टगुणर्द्धियुक्तः ।
जिनेन्द्रसेवां परया मुदासौ करोति सम्यक्त्वविशुद्धिरित्थम् ॥ ३६
नन्दीश्वरेऽर्हत्प्रतिमार्चनाय समुद्यमन्ते प्रतिवर्षमिन्द्राः ।
कथं न कुर्याम वयं जिनार्चां संसारपाशच्छिदुरप्रभावाम् ॥३७
एकापि शक्ता जिनदेवभक्तिर्या दुर्गतेर्वारयितुं हि जीवान् ।
आसीद्धितत्सौख्यपरं परार्थं पुण्यं नवं पूरयितुं समर्था ॥३८
ध्रुवो विनाशोऽर्जितपापराशेर्ध्रुवा हि दुःखस्य विपत्तिरिष्टा ।
सुखान्यवश्यं स्वयमाश्रयन्ते भक्तिर्दृढा यस्य जिनेश्वरेषु ॥३९
अनेकजात्यन्तरसंचितं यत्पापं समर्था प्रविहर्तुमाशु ।
तमः समस्तं हि दिगन्तरस्थं भानोः प्रभाचक्रमिवोदयस्थम् ॥४०
जन्मानुबन्धीनि सुदारुणानि संसारदीर्घीकरणव्रतानि ।
कर्माणि मर्त्या जिनपूजनेषु विरूढमूलान्यपि निर्धुनन्ति ॥ ४१
पूज्यानि तान्यप्रतिशासनानि रूपाणि लोकत्रयमङ्गलानि ।
संस्थाप्य नित्यं समुपासयन्तः प्रत्यक्षसर्वज्ञफलं लभन्ते ॥४२
जन्मस्वतीतेषु जिनेन्द्रपूजामुपास्य ये तीर्थकरा बभूवुः ।
आस्थाप्य तेषां पुनरर्चनानि भूयः स्वयं तीर्थकरा भवन्ति ॥४३
नोदैष्यदर्को यदि लोकभूत्यै लोकान्धकारे न्यपतिष्यदेवम् ।
जिनेन्द्रबिम्बं यदि नाभविष्यदज्ञानगर्तेषु जनो न्यमंक्ष्यत् ॥ ४४
परीषहारींश्चतुरः कषायान्विधूय जातिं च जरां च मृत्युम् ।
ये निर्वृतिस्थानमवापुरीशास्तदर्चनान्नाधिकमन्यदस्ति ॥ ४५
इहैव पूजाफलतो जिनानां स्वेष्टार्थसंसिद्धिफलं लभन्ते ।
जन्मन्यमुत्रापि च देवलोके प्राप्स्यन्ति दिव्यान्विषयोपभोगान् ४६

१ [ आसीद्धि ]. २ [ लोकोऽन्धकारे ].

अल्पश्रमेणाल्पपरिव्ययेन जिनालयं यः कुरुतेऽतिभक्त्या ।
महाधनोऽत्यर्थसुखी च लोके गम्यश्च पूज्यो नृसुरासुराणाम् ॥४७
अनार्यभावैरजितेन्द्रियैर्ये कुदृष्टिदृष्टान्तयथानुरक्तैः[1] ।
उन्मोहितास्तान्सुगतौ दधाति ये[2]ऽतिष्ठिपच्चैत्यगृहं जिनानाम् ४८
अनाप्तचर्यागमदुर्विदग्धमधःपतन्तं नरलोकमेनम् ।
उत्पातवातैरभिहन्यमानं पोतं प्रसन्नानिलवद्ध्रियेतु[3] ॥ ४९
योऽकारयद्वेश्म जिनेश्वराणां धर्मध्वजं पूततमं पृथिव्याम्[4] ।
उन्मार्गयातानबुधान्वराकान्सन्मार्गसंस्थांस्तु क्षणात्करोति ॥५०
येनोत्तमर्द्धि जिनदेवगेहं संस्थापितं भक्तिमता नरेण ।
तेनात्र सा निःश्रयणी धरण्यां स्वर्गाधिरोहाय कृता प्रजानाम् ॥५१
त्रिलोकनाथप्रतिमाग्र्यसेवां ये कुर्वते शुद्धमनोवचोऽङ्गैः ।
विभिद्य कर्मारिमहोग्रसेनां क्रमेण ते निर्वृतिमाप्नुवन्ति ॥ ५२
इत्येवमर्हत्प्रतिमालयस्य फलं विशालं नृपतिर्जगाद ।
निशम्य तत्सर्वमतिप्रहृष्टा प्रोवाच वाचं मधुरार्थसाराम् ॥ ५३
यशोऽर्थकामाश्च मयानुभूतास्त्वत्पादपद्मद्युतिसंश्रयेण ।
जिनेन्द्रबिम्बार्चनमर्चयिष्ये चैत्यक्रियायां[5] प्रणवत्सबुद्धिम् ॥ ५४
सदा जिनेन्द्रोदितधर्मभक्तो विज्ञाप्यमानः क्रियया नरेन्द्रः ।
अमात्यमाहूय शशास सद्यो जिनालयं त्वं लघु कारयेति ॥ ५५
संदेशमीशस्य मुदावधार्य बुधः प्रगल्भो विबुधः स नाम्ना ।
अल्पैरहोभिर्नगरस्य मध्ये प्राचीकरो[6]च्चैत्यगृहोत्तमं तत् ॥ ५६
सगोपुराट्टालकचित्रकूटं महाभ्रसंघट्टिततुङ्गकूटम् ।
चामीकरानद्धसहस्रकूटं घण्टारवैस्त्रस्तकपोतकूटम् ॥ ५७

---

१ [ °पथानुरक्तैः ]. २ [ योऽतिष्ठिप° ]. ३ क °वध्रियेव, [ °वध्रियेत ].
४ क पृथुव्यां. ५ [ °क्रियायां प्रणयत्स्वबुद्धिम् ]. ६ [ प्राचीकरच्चैत्य° ]

व्यालोलमालाकुलितान्तरालं मुक्तास्रगालिङ्गितचारुलीलम् ।
विचित्ररत्नस्फुरदंशुजालं रेजेऽतिमात्रं वरहर्म्यमालम् ॥ ५८
सुशिल्पिनिर्मापितरम्यशालं मृदङ्गगीतध्वनितुङ्गशालम् ।
वन्दारुदिव्यस्तुतिपूरिताशं बभूव तच्चैत्यगृहं विशालम् ॥ ५९
क्वचित्प्रवालोत्तमदामयष्टिः क्वचिच्च मुक्तान्तरलोलुयष्टिः[1] ।
ललम्बिरे ताः सह पुष्पयष्ट्या द्वारे पुनः कामलता विचित्राः ॥६०
द्वारोपविष्टा कमलालया श्रीरुपान्तयोः किन्नरभूतयक्षाः ।
तीर्थंकराणां हलिचक्रिणां च भित्त्यन्तरेष्वालिखितं पुराणम् ॥६१
हयद्विपस्यन्दनपुङ्गवानां मृगेन्द्रशार्दूलविहङ्गमानाम् ।
रूपाणि रूप्यैः[2] कनकैश्च ताम्रैः कवाटदेशे सुकृतानि रेजुः ॥ ६२
स्तम्भैर्ज्वलद्भिस्तपनीयकुम्भैर्विचित्रपत्रांशुपरीतशोभैः ।
तैः स्फाटिकैर्दम्पतिरूपयुक्तै रेजे जिनेन्द्रप्रतिमागृहं तत् ॥ ६३
प्रवालकर्केतनपुष्परागैः पद्मप्रभैः सस्यकलोहिताक्षैः ।
महीतलं यस्य मणिप्रवेकैस्तारासहस्रैरिव खं व्यराजत् ॥ ६४
वैडूर्यनालैस्तपनीयपद्मैर्महेन्द्रनीलैर्भ्रमरावलीकैः ।
प्रवालमुक्तामणिभिर्विचित्रैर्नित्योपहारैः[3] कृतमङ्गलं तत् ॥ ६५
जिनेन्द्रगेहो वरधर्मदेहः[4] सुधामयस्तुङ्गविचित्रशृङ्गः ।
दूरावगाढ्यो[5] गगनेऽभ्यराजदद्वितीयकैलास इवाद्वितीयः ॥ ६६
प्रेक्षासभा[6]वल्याभिषेकशालाः स्वाध्यायसंगीतकपट्टशालाः ।
सतोरणाट्टालकवैजयन्त्यश्चलत्पताका रुचिरा विरेजुः ॥ ६७
प्राकारमालाभिरथो परीतं चैत्यं बभासे जिनपुङ्गवानाम् ।
मेघावलीभिः परिवेष्ट्यमानः समुल्लसन्तीभिरिवाऽऽरराज ॥ ६८

---

१ क मुक्तान्तरलोरुयष्टिः, [ °लोल ]. २ क रूपैः. ३ म नित्यःपहाराः. ४ क °धर्मगेहः. ५ [ दूरावगाढो ]. ६ म प्रेष्या°.

प्रियङ्ग्वशोकद्रुमकर्णिकारैः पुन्नागनागाशनचम्पकानाम् ।
वाप्यो[1] विरेजुः सविहारयोग्या बहिःप्रदेशे भुवनोत्तमस्य[2] ॥ ६९

आम्रान्तका दाडिममातुलुङ्गैर्बिल्वाश्च चूताः क्रमुकाभयाश्च ।
तालीद्रुमास्तालतमालवृक्षा बभूवुरुद्यानवनान्तरेषु ॥ ७०

सुवर्णवासन्तिककुब्जकानां बन्धूकगन्धोत्कटमल्लिकानाम् ।
समालतीजात्यतिमुक्तकानां वीर्याभि[3]रम्याणि वनानि रेजुः ॥ ७१

खर्जूरमृद्वीक[4]मरीचवल्ल्यो लवङ्गकङ्कोलकनालिकेराः ।
ताम्बूलवल्ल्यः कदलीवनानि नित्यप्रवृत्तानि मनोहराणि ॥ ७२

अन्तर्बहिश्चापि समाप्तकर्मा प्रमाणसंवर्धितदिव्यमूर्तिः ।
जिनेन्द्रगेहो रमणीयरूपः पुरस्य भूतां गणितां[5] जगाम (?) ॥ ७३

यः सर्वसंपत्तिगुणोपपन्नः पुण्यावहः पापहरः प्रजानाम् ।
दिशः स्वभासा प्रतिभासयन्स लीलामुवाहेव महाचलस्य ॥ ७४

नाम्नेन्द्रकूटो नयनाभिरामो रत्नद्युतिर्हेपितबालभानुः ।
सर्वत्रसौख्यः सकलेन्दुसौम्यः सदैव स श्रीनिलयो बभूव ॥ ७५

उद्भिद्य भूमिं स्वयमुच्छ्रितः स्यादहो विमानं नभसश्च्युतं तत् ।
उत्पश्यतां कामगमागतं तदित्यासतार्का[6] भुवि मानवानाम् (?) ७६

नृपाज्ञयार्हत्प्रतिमालयस्य सुशिल्पि[7]निर्वर्तितकौशलस्य ।
विभूतिरित्थं विबुधोपमेन निर्मापिता सा विबुधेन तेन ॥ ७७

इत्येवं क्षितिपतिशासनेन धीमान्
दिव्याख्यः प्रियहितमन्त्रिवर्गमुख्यः ।
निष्ठाप्य क्रमविदनुत्तमं नु चैत्यं
भूपायाकथयदथार्थजातमार्यः ॥ ७८

---

१ [ वाप्यो ]. २ [ भवनोत्तमस्य ]. ३ [ वीध्याभि° ]. ४ म मृद्वीक. ५ [ भूतेर्गणितं ]. ६ क °सुताका. ७ क पुंशिल्पि°.

तत्प्रोक्तां हितमहितां निशम्य वाणीं
संपूज्य प्रियवचनार्थदानमानैः ।
भूयस्तं मुदितमनाः शशास राजा
सद्यस्त्वं जिनमहवृत्तये यतस्व ॥ ७९

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
सिद्धायतनप्रतिष्ठापनो नाम
द्वाविंशतितमः सर्गः ।

---

## [ त्रयोविंशः सर्गः ]

अथ प्रशस्ते तिथिलग्नयोगे मुहूर्तनक्षत्रगुणोपपत्तौ ।
क्षपाकरे च प्रतिपूर्यमाणे[1] ग्रहेषु सर्वेषु समस्थितेषु ॥ १
संक्षेपयन्ती स्वरुचा वितानैर्दिवाकरांशून्प्रतिमा जिनस्य ।
संस्थापिता चैत्यगृहे विशाले नृपाज्ञया स्थापनकर्मदक्षैः ॥ २
तदाप्रभृत्येव मुदा प्रतीतो धर्मप्रियो भूपतिशासनेन ।
क्रियाविधिज्ञः पृथुधीरमात्यः प्रवर्तयां तन्महिमानमास ॥ ३
सर्वत्र भेरीं परिघोष्य पुर्यां किमिच्छकं त्वर्थिजनाय दत्वा ।
धर्मक्रियोद्योगनिविष्टबुद्धी राजा जिनेन्द्रालयमभ्यगच्छत् ॥ ४
मन्त्रिप्रधानाः पृथुधीविशेषा[2] विद्यासमृद्धाः प्रथिताः सदस्याः[3] ।
हयद्विपैश्चापि पदातिभिश्च महाविभूत्या तमनुप्रजग्मुः ॥ ५
देवी नृदेवप्रियकारिणीभिर्यथोपचारैरनुवर्तिनीभिः ।
जिनेन्द्रपूजाभिदिदृक्षया सा नरेन्द्रपत्नीभिरमा जगाम ॥ ६

---

१ क प्रतिसूर्यमाणे. २ म पृथुवी°. ३ क समस्याः.

अनेकयुद्धप्रतिलब्धकीर्तिः सर्वज्ञवक्रोद्गतपुण्यमूर्तिः ।
जगत्प्रजानन्दकरः प्रदोषे नान्दीमुखं प्रतिमुखश्चकार ॥ ७
दीपावलीभिर्ज्वलितप्रभाभिरपूर्ववर्गैश्च चरुप्रकारैः ।
गन्धैश्च पुष्पैर्बलिभिः सुधूपैर्निवेद्यां रात्रिबलिं बभूव ॥ ८
जिनेन्द्रचक्रायुधकेशवानां महर्षिविद्याधरचारणानाम् ।
हलेशवागीशपुरन्दराणां बद्धानि नानाचरितानि यानि ॥ ९
गन्धर्वगीतश्रुतितालवंशमृदङ्गवीणापणवादिमिश्रैः ।
लास्यप्रयोगेष्वथ ताण्डवेषु स्वायोज्य चित्रं ननृतुस्तरुण्यः ॥ १०
कुर्वद्भिरन्यैश्च कथोपदेशान्स्तोत्रैश्च देवानपरैः स्तुवद्भिः ।
प्रदीपभासा वरधर्मपुस्तान्संवाचयद्भिश्च सुकण्ठरागैः ॥ ११
कुदृष्टिपक्षं क्षपयद्भिरन्यैरुद्भासयद्भिः समयंस्त्वमन्यैः ।
तपस्विवर्यैर्वरधर्मकार्यैर्नीता त्रियामा निरपेतनिद्रैः ॥ १२
प्रदीपचन्द्रग्रहतारकाणां प्रभासु पाण्डुत्वमुपागतासु ।
भेर्यः सशङ्खाश्च समर्दलाश्च प्रणेदुरम्भोनिधिमन्द्रघोषाः ॥ १३
एवं प्रकारेण कथान्तरेण तस्यां रजन्यामपविद्रुतायाम् ।
अथोदयो भानुहिरण्यकुम्भान्भक्त्या जिने बिभ्रदिवाभ्यराजत् ॥
चूर्णैश्च पुष्पैरपि तण्डुलैश्च दशार्धवर्णैर्बलिकर्मयोग्यैः ।
नानाकृतींस्तत्र बलीन्विधिज्ञा भूमिप्रदेशे रचयांबभूवुः ॥ १५
उपर्युपर्युच्छ्रितचित्रकूटं मणिप्रभालङ्कृतसत्कवाटम् ।
प्रयत्नसंवर्धितवृक्षवाटं रराज भूयो नरराजवेश्म ॥ १६
तस्मिन्पृथुश्रीमति राजगेहे पुरोहितेनातिहितेन राज्ञः ।
द्रव्यं जिनानां स्नपनक्रियार्थं संभारयां बुद्धिमता प्रचक्रे ॥ १७

१ [प्रीतमुखः]. २ म °धर्महस्तान्. ३ [समयं स्वमन्यैः]. ४ म अथोदये.

आपः पयः पुष्पफलानि गन्धा यवाज्यसिद्धार्थकतण्डुलाश्च ।
लाजाक्षताः कृष्णतिलाः सदर्भा अर्घ्याणि दध्ना रचितानि तत्र १८
आपो हि शान्त्यर्थमुदाहरन्ति आप्यायनार्थं हि पयो वदन्ति ।
कार्यस्य सिद्धिं प्रवदन्ति दध्ना दुग्धात्पवित्रं परमित्युशन्ति ॥ १९
दीर्घायुराप्नोति च तण्डुलेन सिद्धार्थका विघ्नविनाशकार्थाः ।
तिलैर्विवृद्धिं प्रवदन्ति नृणामारोग्यतां याति तथाक्षतैस्तु ॥ २०
यवैः शुभं वर्णवपुर्घृतेन फलैस्तु लोकद्वयभोगसिद्धिः ।
गन्धास्तु सौभाग्यकरा नराणां लाजैश्च पुष्पैरपि सौमनस्यम् ॥ २१
सौवर्णरौप्यामलताम्रकांस्यादिन्द्रादिदिक्षु प्रणिधानयोग्यान् ।
विभागवित्तं तु यथानुसंख्यं पात्रप्रकारान्रचयांबभूवुः ॥ २२
सनादकाकाञ्चनका घटाश्च भृङ्गारिकापालिकवर्तकानि ।
शङ्खादिनानाकृतिभाजनानि प्रापूय यन्त्राणि हरिन्मयानि ॥ २३
नदीजलं प्रश्रयणोदकं च कौप्यं च वाप्युद्भवसारसं च ।
तडागतीर्थोद्भवपुण्यतोयं पुरोधसा संजगृहे यथावत् ॥ २४
पयोदधिक्षीरघृतादिपूर्णा फलाग्रपुष्पस्तवकापिधाना ।
घटावली दामनिबद्धकण्ठा सुवर्णकारैर्लिखिता रराज ॥ २५
अष्टोत्तराः शीतजलैः प्रपूर्णाः सहस्रमात्राः कलशा विशालाः ।
पद्मोत्पलोत्फुल्लपिधानवक्त्रा जिनेन्द्रबिम्बस्नपनैककार्याः ॥ २६
चतुःप्रकारा ह्युपमानिकाख्या हारिद्रगन्धोदनसत्कृताश्च ।
निर्वर्तितास्ताः परिधाप्य सूत्रं दूर्वाङ्कुराग्रै रचिताः शिरस्सु ॥ २७
सुदर्शनीयाः फलजातयश्च क्षीरद्रुमाणां च कषायवर्गाः ।
मनःशिलाहिङ्गुलकुङ्कुमाद्या वर्णप्रकाराश्च सुसंगृहीताः ॥ २८

१ म ताम्रकस्त्यादिन्द्रादि, [ ताम्रकांस्यानिन्द्रादि° ]. २ क प्राणिदान°. ३ सनादता°. ४ म °पुटाश्च.

गोशीर्षसंज्ञं वरचन्दनं च गन्धान्सुगन्धीन्विविधप्रकारान् ।
पृथग्विधान् धूपवरानथान्यान्पूजाविधिज्ञो विदधौ पुरोधाः ॥
विचित्रवर्णान्वरवासचूर्णान्दशार्धवर्णांश्च चरूननेकान्[1] ।
माल्यं च संघातिमकादिरम्यं विपञ्चयोः[2] पञ्चविधा वभूवुः ॥३०
ततो नृपेण प्रतिचोद्यमाना वृद्धाः कराग्रार्पितवेतदण्डाः ।
इतोऽमुतस्ते त्वरया विचेरुस्त्वरध्वमित्येवमुदाहरन्तः ॥ ३१
स्नानानुलिप्तास्तनुशुक्लवस्त्राः कण्ठावसक्तामललोलमालाः ।
ते ब्रह्मचर्यव्रतपूतगात्रा वभ्रुर्वलींस्तान्वलिनो युवानः ॥ ३२
तेषां वलीनां ज्वलनान्पुरस्थान्[3] कृतोपवासाः शुचिशुक्लवस्त्राः ।
दृढव्रताः श्रावकपुण्डरीका मौलिं यथा मौलवलिं दधार ॥ ३३
प्रदीपमालामणिमण्डितानां मालाकलापैः परिमण्डितानाम् ।
विभासतामष्टशतैर्वलीनां पेतुः पुरस्त्रीनयनोत्पलानि ॥३४
व्याधूयमानानि विलासिनीभिर्वृन्दानि तान्युत्तमचामराणाम् ।
उत्पश्यतां तत्र समागतानां समुत्पतद्धंसनिभान्यभूवन् ॥ ३५
प्रोतैश्च सूत्रैर्मणिभिर्महार्घैः प्रान्ते निवद्धा विलसद्वितानाः ।
समुच्छ्रिताः काञ्चनदण्डतुङ्गा गङ्गातरङ्गा इव ते विरेजुः ॥३६
हंसांसकुन्दच्छदपाण्डुराणि वैडूर्यदण्डानि मनोहराणि ।
सकिङ्किणीकानि सदा महा[4]नि छत्राणि रेजुर्युवभिर्धृतानि ॥ ३७
भृङ्गा[5]रिकादर्शनपालका[6]द्यान्समुल्लसच्चित्रपटान्सपुष्पान्[7] ।
हस्तेषु धृत्वा विविधप्रकारांस्तेषां पुरस्ताल्ललना निरीयुः ॥ ३८
चक्रासिनाराचवराङ्कुशानां युग्मानि च स्वस्तिकवन्धनानि ।
श्रीमङ्गलार्थानि विभूतिमन्ति कान्ताकराग्रावधृतानि रेजुः ॥ ३९

---

१ म चरीननेकान्. २ [विपञ्चिकाः]. ३ [ज्वलतां पुरस्तात्]. ४ [महान्ति]. ५ [भृङ्गारिका]. ६ क °पालिकाद्यान्. ७ म °सपट्टान्.

तासामथाग्रे तडिदग्रभासां रूपश्रिया ह्यप्सरसा समानाः ।
सुगन्धिरक्तोत्पलवर्णपूरांस्तान्वर्णपूरानवलाः प्रणिन्युः ॥ ४०
पुण्याम्बुपूर्णान्विहितानयोजैरष्टाधिकांस्तत्र सहस्रमात्रान् ।
प्रस्पर्धयेवातिविलासवन्त्यो जह्रुस्तरुण्यो वररुक्मकुम्भान् ॥ ४१
हसन्ति ये स्वाकृतिमत्तया च विलासिनीनां स्तनकुड्मलानि ।
समृन्मयांस्तान्कलशाननेकान् जग्राह तोयैर्वनितासहस्रम् ॥ ४२
कन्याः स्मरास्त्रागतलक्ष्यभूताः प्रोद्भिद्यमानाः स्तनकुड्मलिन्यः ।
शरावसंवर्धितवल्लरीभिः पिधाय माङ्गल्यघटान्प्रणिन्युः ॥ ४३
मृगेन्द्रपद्मोक्षरथाङ्गवस्त्राः सुपर्णनागेन्द्रमहेन्द्रकेतून् ।
ऊर्द्ध्वां चलत्कुण्डलहारयष्टीन् भ्राजिष्णुदेहाः पुरुषाः प्रजग्मुः ॥४४
स स्नापर्कः स्नातविलिप्तगात्रो यक्षः सदक्षः स्नपने प्रवीणः ।
भृङ्गारकं हेममयं विचित्रं वहन्बभौ सूर्यमिवोदयाद्रिः ॥ ४५
पुष्पाणि सत्केसरधूसराणि गन्धावबद्धभ्रमरावलीभिः ।
सिक्तानि सच्चन्दनतोयगन्धैर्ययुः किरन्तः पुरतस्तथान्ये ॥ ४६
नटाश्च भण्डाः खलु मागधाश्च विदूषकाश्चापि विडम्बकाश्च ।
विचित्रवेषाः परिहासयन्तः पूजांजनं तं परितः प्रशंसुः ॥ ४७
मृदङ्गभेरीरवमर्दलास्यं मन्द्रो ध्वनिस्तत्र नृणां श्रवस्सु ।
विवर्धमानस्य हि सर्वसन्ध्यो महार्णवस्येव रवो बभूव ॥ ४८
सिता बलाकाश्रयमादधानाः काश्चिच्च सन्ध्यारुणिताम्बराभाः ।
नीलाश्च पीता हरिताश्च काश्चिद्दशार्धवर्णा विबभुः पताकाः ॥४९
परार्ध्यनानामणिमिश्रितानि समुल्लसत्काञ्चनदामकानि ।
विलम्बिमुक्तातरलाञ्चितानि वीथीषु रेजुर्वरतोरणानि ॥ ५०

१ क °विहितान्ययोजैः. २ [ °वस्त्राः ]. ३ म ऊर्ध्वां°. ४ म सस्नापकाः.
५ [ पूजार्चनं ]. ६ [ मर्दलस्य ].

तीर्थाम्बुपूर्णाः स्वविभाकरालाः कण्ठावसक्तोज्ज्वलचारुमालाः ।
पद्मापिधानास्तपनीयकुम्भा रेजुः प्रतिद्वारमुदर्ग्धरूपाः ॥ ५१
स्वभावनिर्वर्तितभूतियुक्तं जिनेन्द्रपूजाद्विगुणीकृतार्थम् ।
ततस्तदानर्तपुरं क्षणेन वस्वोकसारश्रियमुद्बभार ॥ ५२
चलत्पताका निपतद्बलाका जनोदर्का चामलहंसमाला ।
वितानकोर्मिर्बलिफेनराशिः पूजामहापुण्यनदी ससार ॥ ५३
नरेन्द्रगेहाज्जिनदेवगेहं तदोत्तमर्द्धिश्च शनैः प्रयान्ती ।
पूजोद्गतानां विरराज पङ्क्तिः तारागणानां नभसीव पङ्क्तिः ॥ ५४
द्विषत्स्वसूयां प्रमदास्वनङ्गं धनानि दीनेषु मुदं निजेषु ।
ददन्कटान्तभ्रमरप्रतानं राजाधिरूढः करिणं जगाम ॥ ५५
पौराङ्गनाभिः कृतभूषणाभिर्वृद्धैर्नरैः पौष्यजनैः परीताः ।
नरेन्द्रपत्नीशिविकाः प्रयाता गन्तुं प्रवृत्ता इव सौधमालाः ॥ ५६
एवं प्रभूत्या नरदेवपत्न्यो नृपेण संप्राप्य जिनेन्द्रगेहम् ।
प्रदक्षिणीकृत्य बलिं प्रविश्य परीत्य तस्थुर्ह्यभिषेकशालाम् ॥ ५७
सुगन्धिगन्धोदकधौतपाणिस्तुरुष्कसंधूपितधूपपाणिः ।
पुष्पाक्षतक्षेपणदक्षपाणिः स स्नापको दर्भपवित्रपाणिः ॥ ५८
मृदङ्गगम्भीरनिनादनादं लसत्पताकोरुतरङ्गरङ्गम् ।
व्यालोलसच्चामरफेनमालं पूजासरस्तच्छनकैर्जगाहे ॥ ५९
आनीय लोकत्रयनाथबिम्बमास्थाय मौनव्रतमासमाप्तम् ।
आस्थाप्य रत्नाञ्चितपीठिकायां पूजाविधौ यत्नपरो बभूव ॥ ६०
प्रणम्य पूर्वं सुसमाहितात्मा भृङ्गारवर्यं परिगृह्य दोर्भ्याम् ।
पादाभिषेकं प्रथमं विकृत्य तत्याज निर्माल्यकमुत्तरेण ॥ ६१

१ [ प्रतिद्वारमुदग्र° ]. २ म स्वभार°. ३ [ वस्वोक ]. ४ [जनोदकार्चि°].
५ क दधन्.

प्रमार्ज्य हस्ताम्बुरुहद्वयेन अर्घ्यं च वामाग्रकरे निधाय ।
अङ्गुष्ठमार्गेण निपात्य तोयं स्वाहा जिनादिभ्य इति प्रमन्त्र्य ॥६२
सम्यग्विधायार्घ्यमथोत्तमाङ्गे मन्त्राक्षराण्यप्युपजाप्य धीमान् ।
उच्चैः पठंस्तोत्रवरं जिनस्य मूर्ध्नाभिषेकं[1] मुदितः प्रचक्रे ॥ ६३
संधौतहस्तः कुसुमाक्षतानि निक्षिप्य पादाम्बुरुहे जिनस्य ।
तैर्वर्णपूरैरुपमानिकाभिर्निपातयंस्तोयघटैः सहैव ॥ ६४
स्वच्छाम्बुपूर्णैर्वरहेमकुम्भैस्तैर्मृन्मयैः सत्कुसुमावकीर्णैः ।
घटैरनेकैरभिषिच्य नाथं तं गन्धपङ्केन विलिम्पति स्म ॥ ६५
सुगन्धिसच्चन्दनतोयसिक्ताः स्वकेशरव्याततचूर्णचाम्राः[2] ।
पर्यन्तमत्तप्रचलद्द्विरेफा आरोपयामास सुपुष्पमालाः ॥ ६६
सुवर्णपुष्पैर्विविधप्रकारै रत्नावलीभिस्तडिदुज्ज्वलाभिः ।
विभूषणानि प्रतिभूषयन्तीं विभूषयामास तदा जिनार्चाम् ॥६७
प्रदाप्य दीपांश्च हविर्निवेद्य निवेदयामास महाबलिं च ।
स्थानं विदित्वा गृहदेवतायां[3] दिशाबलीनार्द्रकरः प्रचक्रे ॥ ६८
अद्भिः पवित्रीकृतहस्तपद्मः प्रदर्शयामास स दर्पणादीन् ।
विमुच्य मौनं ह्यभिषेचनान्ते स स्वस्तिकां त्रिर्निरुवाच वाचम् ६९
मङ्गल्यगीतस्तुतिमन्त्रयुक्तः कृताञ्जलिः साधुगणो हि तत्र ।
परीत्य सर्वोऽतिविशुद्धभावः सर्वज्ञविम्बं प्रणनाम भक्त्या ॥७०
धर्मोऽर्हतां सर्वजगद्धिताय प्रवर्धतामित्यभिघोषयन्सः ।
साशीर्वचस्तूर्यमृदङ्गनादैः प्रवेशयां तां प्रतिमां बभूव ॥ ७१
ततो वचःकायमनोविशुद्धः प्रविश्य राजा जिनदेवगेहम् ।
प्रियासमेतः प्रणिपत्य भक्त्या जग्राह शेषां जिनदेवतायाः ॥७२

१ म मूर्धाभिषेकं. २ क चूम्रा, [ धूम्राः ]. ३ [ गृहदेवतानां ].

मनोरथं प्राप्य नरेन्द्रपत्नी महेन्द्रपत्नीव विराजमाना ।
उपोपविष्टा प्रभुनैव सार्धं मुदं परामात्मनि सा जगाम ॥ ७३
जिनेन्द्रसिद्धान्तविधौतबुद्धिर्वाक्कायचित्तत्रयजातशुद्धिः ।
प्रशान्तभावाहितधर्मवृद्धिः कश्चिन्मुनिर्धर्ममवोचादित्थम् ॥ ७४
इह प्रणिर्वर्तितसत्क्रियस्य जिनेन्द्रगेहस्य फलादमुत्र ।
सर्वर्द्धिमत्सद्रतिसौख्यवन्ति विमानवर्याणि नरा लभन्ते ॥ ७५
महामहं यः कुरुते जिनानां सौधं मुदा दृष्टि न भोगवृद्धौ[1] ।
भुक्त्वा चिरं तं नृसुरासुराणां सुखं ततो यास्यति मोक्षसौख्यम् ७६
संस्थाप्य यत्नात्प्रतिमां[2] जिनानां नरामराणां सुखमभ्युपैति ।
क्षीराभिषेकप्रमुखक्रियाभी राज्याभिषेकस्य भवेत्स भागी ॥७७
गन्धार्चनैश्चम्पकनागगन्धान्मूर्त्यां[3] स्वगन्धैरतिशेरते तान् ।
धूपप्रदानैः कुलकेतवः स्युस्तेजस्विनः स्युर्वरदीपदानैः ॥ ७८
माल्यप्रदानैर्विरतेश्चरेभ्यो भवन्ति हेमाङ्गदभूषिताङ्गाः ।
भवन्ति भास्वन्मकुटप्रदानात्स्फुरत्किरीटोत्तम[4]पट्टचिह्नाः ॥ ७९
शुद्धिं लभन्ते वरदर्पणेन भृङ्गारतः स्युः कमनीयरूपाः ।
शान्तिं भजन्ते कलशप्रदानात् स्थालाद्धनेनाढ्यतमा भवन्ति॥८०
चक्रप्रदानाद्विनतारिपक्षास्तूर्यैस्त्रिलोकप्रथितप्रणादाः ।
विद्याधरत्वं हि वितानदानाच्छत्रप्रदानाद्विपुलं हि राज्यम् ॥८१
घण्टाप्रदानान्मधुरः स्वरः स्याद्ध्वजैर्विचित्रैरभिवारिताङ्गः[5] ।
सर्वैः प्रवन्द्यो जिनवन्दनेन सर्वर्तुसर्वर्द्धिसुखैकभागी ॥ ८२
इत्येवमुक्त्वा तदनुग्रहार्थं पूजाफलं दानफलेन सार्धम् ।
ज्ञेयार्णवस्यान्तमितो महात्मा धर्मोपदेशाद्विरराम साधुः ॥ ८३

१ क °गृद्धौ. २ म प्रतिमां. ३ [मर्त्याः]. ४ क °तिरीटोत्तम°. ५ [अभिधारिताङ्गः].

ततस्तु राज्ञाधिकतः प्रगल्भो[1] विद्यासरित्तोयनिधिः प्रशान्तः ।
प्रमादहीनो गुणशीलमालः स्तुत्यर्थवादान्वितमित्थमाख्यत् ॥ ८४
त्वं नन्द वर्धस्व धनैश्च धर्मैः संपन्नसस्या धरणी तवास्तु ।
वक्षस्स्थले ते रमतां च लक्ष्मीरर्हत्प्रसादान्नृप जीव दीर्घम् ॥ ८५
शास्ता भव प्रस्खलितात्मकानां त्राता भव त्वं विनयान्वितानाम् ।
स्त्रीबालवृद्धान्विभुहि[2]त्प्रियत्वात्सनातनः क्षत्रियधर्म एषः ॥ ८६
त्वं देवि राज्ञः प्रियकारिणी च स्वपुत्रपौत्रैरभिवृद्धिमेहि ।
शीलोपवासव्रतदानधर्मसर्वज्ञपूजाभिरता च भूयाः[3] ॥ ८७
यदैहिकामुष्मिकसौख्यमूलं संपादितं चैत्यगृहं त्वयेदम् ।
यथा गमिष्यत्यतिदीर्घकालं तथा कुरुष्वेति जगाद राज्ञीम् ॥ ८८
श्रुत्वा मुनिश्रावकयोर्वचांसि मनोगतं चाप्यवबुध्य देव्याः ।
शौर्यावधूतारिगणो नरेन्द्रः प्रीतान्तरात्मा प्रशशास सर्वान् ॥ ८९
यद्यच्च लोके रमणीयरूपमुपस्करं द्रव्यमनेकभेदम् ।
निर्वर्तितं चारु हिरण्यरूप्यैस्तत्तच्च निःशेषमदान्महीशः ॥ ९०
अष्टोत्तरग्रामशतं वरिष्ठं दासांश्च दासीभृतकान्गवादीन् ।
संगीतकं सान्ततिकं प्रमोदं समर्पयामास जिनालयाय ॥ ९१
आहारदानं मुनिपुङ्गवेभ्यो वस्त्रान्नदानं श्रवणार्यिकाभ्यः ।
किमिच्छदानं खलु दुर्गतेभ्यो दत्वा कृतार्थो नृपतिर्बभूव ॥ ९२
अर्हन्मुनीन्द्रागमचक्रपाणिविद्याधराणां चरितानि तानि ।
श्रुत्वा च दृष्ट्वा वरपट्टकेषु सनायकः संमुमुदे जनौघः ॥ ९३
अष्टाह्निकं शिष्टजनाभिजुष्टमन्यैर्नरेन्द्रैर्मनसाप्यचिन्त्यम् ।
एवंप्रकारेण नरेन्द्रवर्यो जिनेन्द्रपूजां प्रयतो निनाय ॥ ९४

१ म प्रगल्भ्यो. २ [ °वृद्धान्विभृहि प्रियत्वात् ]. ३ म भूयात्.

समन्दरं विश्वजनाधिगम्यं समस्तलोकाभ्युदयैकहेतुम् ।
विशुद्धिशुद्धोऽधिकवृद्धितेजाः पूजार्णवं भूमिपतिस्ततार ॥ ९५
सुश्रावकः सर्वगुणाधिवासः सद्गन्धपुष्पाक्षतपूर्णपाणिः ।
स्वस्त्यादिभिर्मङ्गलभारतीभिः शशंस सच्चूतफलावसानैः ॥९६
आचन्द्रतारं जयतूर्जितश्रीः सद्धर्ममार्गः परमार्थसारः ।
सुखीभवत्वार्हतसर्वसंघः सिद्धालयाः स्फीततमा भवन्तु ॥ ९७
देशो भवत्वाधिकगोधनाढ्यः सुभिक्षनित्योत्सवभोगयुक्तः ।
राजा जितारिर्जिनधर्मभक्तो न्यायेन पायात्सकलां धरित्रीम् ॥९८
पाषण्डिनः स्वाश्रमवासिनश्च कृतां स्वसंस्थां न विलङ्घयन्तु ।
यशांसि तिष्ठन्तु चिरं पृथिव्यां दोषाः प्रणाशं सकलाः प्रयान्तु९९
इत्येवमादि स्फुटमर्थतत्त्वं वाक्यं जनश्रोत्रसुखं जगाद ।
महाजनस्तं सकलं निशम्य प्रतिप्रसादो[1]दयवान् बभूव ॥ १००
ततः प्रहृष्टो वरचूर्णवासैः सद्गन्धिमिश्रैः सलिलैः सलीलम् ।
लाक्षारसैरञ्जनरेणुभिश्च चिक्षेप गात्रेषु परस्परस्य ॥ १०१
जिनेन्द्रपादाम्बुरुहार्पणेन प्रसिद्धनामग्रहणेन भूयः ।
पूतां च पुण्यां पुरुसिद्धशेषां वसुंधरेन्द्रो निदधौ स्वमूर्ध्नि ॥१०२
पूजातपःशीलगुणप्रधानैः समर्च्य सद्धर्ममुदारबुद्धिः ।
महीपतिस्तूर्यरवैर्नदद्भिः सान्तःपुरो राजगृहं विवेश ॥ १०३
प्रविश्यात्मगेहं सुरेन्द्रप्रतापो
जिनेन्द्रोरुपूजाकथाकाव्यरागः ।
नृपो धर्मकामार्थकार्यप्रवीणः
प्रतुष्टान्तरात्मा सुखं संनिषण्णः ॥ १०४

---

१ म °प्रसादोदयवाक्.

कुतीर्थप्रणीतान्विवादान्निहत्य
　प्रतिष्ठाप्य भूयो जगत्संप्रवादान्[1] ।
प्रकाश्योरुभक्तिं सतीमार्हतीं च
　सदा संदधौ स्वं मनः सद्दयायाम् ॥ १०५
ददत्पात्रदानं विधिज्ञा[2] यतिभ्यो
　धनं[3] बन्धुमित्रार्थिशिष्टप्रियेभ्यः ।
महापर्वसंधिव्रतैः सोपवासै-
　र्नयन्दीर्घकालं नरेन्द्रोऽभिरेमे ॥ १०६
जिनेन्द्रप्रणीतं शुभं सिद्धिमार्गं
　प्रबुध्यात्मशक्त्या गृहीत्वा व्रतानि ।
नरेन्द्राग्रपत्न्यः सदा सिद्धपूजां
　नयन्त्यो वराङ्गयः कृतार्था बभूवुः ॥ १०७

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
अर्हन्महामहवर्णनो नाम
त्रयोविंशतितमः सर्गः ।

---

## [ चतुर्विंशः सर्गः ]

अथ भूमिपतिस्त्रिकालयोग्यान्[4]
　न विरोधेन नयन्सुखार्थधर्मान् ।
जगति प्रवरां यशःपताकां
　सकलां कान्तिमिवेन्दुवद्बभार ॥ १

---

१ क °संप्रदानान्. २ [विधिज्ञो]. ३ म बनं. ४ क °योग्यानविरोधेन यत्° .

शशिनः किरणाः स्वभावशीता
दिनकृत्तीक्ष्णवपुर्जगत्प्रभुः ।
हुतभुग्दहनप्रकाशनात्मा
जगदाप्यायनपण्डितो महेन्द्रः ॥ २
पृथिवी[1] कठिनात्मिका प्रकृत्या
द्रवता स्नेहगुणस्तथाप्सु वर्ग्यः[2] ।
सकला नृपतौ गुणाः समेताः
सति वैरुध्यतमेऽप्यवाधमानाः ॥ ३
ऋतुषु[3] क्रमसंभवेषु तेषु
प्रतिसंवत्सरमागतेषु तेषु ।
परिपूर्णपयोधराभिरीशो
वनिताभिर्विषयान्सुखं निषेवे[4] ॥ ४
वरवंशमृदङ्गगीतशब्दा-
न्मुरजध्वानविमिश्रितान्सरागान् ।
अशृणोच्छ्रवणेन्द्रियप्रियांस्ता-
न्प्रमदानां मधुराक्षरप्रयुक्तान् ॥ ५
शयने विमले मणिप्रदीपे
कमलाख्यैः[5] परिरभ्य कामिनं तम् ।
वदनैर्जघनैस्स्तनप्रदेशै-
र्मृदुहस्तैरपि पस्पृशुर्महेन्द्रम् ॥ ६
मदिरामललोललोचनानां
वनितानां सुरतोत्सवप्रियाणाम् ।

---

१ क पृथुवी. २ [वन्यः]. ३ [ऋतुषु] ४ [सिषेवे]. ५. [कमलाक्ष्यः].

अनपेक्षिततत्त्व[1]दृष्टिचेष्टाः
परिपप्रच्छुरथावनीन्द्रमित्थम् ॥ १८
सदसन्नियतिस्वभावपक्षा
विदिता लौकिकवैदिकास्त्वयेश ।
विविधांश्च नयानवैपि सूक्ष्मा-
न्वद तत्त्व[2]मसंशयं प्रभो नः ॥ १९
इति मन्त्रिवरैः प्रहृष्टमर्थं
प्रविचार्यात्मनि दृष्टधर्मतत्त्वः ।
नृपतिर्मधुराभिधानयुक्तं
वचनं प्रारभत प्रवक्तुमेवम् ॥ २०
वहुदृष्टिनिविष्टदुर्मतीनां
कुकवीनामथवान्याभि[3]प्रपन्नाः ।
अतिमुग्धतया नरा विवोद्धुं
परमार्थान्न हि शक्नुवन्ति वालाः ॥ २१
यदि दैवनियोगतो महर्द्धिं
लभते चेन्मनुजस्त्वरोगतां वा ।
सुतभा [ ⏑ ] मवद्यलब्धियुक्तं
स तु दैवः कथमेति दैवभावम् ॥ २२
यदि तस्करको यजे[4]त विद्वान्
वरमित्थं स्त्वथ................ ।
उभयोर्यजनं प्रतिगृहीता
ननु देवो विमतिः स किं करोति ॥ २३

१ म °सत्त्वदृष्टि°. २ म तत्त्वं न संशयं. ३ क °न्यभिप्रसंगाः, [ वाक्य-विप्रपन्नाः ]. ४ म यचेत.

गृहमप्युदितं भगवद्धनेन
भवदीयं ननु यस्य दीपतैलम्[1] ।
चरकैवर[2]गन्धमाल्यधूपाः
स च किं[3] दास्यति निर्धनः परेभ्यः ? ॥ २४

वरमन्त्रपदैः सुसंस्कृतं य-
द्धविमादाय समक्षतोऽत्ति काकाः[4] ।
बलिभुक् सुश्रृगालविट्प्रलिप्ताः[5]
स हि किं रक्षति दुर्बलः परं स्वम् ॥ २५

क्षुधितः परिदाप्य तं श्रृगालो
विबलं छागमुपाहरेत्प्रसह्य ।
पुरुषानपि तान्प्रसह्य तद्व-
द्यदि गृह्णाति स एव देवदेवः ॥ २६

पललोदनलाजपिष्टपिण्डं
परदत्तं प्रतिभुज्यते च येन ।
स परानगतिं कथं बिभर्ति
धनतृष्णां त्यज देवतस्तु तस्मात् ॥ २७

यदि कालबलात्प्रजायते चे-
द्विबलः कर्तृगुणः परीक्ष्यमाणः ।
बलवानथवा यदि कृती स्या-
द्विबलः काल इति प्रवेदितव्यः ॥ २८

अथ जीवगणेष्वकालमृत्युः
फलपुष्पाणि वनस्पतिष्वकाले ।

---

१ म न दीप यस्य. २ म चरकेवर°. ३ म स किं. ४ [ काकः ].
५ [ °प्रलिप्तः ].

भुजगा दशनैर्दशन्त्यकाले
मनुजास्तु प्रसवन्त्यकालतश्च ॥ २९

अथ वृष्टिरकालतस्तु दृष्टा
न हि वृष्टिः परिदृश्यते स्वकाले ।
तत एव हि कालतः प्रजानां
सुखदुःखात्मकमित्यभाषणीयम् ॥ ३०

ग्रहतो जगतः शुभाशुभानि
प्रलपन्तो विमतीन्प्रवञ्चयन्ति ।
न तु तत्त्वमिदं वचो यदि स्या-
त्स्वयमेवात्महितानि किं न कुर्युः ॥ ३१

ग्रहयोगबलाच्छुभं भवेच्चे-
त्स च रामः प्रियया कथं विहीनः ।
मविनास्युशनःप्रयुक्तनीतिः[1]
सकलत्रः स च रावणो विनष्टः ॥ ३२

बलिनो बलवान्न चास्ति लोके
स च बद्धो रिपुणा मुरारिणासौ ।
जगति प्रथितः स कामदेवः
सशरीरस्तु पिनाकिना स दग्धः ॥ ३३

धनवीर्यपराक्रमातिसत्त्वो
मघवान्देवगुरुप्रणीतचक्षुः ।
बहुमित्रसुमन्त्रभृत्यकोशः
स च शप्तः किल गौतमेन तेन ॥ ३४

१ [ अविनाश्युशनः ].

धरणीसुत उग्रवीर्यतेजा ....
ग्रहराजः स च रावणेन बद्धः ।
बृहतां पितरप्रमेयबुद्धिः
सकलत्रो भ्रियते स वासवेन ॥ ३५

रविचन्द्रमसोः ग्रहपीडां (?)
परपोषत्वमथेन्द्रमन्त्रिणश्च ।
विदुषां च दरिद्रतां समीक्ष्य
मतिमान्कोऽभिलषेद्ग्रहप्रवादम् ॥ ३६

जगदीश्वरशासनाद्यदि स्या-
त्परपक्षप्रभवविलुप्तता हि न स्यात् ।
कुलजातिवपुर्वयोविशेषा-[1]
न्न च युक्त्या घटते तदुप्सनीयम्[2] ॥ ३७

अथ सर्वमिदं स्वभावतश्चे-
न्ननु वैयर्थ्यमुपैति कर्मकर्तुः ।
अकृतागमदोपदर्शनं च
तदवश्यं विदुषामचिन्तनीयम्[3] ॥ ३८

स्वयमेव न भाति दर्पणः स-
न्न वह्निः स्वमुपैति[4] काष्ठभारः ।
न हि धातुरुपैति काञ्चनत्वं
न हि दुग्धं घृतभावमभ्युपैत्यवीनाम् ॥ ३९

धनधान्यानि न यान्ति वृद्धिमत्र
ननु यस्य भवेत्स्वभावपक्षः ।

---

१ [ °विशेषो न ]. २ [ तदीप्सनीयम् ]. ३ [ विदुषां हि चिन्त° ] ४ क समुपैति, [ हि वह्नित्वमुपैति° ].

[ ................................ ]
स तु दोषे वहुभिः परिप्लुतः स्यात् ॥ ४०

नियतिर्नियता नरव्ययस्य[1]
प्रतिभग्नस्थितिकर्मणामभावः ।
प्रतिकर्मविनाशनात्सुखी स्या-
त्सुखहीनत्वमनिष्टमाप्तग्राह्यम् ॥ ४१

पुरुषो यदि कारकः प्रजानां
सुखदुःखान्यनवाप्तपौरुषाणाम् ।
व्रतदानतया विनिष्फलानि
परघातानृतमैथुनक्रियाश्च ॥ ४२

प्रकृतिर्महदादि भाव्यते चे-
त्कथमव्यक्ततमान्नु मूर्तिमत्स्यात् ।
इह कारणतो नु कार्यमिष्टं
किमु दृष्टान्तविरुद्धतां न याति ॥ ४३

यदि शून्यमिदं जगत्समस्तं
ननु विज्ञप्तिरभावतामुपैति ।
तदभावमुपागतोऽनभिज्ञो
विमतिः केन स वेत्ति शून्यपक्षम् ॥ ४४

अथ सर्वपदार्थसंप्रयोगः
सुपरीक्ष्य सदसत्प्रमाणभावान् ।
न च संभवति ह्यसत्सुशून्यं
परिदृष्टं विगमे सतो महद्भिः ॥ ४५

---

१ [ नरस्य यस्य ].

क्षणिका यदि यस्य सर्वभावा[1]
फलस्तस्य[2] भवेदयं प्रयासः ।
गुणिनां हि गुणेन च प्रयोगो
न च शब्दार्थमवैति दुर्मतिः ॥ ४६

ध्रुवता जगतो यदीष्यते चे-
द्विपदा तुल्यमतो व्ययः स्वयं स्वभावात् ।
गमनागमनक्रियानिवृत्ति-
र्न च संसारफलोदयो न मोक्षः ॥ ४७

यदि सर्वमिदं प्रतीत्यसिद्धं
ननु सर्वस्य विलोपना प्रसिद्धा ।
असतस्तु कुतः प्रतीत्यसिद्धे-
स्तदसिद्धौ वचनं मृषा परस्य ॥ ४८

यदिहेप्सितमात्मनः प्रदातुं
ननु कर्मेति तदाहुरास्रवर्गाः ।
असतीहेतरश्च कर्मनाश-
स्तव भावाफलता कुतोऽस्ति लोके ॥ ४९

असिवद्यदिकोशवच्च लोके
पृथगेवात्र न लक्षितः स चात्मा ।
इति यो विवदेददृष्टतत्त्वः
स च तेन प्रतिभासतो[3]ऽन्तरात्मा ॥ ५०

घटपिण्डवदेव जीवराशिः
क्रियते चेत्परमेष्ठिनेति यस्य ।

१ म सर्वभाषा. २ [ विफलस्तस्य ]. ३ [ प्रतिभासितो ].

अनपेक्षिततत्त्वमार्गदृष्टि-
र्ननु नित्येतरतामुपैति तस्य ॥ ५१
अथ सर्वगतं वदेन्नरो यो
न हि गत्यागतिबन्धमोक्षभावः ।
प्रथमाङ्गुलिपर्वरूपमात्रो
परमात्मेति वदेच्च यः स मूढः ॥ ५२
सुखदुःखफलात्प्रयत्नतश्च
ननु गत्यादिविशेषलिङ्गभावात् ।
स न विद्यत इत्यनल्पबुद्धिः
कथमात्मानमिहात्मना ब्रवीमि ॥ ५३
गतयोऽभिहिता न ताश्च शून्याः
सुखदुःखानुभवोऽस्ति जीवराशेः[1] ।
स च कर्मपथेन नीयमानो
मतिमांस्तासु गतीषु बंभ्रमीति ॥ ५४
अनुपायवती ह्युपायपूर्वा
व्यवसायस्य गतिर्द्विधा विभिन्ना ।
अनुपायवतां न कार्यसिद्धि-
र्भवतीत्येवमुदाहृतं महद्भिः ॥ ५५
परिगृह्य नरो धमन्नधातुं
न सुवर्णं लभते चिरादपीह ।
परिमन्थ्य महाश्रमेण वह्निं
लभते नैव पुमाननर्तिकाष्ठम्[2] ॥ ५६

१ म जीवराशिः. २ [ पुमाननर्थ्य° ].

प्रचलोत्थितया दवान्निशम्य[1]
   परिवाचं प्रपतत्[2]प्रचक्षुरग्नौ ।
न च क्षरते पयो विषाणा-
   दिति दुग्ध्यं मतिर्गौ[3]नुपायवत्स्यात् ॥ ५७

अवगम्य बुधस्तु देशकालौ
   शनकैः क्षीरमथाददाति गोभ्यः ।
मतिमान्कनकं लभेत धातो-
   रनलार्थी लभतेऽग्निमाशु काष्ठात् ॥ ५८

अनिलाहतवृद्धमिद्धमग्निं
   प्रसमीक्ष्येक्षणवाञ्शनैरपैति ।
व्यवसायवतामुपायपूर्वाः
   सफलास्ते च यथा सुखक्रियार्थाः ॥ ५९

विधिर्वा[4]न्नकृतान्तकालदैव-
   ग्रहभाग्येश्वरपौरुषस्वभावाः ।
कथितास्तु नयैकमार्गयुक्त्या
   न हि निःश्रेयसकारणं भवन्ति ॥ ६०

सकला नयभङ्गमार्गनीता
   यदनेकान्तविशेषितास्त एव ।
महतां वचनानुसारनीता
   विदुषां श्रेयसि हेतवो भवन्ति ॥ ६१

स्वपुराकृतकर्मपाशबद्धा-
   न्नरकादींश्च गतीरनन्तकालम् ।

---

१ क °याददान्निशम्य. २ [प्रपतत्य°]. ३ [दुह्यं मातिमानु°]. ४ [ विधिर्कर्म-कृतान्त° ].

प्रतिसंसरति स्वयं स जीवो
न च मुक्तिं लभते विनष्टचेताः ॥ ६२
बलवांस्तु यदा क्रियागुणैः स्या-
न्न च मुक्तिं लभते स कल्मषात्मा ।
स यदा बलवान्गुणी गुणेभ्यः
प्रविमुच्याशु नियाति मुक्तिमात्मा ॥ ६३
[..............................
..................................।]
शुभकर्मयुतः शुभानुबन्धं
फलमश्नाति परत्र सोऽन्तरात्मा ॥ ६४
नरकेष्वतितीव्रवेदनेषु
ह्यमनोज्ञेष्वसुखावहेषु जीवाः ।
अकृतार्थतया तमोधृतेषु
परिपत्यानुभवन्ति घोरदुःखम् ॥ ६५
वधबन्धपरिश्रमाद्यनर्था-
न्बहुला भीमतमास्तिरश्चजीवाः ।
जननार्णवमप्लवा भ्रमन्तः
स्वकृताङ्गः[1] फलतः समश्नुवन्ति ॥ ६६
दुरितान्मनुजा गुणैर्विहीनाः
परभृत्यत्वमुपेत्य दीनभावाः ।
अर्वयामि[2] भयार्दिता[3] विषण्णा
मरणं यान्त्यथवार्थिनो वराकाः ॥ ६७

१ [ स्वकृतानां ]. २ [ अपयान्ति ]. ३ म भवार्धिता.

परिवारधनाप्रमेयलक्ष्मी-
मतिविज्ञानयशःप्रकाशवंशाः ।
द्युतिकीर्तिवलप्रतापभोगाः
सुकृतादेव हि नृणां भवन्ति सर्वे ॥ ६८

नृपती[1] द्विरदेन्द्रमस्तकस्था-
नुदितादित्यसमानसत्किरीटान्[2] ।
शरदिन्दुनिभातपत्रचिह्नान्
प्रचलच्चामरवीज्यमानलीलान् ॥ ६९

प्रविराजितरत्नवद्धहारान्
वहुभृत्यैः परियाचितान्समीक्ष्य ।
स्वपुरार्जितसत्क्रियाफलेन
प्रचलन्तीति वुधाश्च वर्णयन्ति ॥ ७०

यदतुल्यपराक्रमातिसत्त्वान्[3]
कुलरूपद्युतिकान्तिभिः समानान् ।
वहुकोटिनरानथैक एव[4]
ननु पूर्वार्जितपुण्यतः प्रशास्ति ॥ ७१

इह जन्मनि यः शुभक्रियार्थः
स परत्राभ्युपगम्य नाकलोकम् ।
अणिमादिगुणैर्गुणप्रधानैः
सुचिरं क्रीडति निर्गमप्रवन्धैः ॥ ७२

अजराम्वरहेमभूषणाना-[5]
मपरिम्लानसुदामधारिणीनाम् ।

१ क नृपर्ति, [ नृपतीन् ]. २ क सत्तिरीटान्. ३ क °सर्वान्. ४ क एवननु, [ एवं ननु ]. ५ [ अरजोऽम्बर° ].

शुभरूपकलागुणान्वितानां
प्रतिभात्रं[1] व्रजति द्युसुन्दरीणाम् ॥ ७३
स्मितपूर्वमनोज्ञभाषिणीभिः
सुरतप्रीत्यनुकूलकारिणीभिः ।
वरवेषविलासविभ्रमाभी
रमते नित्यमतन्द्रितः श्रियाभिः ॥ ७४
रविकोटिसहस्रभासुराणां[2]
प्रचलत्कुण्डलहारविभूषितानाम्[3] ।
कुरुते विभुतादिवश्यतीनां-[4]
ममरेन्द्रः सुकृतादपेतसार्कः[5] ॥ ७५
इति मधुरवचोभिरर्थवद्भिः
समपनयन्दुरनुष्ठितान्पदार्थान् ।
अधिगतनयहेतुवादमार्गः
स्फुटमवदन्नृपतिस्तदा सभायाम् ॥ ७६
अबुधहृदयवञ्चनानिमित्तं
परिपठितं शठवादिभिर्द्विजैर्यत् ।
पुनरपि नृपतिर्विशालबुद्धिः
कथयितुमारभते स्म वेदगुह्यम् ॥ ७७

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
परवादिविघातको नाम
चतुर्विंशतितमः सर्गः ।

---

१ [ पतिभावं ]. २ म °सहस्रप्रभा°. ३ [ हारभूषितानाम् ]. ४ [ विभुतां दिवस्पतीनाममरेन्द्रः ]. ५ [ °शोकः ].

## [ पञ्चविंशः सर्गः ]

अथावनीन्द्रः स महासभायां प्रकाशयन्धर्मकथापुराणम् ।
मिथ्यामहामोहमलीमसानां चित्तप्रसादार्थमिदं जगाद ॥ १

अष्टैके[1] एवात्र यदि प्रजानां कथं पुनर्जातिचतुष्प्रभेदः ।
प्रमाणदृष्टान्तनयप्रवादैः परीक्ष्यमाणो विघटामुपैति ॥ २

चत्वार एकस्य पितुः सुताश्चेत्तेषां सुतानां खलु जातिरेका ।
एवं प्रजानां च पितैक एव पित्रैकभावाच्च न जातिभेदः ॥ ३

फलान्यथोदुम्बरवृक्षजातेर्यथाग्रमध्यान्तभवानि यानि ।
रूपाक्षति[2]स्पर्शसमानि तानि तथैकतो जातिरपि प्रचिन्त्या ॥ ४

ये कौशिकाः काश्यपगौतमाश्च कौण्डिन्यमाण्डव्यवसिष्ठगोत्राः ।
आत्रेयकौत्साङ्गिरसाः सगार्ग्या मौद्गल्यकात्यायनभार्गवाश्च ॥ ५

गोत्राणि नानाविधजातयश्च मातृस्नुषामैथुनपुत्रभार्याः ।
वैवाहिकं कर्म च वर्णभेदः सर्वाणि चैक्यानि[3] भवन्ति तेषाम् ॥ ६

न ब्राह्मणाश्चन्द्रमरीचिशुभ्रा न क्षत्रियाः किंशुकपुष्पगौराः ।
न चेह वैश्या हरितालतुल्याः शूद्रा न चाङ्गारसमानवर्णाः ॥ ७

पादप्रचारैस्तनुवर्णकेशैः सुखेन दुःखेन च शोणितेन ।
त्वग्मांसमेदोऽस्थिरसैः समानाश्चतुःप्रभेदाश्च कथं भवन्ति ॥ ८

कृते युगे नास्ति च वर्णभेदस्त्रेताप्रवृत्तावथवाथ भृत्यम् ।
आभ्यां युगाभ्यां च निकृष्टभावाद्यद्वापरं वर्णकुलाकुलं तत् ॥ ९

इति प्रवादैरतिलोभमोहैर्द्वेपैः पुनर्वर्णविपर्ययैश्च ।
विश्रम्भघातैः स्थितिसत्यभेदैर्युक्तः कलिस्तत्र भविष्यतीति ॥ १०

क्रियाविशेषाद्व्यवहारमात्राद्दयाभिरक्षाकृपिशिल्पभेदात् ।
शिष्टाश्च वर्णांश्चतुरो वदन्ति न चान्यथा वर्णचतुष्टयं स्यात् ॥ ११

---

१ [ अस्त्यैक ]. २ [ रूपाकृति ]. ३ क चैत्यानि.

वेदाः प्रमाणं यदि यस्य पुंसस्तेन ध्रुवो यज्ञविधिस्त्वभीष्टः ।
हिंसानुबन्धाः खलु सर्वयज्ञाः हिंसा परप्राणिविहिंसनेन ॥ १२
प्राणातिपातश्च महानधर्मः सर्वेषु वर्णाश्रमिणां मतेषु ।
अधर्मतोऽन्धे तमसि प्रविश्य जीवः समाप्नोति विचित्रदुःखम् १३
यज्ञे[1] वधे नैव वधोऽस्ति कश्चिद्वध्यो ध्रुवं याति सुरेन्द्रलोकम् ।
इदं वचो धूर्तविटस्य वेद्यं दयोपशान्तिश्रुतिवर्जितस्य ॥ १४
स्वबन्धुमित्रान्प्रियपुत्रपौत्रान्[2] दारिद्र्यदुःखार्तिवियोगखिन्नान् ।
सुखार्थिनस्तान्सुगतिप्रकाशान् जुहुर्न[3] चेत्तथ्यमिदं वचः स्यात् ॥
पशूनथाज्ञानगतीननाथान्न वाञ्छतः स्वर्गसुखं कदाचित् ।
आहारमात्राभिरतानभद्रान् हत्वा जडान्किं लभते वराकान् ॥
यद्यत्र सत्त्वान्विमतीन्निहत्य वेदापदेशाद्विगतानुकम्पैः ।
द्यौर्गम्यते वेदकृतात्माभिस्तैः कैर्गम्यते श्वभ्रसुखं वदन्तु ॥ १७
स्वायंभुवैर्यज्ञविधावहिंसा प्रोक्ता पुनर्जीवदयार्थमेव ।
वर्षत्रयप्रोषितपिण्डपिण्डैर्यदिष्यते सत्रिसमैः[4] पुराणैः ॥ १८
नभश्चरः सर्वनृपप्रधानो वसुर्महात्मा वसुधातलेऽस्मिन् ।
एकेन मिथ्यावचनेन राजा रसातलं सप्तममाससाद ॥ १९
अद्यापि तस्य क्षितिपोत्तमस्य द्विजातिभिर्मन्त्रपदप्रवीणैः ।
उत्थापनं यत्क्रियतेऽनभिज्ञैस्तदेव पर्याप्तमिहात्मवञ्चः ॥ २०
साकेतपुर्यां सुलभानिमित्तं कृतं निदानं[5] मधुपिङ्गलेन ।
पुरावराभ्यागमनं च तस्य को नाश्रृणोद्भारतजातमर्त्यैः ॥ २१
तस्माच्च मायामदलोभरागैर्दर्पेण रोषेण च संनिबद्धाः ।
वेदाश्च वेदाध्ययनप्रसक्ता हितार्थिभिस्त्याज्यतमा मनुष्यैः ॥ २२

१ [याज्ञे]. २ भ °पौत्रपुत्रान्. ३ क जहुर्न. ४ क सत्रितयैः. ५ क निधानं.

दत्तं पुरा क्रूरनृपेण दानं किमिच्छकं सर्वजनाय शक्त्या ।
इति प्रतीता किल तस्य कीर्तिर्यदुप्रवीरस्य महीतलेऽस्मिन् ॥२३
तेनान्नरक्षार्थमदुष्टबुध्द्या स्वीकारितः काष्ठमयोऽतिरौद्रः ।
निर्भर्त्सितस्तेन पुनर्द्विजान्धः पञ्चत्वमापत्सहसातिभीतः ॥ २४
एकस्य विप्रस्य विराधनेन श्वभ्रं गतः क्रूर इति श्रुतिश्चेत् ।
समस्तसत्त्वातिनिपातनेन यज्ञेन विप्रा न कथं प्रयान्ति ॥ २५
धर्मक्रियाया हि दयैव मूलं दया विनष्टा परसत्त्वघातात् ।
तेनाश्नुते दुःखशतानि जीवस्ततो हि हिंसा परिवर्जनीया ॥२६
फलं कदल्या न हि [–⏑] पायान्नेक्षुर्नतो[2] कोद्रवतो न शालिः ।
ततः सुखैषी सुखमेव कुर्यात्सुखं च दद्यात्क्रियया परेभ्यः ॥२७
द्विजातयो मुख्यतमा नृलोके तद्वाक्यतो लोकगतिः स्थितिश्च ।
देवाश्च तेषां हवनक्रियाभिस्तृप्तिं प्रयान्तीति च लोकवादः ॥२८
पत्राणि पुष्पाणि फलानि गन्धान्वस्त्राणि नानाविधभोजनानि ।
संगृह्य सम्यग्बहुभिः समेताः स्वयं द्विजा राजगृहं प्रयान्ति ॥२९
प्रवेष्टुकामाः क्षितिपस्य वेश्म द्वास्स्थैर्निरुद्धाः क्षणमीक्षमाणाः ।
तिष्ठन्त्यभद्राः करुणं ब्रुवाणा नालं किमेतत्परिभूतिमूलम् ॥ ३०
यदीश्वरं प्रीतिमुखं त्वपश्यंस्ते मन्यते भूतलराज्यलाभम् ।
पराङ्मुखश्चेन्नृपतिस्तथैव राज्याद्विनष्टा इव ते भवन्ति ॥ ३१
भवन्ति रोषान्नृपतेर्द्विजानां दिशो दश प्रज्वलिता इवात्र ।
द्विजातिरोषान्नृपतेः पुनः स्याद्भल्लातकस्नेह इवाश्मपृष्ठे ॥ ३२
ये निग्रहानुग्रहयोरशक्ता द्विजा वराकाः परपोष्यजीवाः ।
मायाविनो दीनतमा नृपेभ्यः कथं भवन्त्युत्तमजातयस्ते ॥ ३३

१ [ श्वा कारितः ]. २ क °न्नेक्षुर्नता, [ °न्नेक्षुर्नडात् ].

तेषां द्विजानां मुखनिर्गतानि वचांस्यमोघान्यघनाशकानि ।
इहापि कामान्स्वमनःप्रक्लृप्तान्[१] लभन्त इत्येव मृषावचस्तत् ॥ ३४
रसस्तु गौडो विषमिश्रितश्च द्विजोक्तिमात्रात्प्रकृतिं स गच्छेत् ।
सर्वत्र तद्वाक्यमुपैति वृद्धिमतोऽन्यथा श्राद्धजनप्रवादः ॥ ३५
इह प्रकुर्वन्ति नरेश्वराणां दिने दिने स्वस्त्ययनक्रियाश्च ।
शान्तिं प्रघोष्यन्ति धनाशयैव क्षान्तिक्षयं तेऽप्यनवाप्तकामाः॥३६
कर्माणि यान्यत्र हि वैदिकानि रिपुप्रणाशाय सुखप्रदानि ।
आयुर्बलारोग्यवपुःकराणि दृष्टानि वैयर्थ्यमुपागतानि ॥ ३७
सुमन्त्रपूताम्बुहुताग्निसाक्ष्यैः[२] पत्न्यो म्रियन्ते च परैर्भ्रियन्ते ।
कन्याश्रितव्याधिविशीर्णदेहा वैधव्यमिच्छन्त्यथवा चिरेण ॥३८
विपत्तिमृच्छन्ति च गर्भ एव केचित्प्रसूतावपि बालभावे ।
दारिद्र्यमन्ये विकलेन्द्रियत्वं द्विजात्मजाश्चेदिह को विशेषः॥३९
यथा नटो रङ्गमुपेत्य चित्रं नृत्तानुरूपानुपयाति वेषान् ।
जीवस्तथा संसृति[३]रङ्गमध्ये कर्मानुरूपानुपयाति भावान् ॥ ४०
न ब्रह्मजातिस्त्विह काचिदस्ति न क्षत्रियो नापि च वैश्यशूद्रे ।
ततस्तु कर्मानुवशा हितात्मा[४] संसारचक्रे परिबंभ्रमीति ॥ ४१
अपातकत्वाच्च शरीरदाहे देहं न हि ब्रह्म वदन्ति तज्ज्ञाः ।
ज्ञानं च न ब्रह्म यतो निकृष्टः शूद्रोऽपि वेदाध्ययनं करोति ॥ ४२
विद्याक्रियाचारुगुणैः प्रहीणो न जातिमात्रेण भवेत्स विप्रः ।
ज्ञानेन शीलेन गुणेन युक्तं तं ब्राह्मणं ब्रह्मविदो वदन्ति ॥ ४३
व्यासो वसिष्ठः कमठश्च कण्ठः शक्त्युद्गमौ द्रोणपराशरौ च ।
आचारवन्तस्तपसाभियुक्ता ब्रह्मत्वमायुः[५] प्रतिसंपदाभिः[६] ॥ ४४

१ म °मनःप्रकर्षान्. २ क °साख्यः. ३ म संवृति. ४ [ कर्मानुवशाद्धतात्मा ]. ५ [ ब्रह्मत्वमापुः ]. ६-म °संप्रदाभिः.

यः शङ्करस्योज्झितनिर्मलानि पादेन मोहाद्यदि संप्रवृद्धि[1]ः ।
स षष्टिवर्षाणि निकृष्टयोनौ कृमिर्भवेदित्यवनौ श्रुतिः स्यात् ॥४५
पुरा निविष्टा शिरसीश्वरस्य गङ्गापि नैर्मल्यमतो जगाम ।
यः स्नाति शौचं प्रकरोति तस्यां कां वा गतिं यास्यति सोऽनुनेयः ।
योऽश्नाति गङ्गो[2]दकमादरेण पुनाति तस्यादशनाकुलं तत्[3] ।
इति प्रवादो जगति प्रतीतो व्यर्थो भवेत्सोऽपि परीक्ष्यमाणः ॥४७
भीष्मो हि गङ्गातनयो महात्मा महारथो युद्धमुखे च शूरः ।
शरार्दितः शान्त[4]नजो नृपर्षिः क्षेत्रे कुरूणां निपपात धीमान् ॥४८
आगर्भतो घातसु[5]खस्य [−⌣][6] नोद्घाटितं धर्ममहाकवाटम् ।
गङ्गाकुरुक्षेत्रमथाजिशौर्यं निरर्थकं तत्त्रयमित्युशन्ति ॥ ४९
षाण्मासिकं तेन तपोऽतिघोरं शरासनेन क्रियते स्म यस्मात् ।
तस्मात्तपोमूलमिदं समस्तं जगच्च सेन्द्रासुरमानुषाख्यम् ॥ ५०
तीर्थानि लोके विविधानि यानि तपोधनैरध्युषितानि तानि ।
स्तुत्यानि गम्यानि मनोहराणि जातानि पुंसां खलु पावनानि॥५१
यथैव लोके गुडमिश्रितानि पिष्टानि माधुर्यमभिव्रजन्ति ।
तपःप्रकृष्टैरुषितानि यानि स्थानानि तीर्थान्यभवंस्तथैव ॥ ५२
यः कार्तिकेयः स तपश्चकार कुमारकाले भगवान्कुमारः ।
सिद्धिं च तस्मिन्नतुलामवाप तेनाभवत्स्वामिगृ[7]हं पवित्रम् ॥ ५३
यस्याः कुमार्यास्तपसः प्रभावात्प्रकाशिता सा खलु दक्षिणाशा ।
ततः कुमारी वरधर्मनेत्री बहुप्रजानामभवत्स तीर्थम् ॥ ५४
भागीरथिश्चक्रधरस्य नप्ता वर्षाण्यनेकानि तपः प्रचक्रे ।
अधोगतानुद्धरणाय धीरो भागीरथी पुण्यतमा ततोऽभूत् ॥५५

---

१ [ संप्रमर्देत् ]. २ क गन्धोदक°. ३ [ तस्यादशा नृन् कुले ]. ४ क शान्तनचो, [शान्तनवो]. ५ क पूतसुखस्य, [ प्रात° ]. ६ [तस्य]. ७ म °स्वामिगृहं.

कुरुर्महर्षिः कुरुवंशजातः कुमारभावे स तपस्त्वतप्तम्[1] ।
प्रजाहिताय प्रथितप्रभावस्ततः कुरुक्षेत्रमभूत्प्रधानम् ॥ ५६
आतापयोगं परिगृह्य धीराः पाण्डोः सुताः क्लेशविनाशनाय ।
प्रचक्रिरे तत्र तपोऽतिघोरं मातापनीतेन पवित्रमासीत् ॥ ५७
श्रीपर्वते श्रीः किल संचकार तपो महद्वर्षसहस्रमुग्रम् ।
श्रीपुष्करेऽतप्त हि पुष्कराख्यः कैलासशैले वृषभो महात्मा ॥ ५८
तमुज्जयन्तं धरणीधरेन्द्रं जनार्दनक्रीडवनप्रदेशम् ।
यो दिव्यमूर्तिर्यदुवंशकेतुः सोऽरिष्टनेमिर्भगवान्बभूव ॥ ५९
गवामसृक्क्षीरघृतैश्च देवास्तृप्ताः परांस्तेऽपि च तर्पयन्ति ।
देवाश्रयान्मेध्यतमास्तु गावः पूताश्च पुण्या इति घोषणैषा ॥ ६०
गोदानतस्ते च सुरर्षिसंघा दत्ता द्विजेभ्यः सकला भवन्ति ।
पितृभ्य एवं बहुसारमौल्यं दत्तं भवत्यत्र हि गोप्रदानात् ॥ ६१
आरोहवाहस्य धनप्रतोदं प्रदोहवाहो दमनक्रियाभिः ।
प्रपीडिताः क्लेशगणान्भजन्ते देवर्षिसंघातसुखानि तेषाम् ॥ ६२
कुदृष्टिदृष्टान्तवचोऽभिधानादेवाश्च दासा इव वर्णितास्ते ।
तेषां विरोधाचरितादवश्यं जगत्प्रणाशं स्वयमभ्युपैति ॥ ६३
द्विजैश्च काकैर्यदि भुक्तमन्नं मृतान्पितॄंस्तर्पयते परत्र ।
पुरार्जितं तत्पितृभिर्विनष्टं शुभाशुभं तेन हि कारणेन ॥ ६४
स्वस्त्रात्[2]सुताद्यः स्वयमेव पुत्रो जातिश्च[3] जातिस्मर एव कश्चित् ।
विनांश[4]भुङ्क्ते पितृपिण्डमन्नं ततो ह्यशक्यं पितृकार्यमेतत् ॥ ६५
पितुश्च पुत्रस्य च तामसः स्यात्पुत्रो विषान्नं प्रददौ द्विजेभ्यः ।
तद्वर्जितं तैरनृतार्थवद्भिरतश्च मिथ्या पितृकार्यमत्र ॥ ६६

१ [ तपस्त्वतप्त ]. २ [ स्वस्मात् ]. ३ [ जातश्च ]. ४ [ विनाशि ].

यादृंशि दानानि पुरा द्विजेभ्यो दत्तानि नानारसवर्णवन्ति ।
फलन्ति तादृंशि नृणामयत्नाज्जन्मन्यमुत्रेति जनप्रवादः ॥ ६७
श्वभिः शृगालैरपि गृध्रकाकैः सगर्दभैः सूकरचासकूर्मैः ।
यान्यत्र लब्धान्यशुचीनि तैश्च दत्तानि तान्येव तु किं द्विजेभ्यः ।
नापुत्रका लोकामिमं जयन्ति नापुत्रकाः स्वर्गगतिं लभन्ते ।
इतीह पक्षो यदि यस्य पुंसः कुमारभूरि प्रति नो निविष्टः ॥६९
यद्यच्च लोके बहुभिर्न दृष्टं तत्तत्प्रमाणं यदि यस्य न स्यात् ।
वेदश्रुतीहासपुराणधर्मास्ते ब्राह्मणैकेन न तु प्रदिष्टाः ॥ ७०
असत्प्रसूतिस्त्वसतो यदि स्याच्छशस्य शृङ्गान्मृगतृष्णिका स्यात् ।
सतः प्रसूतिस्त्वसतो यदि स्याद्घटस्य वीजं शशशृङ्गतः स्यात् ॥७१
असत्प्रसूतिश्च सतो यदि स्याद्गोशृङ्गतः किं न भवेच्च पुष्पम् ।
सतः प्रसूतिस्तु सतो यदि स्यादग्नेर्जलं वानलको ऽम्बुतो वा ॥७२
द्रव्ये सति क्षेत्रयुते च काले भावे च भावान्तरसंनिबद्धाः ।
भवन्ति भावा भुवनत्रयस्य सहेतुकाः केचन निर्निमित्ताः ॥ ७३
नाप्तो हि रुद्रस्त्रिपुरप्रणाशादुमापतित्वाद्रतिसंभवाच्च ।
अनङ्गभङ्गादसुरोपघाताज्जटाक्षिसूत्रवृषवाहनाच्च ॥ ७४
अग्निर्मुखं वेदसुरेश्वराणां योऽपीश्वरस्यापि मुखं ध्रुवं सः ।
आत्मानमात्मैव च वर्धयेद्यः सोऽन्यान्कथं मुञ्चति वञ्चितात्मा ७५
ब्रह्मापि नाप्तो हरिसारथिः स्यान्निशुम्भशुम्भासुरमर्दनाच्च ।
तिलोत्तमाङ्गप्रतिदर्शनेन चक्रे यतो वक्त्रचतुष्टयत्वम् ॥ ७६
नाप्तो हि विष्णुर्बलिबन्धनेन तुरङ्गमास्यप्रविदारणाच्च ।
अनोविनाशाद्गजदन्तकर्षाच्चाणूरकंसाहिसुराभिघातात् ॥ ७७

१ क शूकरभास॰, [सूकरचाप॰]. २ क वानलतोऽम्बुतो वा. ३ क हरिः
४ क निःशुम्भ॰.

यो गर्दभाय प्रतिनर्दनाय नमश्चकारार्थितया स विष्णुः ।
अरातिभीतः सुचुकुन्दनान्तः पर्यङ्कदेशातिथितां प्रयातः ॥७८
वज्रायुधो गौतमभार्ययासौ विभिन्नवृत्तः किल तेन शप्तः ।
उमासुतः सोऽपि कुमारनामा भग्नव्रतोऽभूद्वनगोचारिण्या ॥ ७९
त्रिशूलवज्रायुधचक्रहस्ता धनुर्गदाशक्त्यासिपाणयश्च ।
सतोमरा देववरा यदि स्युश्चोराः सुखल्वत्र हि कीदृशाः स्युः ॥८०
स्त्रीभूपणै रागिण एव देवाः क्रोधोऽस्ति तेषां स हि सापशुध्यै ।
परिग्रहैरायुधसंग्रहैश्च भयं सुराणामपि लोकसिद्धम् ॥ ८१
नैरात्म्यशून्यक्षणिकप्रवादाद्बुद्धस्य रत्नत्रयमेव नास्ति ।
रत्नत्रयाभावतया च भूयः सर्वं तु न स्यात्कुत आप्तभावः॥८२
मृषैव यत्नात्करुणाभिमानो न तस्य दृष्टा खलु सत्त्वसंज्ञा ।
तया विना का करुणोपपत्तिः कृपाकथा वालकवञ्चनैषा ॥ ८३
प्राणान्तकृद्ब्रह्मवचो दुरन्तं रुद्रस्तु सर्वत्र हि रौद्र एव ।
विष्णुः शठात्मा रतिरोषयुक्तो बुद्धस्तु रौद्रो निरनुग्रहैश्च ॥ ८४
ब्रह्मादयो यद्यनवाप्तकार्या आयुष्यमाप्तुं न हि शक्नुयुश्चेत् ।
के नो भवन्त्यात्मगुणोपपन्नास्तेभ्योऽधिकांस्तान्वद पार्थिवाप्तान्
ये दर्शनज्ञानविशुद्धलेश्या जितेन्द्रियाः शान्तमदा दमेशाः ।
तपोभिरुद्भासितचारुदेहा आप्ता गुणैराप्ततमा भवन्ति ॥ ८६
निद्राश्रमक्लेशविषादचिन्ताक्षुत्तृड्जराव्याधिभयैर्विहीनाः ।
अविस्मयाः स्वेदमलैरपेता आप्ता भवन्त्यप्रतिमस्वभावाः ॥ ८७
द्वेषश्च रागश्च विमूढता च दोषाशयास्ते जगति प्ररूढाः ।
न सन्ति तेषां गतकल्मपाणां तानर्हतस्त्वाप्ततमा वदन्ति ॥ ८८

१ [ मुचुकुन्द° ]. २ [ चोरास्तु खल्वत्र ]. ३ [ शापशुद्ध्यै ]. ४ [ यस्मात् ].
५ क निरनुग्रहैश्च. ६ म गुणैरात्मतमा.

अर्हन्त एवाभयदानदक्षा अर्हन्त एवाप्रतिवीर्यसत्त्वाः ।
अर्हन्त एवामलसत्त्वरूपा अर्हन्त एवातिशयर्द्धियुक्ताः ॥ ८९
अर्हन्त एवाकृपया विहीना अर्हन्त एवारिभयैरपेताः ।
अर्हन्त एवाचलचारुसौख्या अर्हन्त एवातुलमोक्षभा[1]सः ॥ ९०
अर्हन्त एव त्रिजगत्प्रपूज्या अर्हन्त एव त्रिजगच्छरण्याः ।
अर्हन्त एव त्रिजगद्वरेण्या अर्हन्त एवाखिलदोषमुक्ताः ॥ ९१
तानर्हतस्त्वाप्ततमान्विदित्वा तद्वाक्यनीतार्थमतं प्रपन्नाः ।
संसारनिष्ठामुपगम्य धीरा निर्वाणसौख्यं परमाप्नुवन्ति ॥ ९२
तैस्तैः पुनर्लौकिकवैदिकाद्यैरनेकशास्त्रार्थमतिप्रवीणैः ।
विवक्तुभिर्वीक्षितपक्षरागैः स्वपक्षसिद्धिं निजगाद राजा ॥ ९३
कुहेतुदृष्टान्तविनष्टमार्गान्कुज्ञाननीत्यावृतलोचनांस्तान् ।
निरुक्तैर्वाक्यपदैर्नरेन्द्रो विबोधयामास तदा सदस्याम्[2] ॥ ९४
प्रधानमन्त्रीश्वरशिष्टवर्गाः पुरोहितामात्यसभाविदश्च ।
प्रबुद्धपद्मप्रतिमाननास्ते भृशं प्रहृष्टा गतपक्षरागाः ॥ ९५
नरेन्द्रसद्वाक्यविबुद्धतत्त्वाः प्रसन्नबुद्धीन्द्रियरागमोहाः ।
विपन्नमिथ्यात्वकषायदोषाः शान्ता बभूवुर्बहवोऽपि तत्र ॥ ९६

इति विमतिमतिप्रबोधनार्थं
स्वमभिमतं च धृ[3]तिप्रबृंहणाय ।
सुहृदयपरिनिर्मलत्वमिच्छ-
न्सदसि जजल्प मनोहरैर्वचोभिः ॥ ९७
पुनरपि जिनशासनातिभक्तः
परसमयानपविध्य भूमिपालः ।

---

१ [°भाजः]. २ [सदस्यान्]. ३ म द्युति°.

स्वसमयममितार्थमुत्तमश्री-
निगदितुमप्रतिमं मनः प्रचक्रे ॥ ९८

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
मिथ्याश्रुतिविघातको नाम
पञ्चविंशतितमः सर्गः ।

---

## [ षड्विंशः सर्गः ]

अर्हन्मतमिदं पुण्यं स्याद्वादेन विभूषितम् ।
अन्यतीर्थैरनालीढं वक्ष्ये द्रव्यानुयोजनम् ॥ १
अनन्तपर्ययं द्रव्यं सामान्यादिकमिष्यते ।
तच्च द्वेधा विनिर्दिष्टं जीवाजीवस्वभावतः ॥ २
तदेव त्रिविधं प्रोक्तं गुणैर्द्रव्यैश्च पर्ययैः ।
चतुर्धा भिद्यते तच्च रूपारूपक्रियागुणैः ॥ ३
पञ्चास्तिकायभेदेन पञ्चधा भिद्यते पुनः ।
तदेव भिद्यते षोढा षड्द्रव्यप्रविभागतः ॥ ४
जीवपुद्गलकालाश्च धर्माधर्मौ नभोऽपि च[1] ।
षड्द्रव्याण्युदितान्येवं तेषां लक्षणमुच्यते ॥ ५
उपयोगलक्षणा जीवा उपयोगो द्विधा स्मृतः ।
ज्ञानेन दर्शनेनापि यदर्थग्रहणं हि सः ॥ ६
जीविष्यन्ति च जीवन्ति जीवा यच्चाप्यजीविषुं[2] ।
ते च जीवास्त्रिधा भिन्ना भव्याभव्याश्च निष्ठिताः ॥ ७

---

१ म धर्माधर्मनभांसि च. २ [ ये चाप्यजीविषुः ].

अश्रद्दधाना ये धर्मं जिनप्रोक्तं कदाचन ।
अलब्धतत्त्वविज्ञाना मिथ्याज्ञानपरायणाः ॥ ८
अनाद्यनिधनाः सर्वे मग्नाः संसारसागरे ।
अभव्यास्ते विनिर्दिष्टा अन्धपाषाणसंनिभाः ॥ ९
अर्हद्भिः प्रोक्ततत्त्वेषु प्रत्ययं संप्रकुर्वते ।
श्रद्धावन्तश्च तेष्वेव रोचन्ते ते च नित्यशः ॥ १०
अनादिनिधने काले निर्यास्यन्ति त्रिभिर्युताः ।
भव्यास्ते च समाख्याता हेमधातूपमाः स्मृताः ॥ ११
सर्वकर्मविनिर्मुक्ताः सर्वभावार्थदर्शिनः ।
सर्वज्ञाः सर्वलोकार्च्याः सर्वलोकाग्रधिष्ठिताः ॥ १२
निर्बन्धा निःप्रतीकाराः समसौख्यपरायणाः ।
ये च सर्वोपमा[1] नीतास्ते सिद्धाः संप्रकीर्तिताः ॥ १३
षट्प्रकारविभक्तं तत्पुद्गलद्रव्यमिष्यते ।
तस्य नाम विभक्तं तत्प्रवक्ष्यामि यथाक्रमम् ॥ १४
स्थूलस्थूलं तथा स्थूलं स्थूलसूक्ष्मं यथाक्रमम् ।
सूक्ष्मस्थूलं च सूक्ष्मं च सूक्ष्मसूक्ष्मेण षड्विदुः ॥ १५
भूम्यद्रिवनजीमूतविमानभवनादयः ।
कृत्रिमाकृत्रिमद्रव्यं स्थूलस्थूलमुदाहृतम् ॥ १६
तनुत्वद्रव्यभावाच्च छेद्यमानानुबन्धि यत् ।
तैलोदकरसक्षीरघृतादि स्थूलमुच्यते ॥ १७
चक्षुर्विषयमागम्य ग्रहीतुं यन्न शक्यते ।
च्छायातपतमोज्योत्स्नं स्थूलसूक्ष्मं च तद्भवेत् ॥ १८

१ [ सर्वोपमातीताः ].

शब्दस्पर्शरसो गन्धः शीतोष्णे वायुरेव च ।
अचक्षुर्ग्राह्यभावेन सूक्ष्मस्थूलं तु तादृशम् ॥ १९
पञ्चानां वैक्रियादीनां शरीराणां यथाक्रमम् ।
मनसश्चापि वाचश्च वर्गणा याः प्रकीर्तिताः ॥ २०
तासामन्तरवर्तिन्यो वर्गणा या व्यवस्थिताः ।
ताः सूक्ष्मा इति विज्ञेया अनन्तानन्तसंहताः ॥ २१
असंयुक्तास्त्वसंबद्धा एकैकाः परमाणवः ।
तेषां नाम समुद्दिष्टं सूक्ष्मसूक्ष्मं तु तद्बुधैः ॥ २२
धर्माधर्मौ यथासंख्यं गतिस्थित्योस्तु कारणम् ।
तत्परिणामिनामेतौ[1] तयोः शेषः[2] समो मतः ॥ २३
यथोदकं तु मत्स्यानां गतिकारणमिष्यते ।
स्थानाक्रियासमेतानां महीवाधर्म उच्यते ॥ २४
धर्मद्रव्यं त्रिधा भिन्नमस्तिदेशाप्रदेशतः ।
अधर्मश्च त्रिधा प्रोक्तश्चास्तिदेशप्रदेशतः ॥ २५
अस्तिकस्तु[3] स्वपर्यायैर्लोकमापूर्य धिष्ठितः ।
देशः संक्षेपभागस्तु प्रदेशोऽसंख्यभागताम् ॥ २६
वर्तनालक्षणः कालस्त्रिधा सोऽपि प्रभिद्यते ।
अतीतोऽनागतश्चैव वर्तमान इति स्मृतः ॥ २७
वर्तमानमुपस्पृश्य व्यतीतोऽतीत उच्यते ।
वर्तमानस्तु संप्रष्टुरुपस्थास्यत्यनागतः ॥ २८
उभयोरन्तरालः स्याद्वर्तमानस्तु संप्रति ।
एष कालविभागस्तु कालविद्भिरुदाहृतः ॥ २९

१ [ परिणामिनावेतौ ]. २ [ तयोरेषः ]. ३ म आस्तिकस्तु.

समयावलिनाड्यश्च मुहूर्तदिनरात्रयः ।
पक्षमासर्तुवर्षाश्च युगाद्याः कालपर्ययाः ॥ ३०
आकाशं व्यापि सर्वस्मिन्नवगाहनलक्षणम् ।
तच्च प्रोक्तं द्विधा भूयो लोकालोकसमन्वितम् ॥ ३१
द्रव्यैस्तु पञ्चभिर्व्याप्यं[1] लोकाकाशं प्रतिष्ठितम् ।
अलोके खलु पञ्चानां द्रव्याणां नास्ति संभवः ॥ ३२
परिणामाज्जीवभावान्नित्यत्वात्कारणादपि ।
कर्तृत्वात्सत्क्रियत्वाच्च मूर्तिमत्त्वाद्विभुत्वतः ॥ ३३
एकक्षेत्रात्तथैकत्वात्सप्रदेशाद्यथाक्रमम् ।
सर्वं तद्विविधं[2] द्रव्यं विज्ञातव्यं विचक्षणैः ॥ ३४
जीवाश्च पुद्गलाश्चैव परिणामगुणान्विताः ।
परिणामं न गच्छन्ति शेषाणीति विदुर्बुधाः ॥ ३५
जीवद्रव्यं हि जीवः स्याच्छेषं निर्जीव उच्यते[3] ।
मूर्तिमत्पुद्गलद्रव्यममूर्तं शेषमिष्यते ॥ ३६
धर्माधर्मवियज्जीवास्ते नैकक्षेत्रवर्तिनः ।
एकक्षेत्रस्तु कालः स्यादेको नैकश्च पुद्गलः ॥ ३७
परमाणुश्च कालश्च निःप्रदेशावुदाहृतौ ।
शेषाणि सप्रदेशानि वर्णितान्यृषिसत्तमैः ॥ ३८
धर्माधर्मैकजीवाश्च असंख्येयाः प्रदेशतः ।
प्रदेशा वियतोऽनन्ता इति सर्वविदां मतम् ॥ ३९
जीवाश्च पुद्गलाश्चैव कालश्च बहवः स्मृताः ।
धर्माधर्मावथाकाशमेकैकं वर्णितं जिनैः ॥ ४०

१ [ पञ्चभिर्व्याप्तं ]. २ म तद्द्विविधं. ३ क निर्जीवनुच्यते.

पुद्गला जीवकायाश्च नित्यानित्या इति स्मृताः ।
कालद्रव्यमनित्यं तन्नित्यान्येवेतराणि च ॥ ४१
सत्क्रियाः पुद्गला जीवा निःक्रियाणीतराणि च ।
आकाशं च विभुद्रव्यं शेषमव्यापि तद्विदुः ॥ ४२
कार्यकारणसंयुक्तं पुद्गलद्रव्यमुच्यते ।
शेषाण्यकारणान्येव न कार्याणि कदाचन ॥ ४३
कर्तृ कर्तृत्वसंयुक्तं पुद्गलद्रव्यमुच्यते ।
द्रव्याण्यन्यान्यकर्तॄणि सर्वाणीत्यार्हतं मतम् ॥ ४४
तेषामधिगमोपायः प्रमाणनयवर्त्मना ।
प्रत्यक्षं च परोक्षं च प्रमाणं तद्विधा स्मृतम् ॥ ४५
प्रत्यक्षं भिद्यते त्रेधा सावधिश्चित्तपर्ययः ।
रूपिद्रव्यनिबद्धौ तौ केवलं विश्वगोचरम् ॥ ४६
परोक्षं तर्हि[1] निर्दिष्टं द्वेधा तत्त्वार्थदर्शिभिः ।
सप्रभेदा मतिश्चैव द्विविकल्पमपि श्रुतम् ॥ ४७
संक्षेपतो नयौ द्वौ तु द्रव्यपर्यायसंसृतौ[2] ।
तन्मात्रस्याभिवित्सायामर्थशब्दविशेषितौ ॥ ४८
तयोर्भेदा नया जैनैराख्याता नैगमादयः ।
नीयते यैरशेषेण लोकयात्रा विशेषतः ॥ ४९
नैगमः संग्रहश्चैव व्यवहारस्तथैव च ।
द्रव्यार्थिकनयस्यैते भेदाः प्रोक्ताः मनीषिभिः ॥ ५०
ऋजुसूत्रश्च शब्दश्च तथा समविरूढकः[3] ।
इत्थंभूतश्च चत्वारो विकल्पाः पर्ययार्थिनः ॥ ५१

१ [ तद्वि ]. २ [ °संश्रितौ ]. ३ [ समभिरूढकः ].

पुद्गला जीवकायाश्च नित्यानित्या इति स्मृताः ।
कालद्रव्यमनित्यं तन्नित्यान्येवेतराणि च ॥ ४१
सत्क्रियाः पुद्गला जीवा निःक्रियाणीतराणि च ।
आकाशं च विभुद्रव्यं शेषमव्यापि तद्विदुः ॥ ४२
कार्यकारणसंयुक्तं पुद्गलद्रव्यमुच्यते ।
शेषाण्यकारणान्येव न कार्याणि कदाचन ॥ ४३
कर्तृ कर्तृत्वसंयुक्तं पुद्गलद्रव्यमुच्यते ।
द्रव्याण्यन्यान्यकर्तॄणि सर्वाणीत्यार्हतं मतम् ॥ ४४
तेषामधिगमोपायः प्रमाणनयवर्त्मना ।
प्रत्यक्षं च परोक्षं च प्रमाणं तद्द्विधा स्मृतम् ॥ ४५
प्रत्यक्षं भिद्यते त्रेधा सावधिश्चित्तपर्ययः ।
रूपिद्रव्यनिबद्धौ तौ केवलं विश्वगोचरम् ॥ ४६
परोक्षं तर्हि[1] निर्दिष्टं द्वेधा तत्त्वार्थदर्शिभिः ।
सप्रभेदा मतिश्चैव द्विविकल्पमपि श्रुतम् ॥ ४७
संक्षेपतो नयौ द्वौ तु द्रव्यपर्यायसंसृतौ[2] ।
तन्मात्रस्याभिवित्सायामर्थशब्दविशेषितौ ॥ ४८
तयोर्भेदा नया जैनैराख्याता नैगमादयः ।
नीयते यैरशेषेण लोकयात्रा विशेषतः ॥ ४९
नैगमः संग्रहश्चैव व्यवहारस्तथैव च ।
द्रव्यार्थिकनयस्यैते भेदाः प्रोक्ताः मनीषिभिः ॥ ५०
ऋजुसूत्रश्च शब्दश्च तथा समविरूढकः[3] ।
इत्थंभूतश्च चत्वारो विकल्पाः पर्ययार्थिनः ॥ ५१

१ [ तद्धि ]. २ [ °संश्रितौ ]. ३ [ समभिरूढकः ].

नाम च स्थापना चैव द्रव्यं द्रव्यार्थिकस्य च ।
निक्षेपादित्रयः प्रोक्ता भाव एवेतरस्य च ॥ ५२
न हि द्रव्यार्थिको नाम नयः कश्चिदवस्थितः ।
पर्यायार्थिको वापि किंतु भावाव्यवस्थितिः ॥ ५३
उत्पद्यन्ते विनश्यन्ति नियमात्पर्यायवाचिनः ।
न जायन्ते न नश्यन्ति भावा द्रव्यार्थिकस्य च ॥ ५४
ऋते द्रव्यान्न पर्याया द्रव्यं वा पर्ययैर्विना ।
स्थित्युत्पत्तिनिरोधोऽयं द्रव्यलक्षणमुच्यते ॥ ५५
प्रोक्ता स्थित्यादयस्तेऽपि तयोः प्रत्येकलक्षणम् ।
न भवन्ति यतस्तस्मान्न तत्त्वं तौ नयौ स्मृतौ ॥ ५६
न संभवति संसारे द्रव्यार्थिकनयस्य यत् ।
न पर्ययोऽर्थिकस्यापि[1] यध्द्रौव्यच्छेदवादिनौ ॥ ५७
सुखदुःखोपभोगस्तु नित्यस्यापरिणामिनः ।
घटते नाप्यनित्यस्य सर्वथोच्छेददर्शनात् ॥ ५८
योगतः कर्म वध्नाति स्थितिस्तस्य कपायतः ।
एकान्तनित्यानित्यत्वान्न वन्धस्थितिकारणम् ॥ ५९
तस्मादुक्ता नयाः सर्वे स्वपक्षाभिनिवेशिनः ।
मिथ्यादृशस्त एवैते तत्त्वमन्योन्यमिश्रिताः ॥ ६०
मणयः पद्मरागाद्याः पृथक्पृथगथ स्थिताः ।
रत्नावलीति संज्ञां ते न विदन्ति महर्घिणः ॥ ६१
यथैव कुशलैरेते यथास्थाने नियोजिताः ।
रत्नावल्यो हि कथ्यन्ते प्रत्येकाख्यां त्यजन्ति च ॥ ६२
तथैव च नयाः सर्वे यथार्थं विनिवेशिताः ।
सम्यक्त्वाख्यां प्रपद्यन्ते प्राक्तनीं संत्यजन्ति च ॥ ६३

---

१ [ पर्यायार्थिकस्यापि ].

द्रव्यार्थिकनयस्यात्मा कर्मकृत्फलभृत्क्षमः ।
पर्यायार्थिकयस्यान्यः[1] कर्ता भोक्ता तथापरः ॥ ६४
[ द्रव्यार्थिकस्य यः कर्ता स एव फलमश्नुते ।
पर्यायार्थिकयस्यान्यः[2] कर्ता भोक्ता तथापरः ] ॥ ६५
तस्मात्सर्वप्रपञ्चोऽयं लोकयात्रासमन्वितः ।
नययोरनयोर्भेदान्न संभवति युक्तिभिः ॥ ६६
गुणप्रधानभावेन यदा त्वेतौ परस्परम् ।
अपेक्षेते तदा तत्त्वं भजतो[3] भजनाश्रितौ ॥ ६७
अयमेव महापन्थाः पुंसां निःश्रेयसार्थिनाम् ।
अविरोधात्ततोऽन्यस्तु मिथ्यात्वप्रतिपादकः ॥ ६८
यावन्तो वचसां मार्गा नयास्तावन्त एव हि ।
तावन्ति परतीर्थानि यावन्तो नयगोचराः ॥ ६९
अस्त्यात्मा स हि कर्ता च ध्रुवो भोक्ता च मुक्तिमान् ।
अस्त्येव मुक्त्युपायश्च षोढा मिथ्यात्वमुच्यते ॥ ७०
नास्त्यकर्ता न भोक्ता च भङ्गुरो न च मुक्तिमान् ।
नास्त्येव मुक्त्युपायश्च षोढा मिथ्यात्वमुच्यते ॥ ७१
प्रकृतेः पुरुषात्कालात्स्वभावान्नियतेरपि ।
दैवादीश्वरतश्चापि यदृच्छातो विधानतः ॥ ७२
सर्वप्रपञ्चसंसिद्धिरेतेभ्यः संप्रचक्ष्यते ।
केचिदेकान्ततस्तेषां मिथ्यात्वं न निवर्तते ॥ ७३
तस्मादेवार्हतं युक्तमनेकान्तावलम्बनात् ।
अविरोधस्तु सर्वत्र सद्भूतार्थप्रदर्शनात् ॥ ७४

---

१ क °यस्यायम्, [ पर्यायार्थिनयस्यान्यः]. २ क-पुस्तक एव. ३ क भजते.

अविरोधः कुतः स्याच्चेदेकपक्षपरिग्रहात् ।
स पुनः केन चेत्युक्ते नयद्वयपरिग्रहात् ॥ ७५
[ स्याद्वादः खलु पूर्वस्मिन्परस्मिन्नुभयोरपि ।
उभयोः पादयोर्न स्यादिति केचित्प्रचक्षते ] ॥ ७६[१]
स्याद्वादस्तु विशेषेण सर्वत्र यदि कल्प्यते ।
अथवा न प्रकल्प्येत दोषस्तस्य प्रसज्यते ॥ ७७
कस्तत्र दोप इति चेदेकान्तत्वं प्रसज्यते ।
एकान्तवादतः किं न लोकयात्रा विनश्यति ॥ ७८
लोकयात्राप्रसिद्ध्यर्थं युक्तिवादः प्रकल्प्यते ।
दृष्टान्तास्तस्य चत्वारस्तैर्व्यक्तिमभिगच्छति ॥ ७९
जीवः स स्यान्मनुष्यस्तु नाजीवो मृद्घटस्तथा ।
सद्द्रव्यमिति[२] सर्वत्र स्याद्वादस्य विकल्पना ॥ ८०
स्याद्वादः खलु पूर्वस्मिन्परस्मिन्नुभयोरपि ।
उभयोः पादयोर्न स्यादिति केचित्प्रचक्षते ॥ ८१
अनेकान्तोऽपि चैकान्तः स्यादित्येवं वदेत्परः ।
अनेकान्तोऽप्यनेकान्त इति जैनी श्रुतिः स्मृता ॥ ८२
तस्यानेकान्तवादस्य लिङ्गं स्याच्छब्द उच्यते ।
तदुक्तार्थे विनाभावे लोकयात्रा न सिध्यति ॥ ८३
नयानामपि सामग्री प्रकृत्यादीनां च संहतिः ।
सम्यक्त्वमिति विज्ञेयं नान्यच्छ्रेयोऽस्त्यतः परम् ॥ ८४
प्रमाणनयनिक्षेपप्रक्रमोपहितं पुनः ।
एकान्तैकात्मकं वस्तु भावाभावोपबृंहितम् ॥ ८५

---

१ म-पुस्तक एव. २ म स द्रव्यमिति.

द्रव्यार्थिकव्यवस्थायामेकं स्यात्पर्ययार्थिनः ।
अनेकमिति निर्दिष्टं तदेव जिनशासने ॥ ८६
पितृपुत्रादिसंबन्धं[1] एकस्मिन्पुरुषे यथा ।
न ह्येकस्य पितृत्वेन सर्वेषामपिता भवेत् ॥ ८७
चतुर्विधस्वभावोऽयं पर्यायो वस्तुनः स च ।
प्रमेयत्वं हि हेतुः स्याद्धटो दृष्टान्त उच्यते ॥ ८८
तस्मात्तत्त्वपरीक्षायामिदमेव समञ्जसम् ।
स्वायंभुवं प्रवचनं विद्वद्भिः समुपासितम् ॥ ८९
मिथ्यावादसमूहस्य भद्रं जैनस्य धर्मतः[2] ।
अमृतः स्वादुतः[3] पुंसां सुगमश्च सुमेधसाम् ॥ ९०
श्रद्धां कुर्वन्ति ये तस्मिन्नेधन्ते[4] भावतश्च ये ।
ते सम्यग्दृष्टयः प्रोक्ताः प्रत्ययं ये च कुर्वते ॥ ९१
तन्मूले ज्ञानचारित्रे मुक्तेरेतानि साधनम् ।
रत्नत्रयमिदं प्रोक्तं सोपानं स्वर्गमोक्षयोः ॥ ९२
एतन्मृत्युजराजातिसंततातङ्कभेषजम् ।
निर्वाणस्वास्थ्यसंधानं पवित्रं परमं शिवम् ॥ ९३
त्रयाणां समवायेन मुक्तिमार्गः प्रशस्यते ।
त्रिविष्टपैकदृष्टान्तात्प्रत्येकं न प्रसिध्यति ॥ ९४
तथापि तेषु सम्यक्त्वं श्रेष्ठमित्यभिधीयते ।
महीसलिलजीवानां सति योगे तु जीववत् ॥ ९५
दर्शनाद्भ्रष्ट एवानुभ्रष्ट इत्यभिधीयते ।
न हि चारित्रविभ्रष्टो भ्रष्ट इत्युच्यते बुधैः ॥ ९६

---

१ क °संबन्धं. २ [ धर्मकः ]. ३ [ स्यादतः ]. ४ म तस्मिन्नेदं ते.

महता तपसा युक्तो मिथ्यादृष्टिरसंयतः ।
तस्य सर्वज्ञसंदृष्ट्या संसारोऽनन्त उच्यते ॥ ९७
सम्यग्दृष्टेस्तु संसारो यद्युत्कृष्टो भवेत्पुनः ।
सागराणां तु षट्षष्टिः नातः परतरो भवेत् ॥ ९८
क्रियाहीनं च यज्ज्ञानं न तु सिद्धिं प्रयच्छति ।
परिपश्यन्यथा पङ्गुमुग्धो[1] दग्धो दवाग्निना ॥ ९९
ज्ञानहीना क्रिया चापि नात्र कार्यं प्रसाधयेत् ।
नेत्रहीनो यथा धावन्पततिस्त्वनलार्चिषि[2] ॥ १००
तौ यथा संप्रयुक्तौ तु दवाग्निमधिगच्छतः ।
तथा ज्ञानचरित्राभ्यां संसारान्मुच्यते पुमान् ॥ १०१
पुमानर्थानथाप्रेप्सुः संपन्नः साधनैरपि ।
दैवहीनः क्रियावांस्तु[3] न कर्मफलमश्नुते ॥ १०२
संपन्नो दैवसंपत्त्या साधनैश्च समन्वितः ।
पुमान्पौरुषहीनस्तु सोऽपि नार्थं स गच्छति ॥ १०३
युक्तौ विचार्यमाणायां य एवोभयवान्भवेत् ।
स एवेप्सितभागाग्रैर्दण्डोऽरण्यं इवोद्भवेत ॥ १०४
एवं जने[5] क्रियायुक्तस्त्रिगुप्तः संयतेन्द्रियः ।
निर्धूय सर्वसंकल्पान् ध्रुवमेत्यचलं पदम् ॥ १०५

द्रव्याणि षट् च गतिभेदसमन्वितानि
युक्त्या प्रमाणनयमार्गविकल्पितानि ।
तान्येव तत्त्वपदवीसमुपाश्रितानि
स्वैर्लक्षणैरभिहितानि नरेश्वरेण ॥ १०६

---

१ [ पङ्गुर्मुग्धो ]. २ [ पतितस्त्वनलार्चिषि ]. ३ क. °दैवहीनक्रिया°.
४ [ °भागाग्रैर्दण्डो° ]. ५ [ जनो ].

कालस्य हानिमथ वृद्धिमपि प्रसंख्यं
संज्ञां च तस्य खलु भारतवर्षभूमौ ।
तस्यां तु कारणमहापुरुषांश्च तेषां
नामादि विस्तरविहीनमतोऽभिधास्ये ॥ १०७

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
द्रव्यादिकालो नाम
षड्विंशतितमः सर्गः ।

---

## [ सप्तविंशः सर्गः ]

ततो नरेन्द्रः प्रथमानुयोगं प्रारब्धवान्संसदि वक्तुमुच्चैः ।
सभा पुनस्तस्य वचोऽनुरूपं शुश्रूषयामावहिता बभूव ॥ १
कालायुषी क्षेत्रमतो जिनांश्च जिनान्तरं चक्रभृतस्तथैव ।
प्रख्यातवंशौ बलवासुदेवौ तयोश्च शत्रूंश्च निशामयध्वम् ॥ २
कालं पुनर्योगविभागमेति निगद्यतेऽसौ समयो विधिज्ञैः ।
संख्याव्यतीताः समयाश्च दृष्टा एका बुधैः सावलिकेति तेऽपि ॥३
शब्दः स एके गणनाव्यतीतास्ताः सप्तभिस्तोकमुदाहरन्ति ।
स्तोकैर्लवः सप्तभिरेव चैकस्तेनाधिकास्त्रिंशदथाष्टयुक्ताः ॥ ४
एको मुहूर्तः खलु नाडिके[1] द्वौ[2] त्रिंशन्मुहूर्ता दिनरात्रिरेका ।
त्रिपञ्चकैस्तैर्दिवसैश्च पक्षः पक्षद्वयं मासमुदाहरन्ति ॥ ५
ऋतुस्तु मासद्वय एक उक्त एषां त्रयं स्यादयनं तथैकम् ।
वर्षं तथा द्वे अयने वदन्ति संख्याविभागक्रमकौशलज्ञाः ॥ ६

---

१ म नाधिके. २ [ द्वे ].

दशाहतां वृद्धिमतः परं तु संख्यां प्रवक्ष्यामि यथाभिधानाम् ।
एकं दशैवाथ शतं सहस्रं दशाहतं तद्ध्ययुतं वदन्ति ॥ ७
दशाहतं तं त्वयुतं हि लक्ष्या शताहतां तां च वदन्ति कोटीम् ।
लक्ष्या ह्यशीति त्वधिका चतुर्भिः पूर्वाङ्गमेकं मुनिभिः प्रदिष्टम् ॥८
कृतिस्तु तस्यैव हि पूर्वमेकं पूर्वाङ्गमाहुः कृतिताडितं तत् ।
तेनाहतं तच्च हि सर्वमेकं[1] सर्वाहतं चापि [~] नाङ्गमाहुः ॥ ९
ततः परं तस्य परस्परेण गुण्यं च विन्द्याद्गुणकारकं च ।
तेषां तु संज्ञाः क्रमतः प्रवक्ष्ये पृथक्पृथक्पूर्वमुनिप्रणीताः ॥ १०
ततो नतं तन्नलिनाङ्गमस्मात्ततश्च भूयो नालिनं निराहुः ।
ते द्वे महाशब्दयुते च पूर्वे पद्मं ततः स्यात्कमलं च तस्मात् ॥११
ततः परं तत्कुमुदं तुटीयं ततश्च भूयोऽथ टटं निराहुः ।
ततश्च विद्यां डेमनं[2] तथा[3]हं महं ततस्त्र्यात्[4]प्रयुतं प्रतर्क्यम् ॥ १२
ततः शिरीषं त्वतिसंयुतं च प्रहेलिका चापि च चर्चिका च ।
संख्याव्यतीतं च ततः प्रमाणमौपम्यगम्यं मुनयो वदन्ति ॥ १३
संख्येयमादौ प्रवदन्ति तज्ज्ञास्ततस्त्वसंख्येयमनन्ततां च ।
एकैकमेषां त्रिविधप्रकारं नवप्रकारं द्वयमामनन्ति ॥ १४
व्यवहारपल्यं प्रथमं वदन्ति न तेन किंचिद्व्यवहार्यमस्ति ।
उद्धारपल्यं च ततो द्वितीयमद्धारपल्यं च पुनस्तृतीयम् ॥ १५
विष्कंभमानं खलु योजनं स्यात्परिक्षिपन्तं त्रिगुणाधिकं च ।
उत्सेधतो योजनमेव यस्य तत्पल्यमाहुर्गणितप्रधानाः ॥ १६
एकाहिकं सप्तदिनानि यावज्जातस्य रोम्णां खलु वर्करश्चै[5] ।
अनेककल्पप्रतिखण्डितानां निरन्तरं तिन्दुसमं प्रपूर्णम् ॥ १७

---

१ क पर्वेमेकं. २ क दमनं. ३ क तदाहं. ४ [ महत्ततः स्यात् ].
५ [ वर्करस्य ].

पूर्णे तथा वर्षशते च तस्मादेकैकमुद्धृत्य हि लोमखण्डम् ।
निष्ठां प्रयाते खलु रोमराशौ पल्योपमं तं प्रवदन्ति कालम् ॥१८
तेषां पुनः स्यादथ पल्यनाम्नां दशाहतां सा खलु कोटिकोटिः ।
प्रमाणमेतत्खलु सागरस्य निगद्यते वीतमलैर्जिनेन्द्रैः ॥ १९
ततश्च तस्माद्व्यवहारपल्याद्वालाग्रमेकं परिगृह्य सूक्ष्मम् ।
अनेककोट्यब्दविखण्डितं तत्तस्यातिपूर्णं निचितं समन्तात् ॥२०
पूर्णे समासान्तशते[1] ततस्तु एकैकशो रोम समुद्धरेच्च ।
क्षयं च जाते खलु रोमपुञ्ज उद्धारपल्यस्य हि कालमाहुः ॥२१
पल्योपमानां खलु कोटिकोटी दशाहता सागरमेकमाहुः ।
अनेन मानेन मिता मुनीन्द्रैर्द्वीपाः समुद्रा द्वितियार्धसंख्याः ॥२२
उद्धारपल्यात्प्रतिगृह्य चैकं तद्रोमखण्डं शतशः प्रकल्प्यम् ।
अनेककोट्यब्दमुहूर्तखण्डं पूर्णं च तेषां निचितं च पल्यम् ॥ २३
पाते तथैवाब्दशते क्रमेण रोमैकमेकं तत उद्धरेच्च ।
निष्ठां प्रयाते खलु रोमराशावद्धारपल्यं समुदाहरन्ति ॥ २४
तेषां दशघ्ना खलु कोटिकोटी तन्मानमाहुः किल सागरस्य ।
दिवौकसां नारकपुंस्तिरश्चामिति स्थितिः कर्मभवाभुवां[2] च ॥२५
ततस्तु तेषां खलु सागराणां दशाहतास्ता अपि कोटिकोटीः ।
उत्सर्पिणीं तां प्रवदन्ति तज्ज्ञा भूयस्ततस्तामवसर्पिणीं च[3] ॥२६
उत्सर्पिणी वाप्यवसर्पिणी च अनाद्यनन्ताविह यौतकाले[4] ।
तौ भारतैरावतयोः प्रदिष्टौ पक्षौ यथैवात्र हि शुक्लकृष्णौ ॥२७
सुशब्दपूर्वास्तु भवन्ति तिस्रो दुस्सूपसर्गे प्रहिते समे द्वे ।
तथातिदुर्भ्यां सहिता समैका एकस्य कालस्य हि षट्प्रभेदाः २८

१ म समाशान्त°. २ क कर्मभवाभवां. ३ क °सर्पिणीं तां. ४ [ यौ च कालौ ].

आद्यश्चं संख्याः कथिताश्चतस्रस्ततो द्वितीयस्य पुनश्चतस्रः ।
ततो द्वितीयस्य पुनश्च तिस्र उदाहृते द्वे च तृतीयकस्य ॥ २९
स्यात्सागराणां खलु कोटिकोट्यश्चतुर्थकालस्य हि कोटिकोटी
सप्ताहता षट् च सहस्रहीना त्रिसप्तसप्ताष्टसमासहस्रम् ॥ ३०
स्यान्मानमेतत्किल पञ्चकस्य षष्ठस्य कालस्य तदेव मानम् ।
त्रैकाल्यविद्भिः कथितं यथावच्चतुर्थकालस्य हि मध्यकाले ॥ ३१
उत्पेदिरे कारणमानुपास्ते जिनाश्चतुर्विंशति तत्र जाताः ।
ते चक्रिणो द्वादश राजवर्या नव प्रदिष्टा खलु वासुदेवाः ॥ ३२
नवैव तेषां प्रतिशत्रवश्च प्रतिश्रुतिश्चैव हि संमतिश्च ।
क्षेमंकरस्तत्र तृतीय आसीत्क्षेमंधरश्चापि चतुर्थकः स्यात् ॥ ३३
सीमंकरः पञ्चमको बभूव सीमंधरः षष्ठ उदाहृतश्च ।
ततश्च राजामलवाहनः स्याच्चक्षुष्मता तेन तथाष्टमस्तुं ॥ ३४
ततो यशस्वानभिचन्द्रसंज्ञश्चन्द्राभनामा मरुदेवसाह्वः ।
प्रसेनजिन्नाभिरनन्तरश्च ततः प्रसूतो वृषभो महात्मा ॥ ३५
तस्याग्रपुत्रो भरतो बभूव एते स्मृता वंशकरा विशिष्टाः ।
यशस्विनः षोडशभूमिपालास्त एव लोके मनवः प्रदिष्टाः ॥ ३६
नाभेय आद्योऽजितशंभवौ च ततोऽभिनन्दः सुमतिर्यतीशः ।
पद्माभनामा च तथा सुपार्श्वः चन्द्रप्रभश्चैव हि पुष्पदन्तः ॥ ३७
श्रीशीतलाख्यो मुनिराजकेतुः श्रेयो जिनेन्द्रो वरवासुपूज्यः ।
ततो जिताशो विमलो यतीशोऽप्यनन्तजिद्धर्मजिनो च शान्तिः ३८
कुन्थुस्त्वरो मल्लिरतुल्यवीर्यः श्रीसुव्रतोऽथो नमिरिन्द्रवन्द्यः ।
अरिष्टनेमिस्त्वथ पार्श्वदेवः श्रीवर्धमानेन जिनाः प्रदिष्टाः ॥ ३९

१ [ आद्यस्य ]. २ [ °विंशतिरत्र ]. ३ क तथाष्टमस्तु, [ ततोऽष्टमस्तु ].

आद्यश्च चक्री भरतेश्वरोऽभूत्ततो द्वितीयः सगरो महात्मा ।
तृतीय आसीन्मघवान्नरेन्द्रः सनत्कुमारश्च चतुर्थकोऽभूत् ॥ ४०
शान्तिश्च कुन्थुस्त्वथ सप्तमोऽरः सुभौमनामा च महादिपद्मः ।
हरिश्च तस्माज्जयसेननामा श्रीब्रह्मदेवश्च ततोऽन्तिमोऽभूत् ॥ ४१
आद्यस्त्रिपिष्टश्च ततो द्विपिष्टस्तस्मात्स्वयंभूः पुरुषोत्तमश्च ।
नृसिंहनामापि च पुण्डरीको दत्तश्च नारायणकृष्णसाह्वः ॥ ४२
गुणैरुपेतो विजयोऽचलश्च धर्मस्ततोऽभूदथ सुप्रभश्च ।
ततः सुदृष्टोऽपि च नन्दिनामा स्यान्नन्दिमित्रश्च हि रामपद्मौ ॥ ४३
ग्रीवोऽश्वपूर्वस्त्वथ तारकश्च समेरको वै मधुकैटभश्च ।
ततो निशुम्भो वलिपार्थिवश्च प्रह्लादको रावणकृष्णशत्रू ॥ ४४
नाभेयतीर्थे भरतो वभूव तथाजितोऽभूत्[1]सगरो नृपेन्द्रः ।
त्रिपिष्ट आसीत्खलु शैतले च द्विपिष्टकः श्रेयसि तीर्थजातः ॥४५
अभूत्स्वयंभूर्वरवासुपूज्ये स वैमले वै पुरुषोत्तमश्च ।
दा[2]तुश्च तीर्थे मघवान्नृपेन्द्रः सनत्कुमारो नरसिंहराजः ॥ ४६
शान्तिश्च कुन्थुस्त्वरराट्त्रयोऽपि आर्हन्त्यचक्रत्वगुणोपपन्नाः ।
श्रीपुण्डरीकश्च सुभौमराजोऽप्यरस्य तीर्थे तु वभूवतुस्ते[3] ॥ ४७
श्रीमल्लितीर्थे च महादिपद्म[4] नारायणो दत्तहरी[5] च जातः ।
नमेः सुतीर्थे जयधर्मकृष्णे स ब्रह्मदत्तश्च वभूव नेमेः (?) ॥४८
स सप्तहस्तो जिनवर्धमानः पार्श्वो जिनेन्द्रो नवहस्तदीर्घः ।
आद्यो जिनेशस्तु समुच्छ्रयेण सर्व[6]र्मणा पञ्चधनुः शतानि ॥४९
अथाष्टपञ्चाष्टकसंस्मिताँ[7]नामूनानि कुर्यात्क्रमशो जिनानाम् ।
दशाहताः पञ्चदशाथ पञ्च धनूंषि नाभेयसमुच्छ्रयात्तु ॥ ५०

१ [ तथाजितेऽभूत् ]. २ [ धर्मस्य ]. ३ [ बभूवतुस्तौ ]. ४ क. महादिपद्मा, [ पद्मो ]. ५ म नारायणोऽधत्त हरी. ६ म सत्रर्षणा. ७ [ संस्थितानां° ].

शताहतं तच्च सहस्रमेकं द्विसप्तषड्भ्याहतपूर्वनाम्नाम् ।
आयुस्स्मृतं नाभिसुतस्य सम्यग्द्विसप्ततिश्चाप्यजितस्य पूर्वाः ५१
स्यात्पष्टिरेका जिनशंभवस्य दशोदिता पञ्चसु तीर्थकृत्सु ।
क्रमेण च द्वे खलु पुष्पदन्तः श्रीशीतले त्वेकमुदाहरन्ति ॥ ५२
द्विसप्तषड्ताड्यसमासहस्रं शताहतं श्रेयसमायुरुक्तम् ।
द्विसप्ततिश्चापि हि वासुपूज्ये षष्टिस्तथायुर्विमले जिनेन्द्रे ॥ ५३
त्रिंशद्दशैकं च तथा त्रयाणां शून्यत्रयं पञ्चनवैककुन्थोः ।
षड्वर्जिता स्यान्नवतिस्त्वरस्य मल्लिस्त्रिशून्योत्तरपञ्च पञ्च ॥५४
त्रिंशत्सहस्रं मुनिसुव्रतस्य नमेः सहस्रं दशसंगुणं तत् ।
नेमेः सहस्रं शतमेवं पार्श्वे द्विसप्ततिः स्यात्खलु वर्धमाने ॥ ५५
समुद्रकोटीस्त्वजितेन ताड्या शताहता पञ्चगुणा च भूयः ।
तदन्तरं स्याद्वृषभे जिनेशे चेति प्रदिष्टं हि पुराणविद्भिः ॥५६
त्रिंशद्दशातो नवतिः प्रदिष्टा अतः सहस्रं नवतिस्तथातः ।
शतं सहस्रं नवसंगुणे द्वे स्यात्सप्तमस्यान्तरमर्हतस्तु ॥ ५७
ततोऽन्तरं तन्नवतिस्तु कोट्यो नवैव कोट्यो नवमान्तरं तत् ।
समुद्रकोटीगणितप्रमाणात्स्यादर्हतामन्तरकं नवानाम् ॥ ५८
षट्षष्टिसंख्या नियुतप्रमाणं षड्विंशतिश्चापि सहस्रपिण्डः ।
शतेन युक्ता किल सागराणां कोटी तथोना दशमान्तरं स्यात् ५९
षट्घ्रा नवात्रिंशदथो नवाथ चत्वार एव त्रितये तथान्यत् ।
पादोनपल्योनसमुद्रसंख्या षण्णां जिनानामिदमन्तरं स्यात् ६०
शान्तेऽन्तरं प्रोक्तमथार्धपल्यं कोटीसहस्रोनकृतं समानम् ।
अग्यर्धपल्यं किल कौन्थवं तत्कोटीसहस्रैकमरान्तरं स्यात् ॥ ६१

१ म षट्तोय°. २ क शतमेव पार्श्वे. ३ म °नतान्तरं स्यात्.

लक्षाहताः षण्णवकास्तु वर्षाः षडेव वर्षास्तु नमेस्तु पंच ।
सहस्रताड्यास्तु पुनस्त्र्यशीतिरर्धाष्टमैश्चापि शतैः[1] समेताम् ॥ ६२
पंचाशतां द्वे[2] च शते समेते पार्श्वान्तरं तं कथितं यथावत् ।
त्रिसप्तसंख्यं च सहस्रमेकं वीरस्य तीर्थान्तरमुक्तमेतत् ॥ ६३
चतुर्थभागोऽथ पुनर्द्विभागः पादोनभागः परिपूर्णभागः
पादोनकश्चापि पुनर्विभागः पल्यस्य तस्यापि चतुर्थकश्च ॥ ६४
एतावता कालपरिच्छदेन तीर्थस्य विच्छेद उदाहृतश्च ।
सपुष्पदन्तादिषु सप्तसु स्याद्यन्तयोः संतत एव जातः ॥ ६५
नाभेयशान्ती ह्यथ कुन्थुधर्मावमीह सर्वार्थविमानमुख्यात्[3] ।
नन्दाजितौ तौ विजयाद्विमानात्तौ वैजयन्तात्सुमतीन्दुभासौ ॥ ६६
नेमिस्त्वथारस्यं[4] हि तौ जयन्तान्मल्लिर्नमिश्चाप्यपराजिताख्यात् ।
तौ प्राणतात्पार्श्वमुनिव्रताख्यावभ्यागतावप्रतिमप्रतापौ ॥ ६७
श्रेयांस्तथानन्तजिदन्तिमश्च पुष्पोत्तरादायसुरप्रमेयाः ।
शुक्रान्महादेरथ वासुपूज्यः श्रीशीतलस्त्वारुणतश्च्युतत्वात् ॥ ६८
सहस्रपूर्वाद्विमलस्त्वरान्तादथारुणाख्यात्खलु पुष्पदन्तः ।
ग्रैवेयकाधः प्रथमाद्विमानादभ्यागतः संभवसंयतेन्द्रः ॥ ६९
सुपार्श्वनामा किल मध्यमाख्यादूर्ध्वं च पद्मप्रभ आययौ सः ।
इत्यर्हतां कारणभावितानामभ्यागतिर्वः कथिता मयेयम् ॥ ७०
आद्यस्तु नाभिर्जितशत्रुनामा तृतीय आसीज्जितराजसंज्ञः[5] ।
स्वयंवरश्चैव हि मेघराजः स्यात्सुप्रतिष्ठश्च महाबलश्च ॥ ७१
सुग्रीवनामा सुदृढो रथान्तो विष्णुर्वसुः स्यात्कृतवर्मसंज्ञः ।
श्रीसिंहसेनस्त्वथ भानुराजः स विश्वसेनः किल शौर्यधर्मा ॥ ७२

१ म शनैः. २ म पञ्चाशतादृद्वे. ३ क °विमानसंख्यात्. ४ [नेमिस्त्वथारश्च]. ५ म °राजहंसः.

सुदर्शनश्चैव हि कुम्भराजः सुमित्रनामा जयधर्मराजः ।
समुद्रपूर्वो विजयोऽश्वसेनः सिद्धार्थराजः पितरोऽर्हतां च ॥ ७३
आद्याभवत्सा मरुदेव्यतश्च तथा द्वितीया विजयादिसेना ।
सिद्धार्थसंज्ञा किल मङ्गला च सौम्या च देवी पृथिवी[1] तथैव ॥ ७४
सा लक्ष्मणासीन्नवमी च नाम्ना नन्दा च देवी खलु वैष्णवी च
जया तथा श्यामिनिका च देवी सर्वश्रिया सुव्रतयोरवाचा ॥ ७५
पद्मालया मित्रसमाह्वया च सरक्षिला विश्रुतसोमदेवी ।
सा वप्रिणी चैव शिवाग्रदेवी सब्रह्मदत्ता प्रियकारिणी च ॥ ७६
वभूवुरेता जिनमातरश्च अनन्यनारीसदृशैर्गुणौघैः ।
नाम्नोपदिष्टाः प्रथिताः पृथिव्यां[2] ततः परं दानपतीन्प्रवक्ष्ये ॥ ७७
श्रेयांस्तु दानाधिपतिः स आद्यो ब्रह्मा सुरेन्द्रस्त्वथ चन्द्रदत्तः ।
स पद्मजिच्चैव हि सोमदेवो महेन्द्रसोमौ खलु पुष्पदेवः ॥ ७८
पुनर्वसुर्नन्दसुनन्दनौ[3] च जयाभिधानो विजयस्तथैव ।
स धर्मसिंहश्च सुमित्रनामा स्याद्धर्ममित्रस्त्वपराजितश्च ॥ ७९
नन्दी तथैवर्षभदत्तनामा ततः सुदत्तो वरदत्तसंज्ञः ।
धर्मो महात्मा वकुलाभिधानः प्रवर्तितस्तैरवदानधर्मः[4] ॥ ८०
आद्यो जिनेन्द्रस्त्वजितो जिनश्च अनन्तजिच्चाप्यभिनन्दनश्च ।
सुरेन्द्रवन्द्यः सुमतिर्महात्मा साकेतपुर्यां किल पञ्च जाताः ॥८१
कोशांवकश्चैव[5] हि पद्मभासः श्रावस्तिकः स्याज्जिनसंभवश्च ।
चन्द्रप्रभश्चन्द्रपुरे प्रसूतः श्रेयाञ्जिनेन्द्रः खलु सिंहपुर्याम् ॥ ८२
वाराणशौ[6] तौ च सुपार्श्वपार्श्वौ काकंदिकश्चापि हि पुष्पदन्तः ।
श्रीशीतलः खल्वथ भद्रपुर्यां चंपापुरे चैव हि वासुपूज्यः ॥ ८३

१ क पृथुवी. २ क पृथुव्यां. ३ म °नन्दनौ. ४ [ °तैरथ दानधर्मः ]. ५ [ कौशाम्बिक° ]. ६ म वाणारसौ.

काम्पिल्यजातो विमलो मुनीन्द्रो धर्मस्तथा रत्नपुरे प्रसूतः ।
श्रीसुव्रतो राजगृहे बभूव नमिश्च मल्लिर्मिथिलाप्रसूतौ ॥ ८४

अरिष्टनेमिः किल शौर्यपुर्यां वीरस्तथा कुण्डपुरे बभूव ।
अरश्च कुन्थुश्च तथैव शान्तिस्त्रयोऽपि ते नागपुरे प्रसूताः ॥ ८५

इक्ष्वाकुवंश्याः खलु षोडशैव चत्वार एवात्र कुरुप्रवीराः ।
द्वौ चोपदिष्टौ हरिवंशजातावुग्रस्तथैकः किल नाथ एकः ॥ ८६

सुवर्णवर्णाः खलु षोडशैव चन्द्रप्रभौ द्वौ च जिनौ जिताशौ ।
द्वौ द्वौ च संध्याञ्जनतुल्यवर्णौ द्वावेव दूर्वाङ्कुरकाण्डभासौ ॥ ८७

अरिष्टनेमिर्मुनिसुव्रतश्च द्वावप्यमू गौतमगोत्रजातौ ।
शेषा जिनेन्द्रा ऋषभादिवर्याः ख्याताः पुनः काश्यपगोत्रवंश्याः

मल्लिश्च पार्श्वौ वसुपूज्यपुत्रोऽप्यरिष्टनेमिश्च तथैव वीरः ।
कौमारकाले वयसि प्रयाता भुक्त्वा भुवं ते प्रययुश्च शेषाः ॥८९

अरिष्टनेमिर्वृषभो जिनेन्द्रः स वासुपूज्यश्च जिनो महात्मा ।
पल्यङ्कतः सिद्धिमुपागतास्ते स्थित्यैव शेषाः परिनिर्वृताः स्युः ९०

कैलासशैले वृषभो महात्मा चम्पापुरे चैव हि वासुपूज्यः ।
दशार्हनाथः पुनरूर्जयन्ते पावापुरे श्रीजिनवर्धमानः ॥ ९१

शेषा जिनेन्द्रास्तपसः प्रभावाद्विधूय कर्माणि पुरातनानि ।
धीराः परां निर्वृतिमभ्युपेताः संमेदशैलोपवनान्तरेषु ॥ ९२

इति कुलकरदेवदातृमुख्या
हलधरकेशवचक्रपाणयश्च ।
इह च नरवराः श्रुता मया ये
परिकथिता भवतां समासतस्ते ॥ ९३

युगवरपुरुषप्रपञ्चनं य-
त्तदनुनिशम्य महीपतेर्यथावत् ।
प्रथितपृथुधियः सुमन्त्रिणस्ते
प्रतिविविदुः परमार्थमादधुश्च ॥ ९४

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
प्रथमानुयोगो नाम
सप्तविंशतितमः सर्गः ।

---

## [ अष्टाविंशः सर्गः ]

अथान्यदानर्तपुराधिपस्य संप्राप्तकल्याणफलोदयस्य ।
नित्यप्रवृत्तोत्सवसत्क्रियस्य सबन्धुमित्रार्थिजनप्रदस्य ॥ १
धर्मार्थकामोन्नतिनायकस्य गुणाकरस्याप्रतिपौरुषस्य ।
नृपस्य तस्याग्रमहामहिष्या बभूव गर्भोऽनुपमाह्वदेव्याः ॥ २
जाते च गर्भे जगतस्तदानीमभूतभूतप्रमदोऽतिमात्रम् ।
विनाशमीयुः पुनरीतयश्च प्रशान्तवैरा रिपवो बभूवुः ॥ ३
ततः प्रपूर्णे नवमे च मासे प्राचीव दिग्भानुमुदग्रभासम् ।
देवी पृथुश्रीकनकावदातं कुलध्वजं सा सुषुवे कुमारम् ॥ ४
सामुद्रहोराफलजातकैश्च दृष्ट्वा कुमारं पृथुराज्यभारम् ।
प्रशस्य पुण्यार्पितभारतीभिः सुगात्र इत्येव हि नाम चक्रुः ॥ ५
निदाघमासे व्यजनं यथैव करात्करं सर्वजनस्य याति ।
तथैव गच्छन्प्रियतां कुमारो वृद्धिं च बालेन्दुरिव प्रयातः ॥ ६

---

१ [ °मभूदभूत° ]. २ [ पृथुश्रीः ]. ३ [ °जातकानि ]. ४ क. निदाह°.

रूपेण वर्णेन गतिस्थितिभ्यां वाक्येन दृष्टा वपुषा श्रियां च ।
विज्ञानशीलस्थिरमित्रभावैः पित्रा समो राजसुतो बभूव ॥ ७
प्रमत्तमातङ्गविलासगामी शरत्प्रपूर्णामलचन्द्रकान्तः ।
विचित्रसल्लक्षणमण्डिताङ्गो रेजेऽतिमात्रं नयनाभिरामः ॥ ८
स नीतिचक्षुर्मतिमान्विधिज्ञः कलाविदग्धो व्यसनादपेतः ।
शुचिश्च शूरः सुभगश्च नित्यं बालोऽप्यबालो गुणशीलवृत्तैः ॥९
किं देवविद्याधरकिन्नराणां सुतः प्रवञ्च्यावनिमाजगाम ।
आहोस्विदङ्गावयवैरनङ्गो विस्मापनाय स्वयमागतः स्यात् ॥१०
तथैव शेषाश्च महेन्द्रपत्न्यः सुरेन्द्रपत्नीसमचारुशीलाः ।
अतुल्यरूपांस्तनयानविन्दन् शुभोदये सत्कृतयो यथैव ॥ ११
अमात्यसेनापतिमन्त्रिपुत्राः सुताश्च सामन्तनरेश्वराणाम् ।
पुनः प्रधानर्द्धितमात्मजाश्च नरेन्द्रपुत्रैः सहसंप्रदानाः ॥ १२
समानशीलाः समरूपवेषा गुणैः समेताः सदृशाः क्रियाभिः ।
परस्परस्नेहनिबद्धभावाः शिशिक्षिरे राजसुतैः कलाश्च ॥ १३
यस्यात्मजा नागकुमारकल्पा बलं च यस्यारिजनप्रमाथि ।
यस्यासमो वैश्रवणो धनेन विभूतिरिन्द्रप्रतिमा च यस्य ॥ १४
यस्योरुनीत्या रिपवो हि नाशा गता विनाशं सकलत्रपुत्राः ।
प्रजाश्च सर्वर्द्धिगुणैरुपेता वर्णाश्रमांस्तस्थुरथ स्वमार्गैः ॥ १५
अन्यायवृत्तिर्न बभूव लोके राज्ये च यस्यर्द्धिमभिप्रयाते ।
नवैर्नवैरर्थसुमित्रपुत्रैः स राजवर्योऽनुबभूव भोगान् ॥ १६
महामहत्प्रीतिपुरस्सराणि पुण्याहमङ्गल्यशुभक्रियाणि ।
महोत्सवानन्दसमन्वितानि वर्षाण्यनेकानि गतानि तस्य ॥ १७

१ क दृष्ट्वा, [ दृष्ट्या ]. २ म क्रिया. ३ क शुभोदया. ४ म पुरःप्रधान°, [पुरप्रधान°]. ५ क °संप्रधानाः. ६ [हताशा]. ७ क °पुत्रम्. ८ म स्वमार्गे.

कदाचिदीशानसमानतेजा जाज्वल्यमानोत्तममौलिलीलः ।
मृगेन्द्रसत्कुण्डलघृष्टगण्डो ज्वलत्प्रलम्बोत्तमहेमसूत्रः ॥ १८
रत्नोत्पलालिङ्गितहारवक्षा निवद्धकेयूरसुपीनवाहुः ।
विमिश्ररक्तोत्पलमाल्यधारी दुकूलवस्त्रोज्ज्वलगात्रयष्टिः ॥ १९
सुगन्धिसच्चन्दनकुङ्कुमाक्तस्तुरुष्ककालागरुधूपिताङ्गः ।
शान्तः पुनः कान्तवपुर्नरेन्द्रः सुखं निषण्णो वरहर्म्यपृष्ठे ॥ २०
नृपो विरेजे मदशालिनीनां मध्ये स्थितः पार्थिवसुन्दरीणाम् ।
शशीव कान्त्या निजया समेतः सुतारकामध्यगतोऽम्बरे ह ॥ २१
यथालकायां सुरसुन्दरीभिः सहैव रेमे भगवान्महेन्द्रः ।
मदेन विभ्राजितलोचनाभी रेमे चिरं भूमिपतिस्तथैव ॥ २२
निजांशुभिर्व्याप्तदिगन्तराणि ज्योतींषि पश्यन्प्रतिदर्शयंश्च ।
प्रियाङ्गनाभ्यः प्रियमावहंश्च निशामुखं भूपतिरध्युवास ॥ २३
शरत्प्रदोषे विगताभ्रवृन्दान्विचित्रनक्षत्रगणाभिरामान् ।
विभासयन्ती भुवमन्तरिक्षमुल्का पपाताशु सविस्फुलिङ्गा ॥ २४
तामापतन्तीं प्रभया परीतामतिप्रवृद्धाग्निशिखामिवोल्काम् ।
समीक्ष्य राजा सह सुन्दरीभिर्विरागतां तत्क्षणतो जगाम ॥ २५
ताराभिराभिः परिवेष्टिता सा यथैव चोल्का खतलात्पपात ।
प्रियाङ्गनाभिः परिवार्यमाणो राज्यात्प्रयास्यामि तथाहमस्तम् २६
चतुर्विधेनापि महावलेन स्ववन्धुभिर्मित्रजनैः परीतः ।
अहं पुरा दुर्दमितेन तेन नीतोऽस्मि दूरं हयसत्तमेन ॥ २७
एवं पुनर्धर्मपथादपेतो जन्माटवीषु प्रविनष्टचेताः ।
स्वदुष्कृतोपात्तहयाधिरूढः परिभ्रमिष्यामि तथेत्यनैषीत् ॥ २८

१ क °लीनः. २ म °व्याप्त. ३ क तथैवनैषीत्.

निःश्वस्य दीर्घं स्वशिरः प्रकम्प्य निर्भिद्य संसारमपारदुःखम् ।
उत्थाय तस्यां नृपतिः सभायां स्ववासगेहं प्रविवेश धीमान् ॥२९
प्रविश्य तं भोगविरक्तचित्तस्तत्त्वार्थमार्गाभिनिविष्टबुद्धिः ।
नैस्संग्यमास्थातुमना नरेन्द्रो लोकस्थितिं चिन्तयितुं प्रवृत्तः ॥३०
अनित्यभावं ह्यशरण्यतां च संसारमेकत्वमथान्यतां च ।
अशौचमप्यास्रवसंवरौ च सनिर्जरं बोधिसुदुर्लभत्वम्[1] ॥ ३१
इमं च लोकं परलोकभावं शुभाशुभं कृत्यमकृत्यतां च ।
गत्यागतिं बन्धविमुक्तिमार्गं विचिन्तयामास यथास्वभावम् ॥३२
अमेयवीर्यद्युतिसत्त्वशौर्या दिवौकसस्त्वष्टगुणर्द्धियुक्ताः ।
दिवस्पतिं वज्रधरं महेन्द्रं दिवः पतन्तं न हि वारयन्ति ॥ ३३
द्विसप्तरत्नाधिपतिं निधीशं महौजसं मन्दरसारवीर्यम् ।
सुरक्षमाणं गणबद्धदेवैर्नैवान्तको मुञ्चति चक्रपाणिम् ॥ ३४
जगत्प्रधानाः पुरुषाः पुराणा ब्रह्मा हरो विष्णुरिति त्रयोऽपि ।
तानप्युदारान्विवशीचकार न मृत्युतो वीर्यतमोऽस्ति कश्चित् ॥३५
हलीशवागीशगणेश्वराश्च विद्येश्वराः सर्वभुवामधीशाः ।
योगीश्वरा ये च महर्षयश्च पतन्ति कालेन निपात्यमानाः ॥ ३६
तादृग्विधानां जगदीश्वराणां प्रकाशवंशामितपौरुषाणाम् ।
न चास्ति चेन्मृत्युपथा[2] विमुक्तो ह्यस्मद्विधानां च कथैव नास्ति ३७
निदाघमासोत्थमहादवाग्निर्दहत्यरण्ये तृणपर्णकाष्ठम् ।
चराचरं लोकमिदं समस्तं कालाग्निरेवं खलु दंदहीति ॥ ३८
लोहाय नावं जलधौ भिनत्ति सूत्राय वैडूर्यमणिं दृणोति[3] ।
सुचन्दनं चौषधिःभस्मनाऽसौ[4] यो मानुषत्वं नयतीन्द्रियार्थे ॥३९

१ क °सुदुर्लभं च. २ [ °पथाद्विमोक्षो ]. ३ [ दृणाति ]. ४ क °भस्मनासा, [ °भस्मनेऽसौ ].

हस्तागतं प्राणबलप्रदं च त्यक्त्वामृतं स्वादुरसोपपन्नम् ।
प्रदाय मौल्यं मतिमन्दभावात्पिबेद्विषं हालहलं दुरन्तम् ॥ ४०
तथैव लोकद्वयसौख्यमूलं विहाय धर्मं हततत्त्वबुद्धिः ।
पापाकुलं कर्म यदीह कुर्यां सतां भविष्यामि विगर्हणीयः ॥४१
यथैव शालीक्षुफलप्रदाने सुक्षेत्रयज्ञो निवपेदलाबुम् ।
तथैव निर्वाणफलप्रदाने नृत्वावनौ[1] शोकफलं वपेयम् ॥ ४२
रत्नाकरं द्वीपवरं प्रविश्य महार्घ्यरत्नानि च तानि दृष्ट्वा ।
नरो न संगृह्य हि रिक्तपाणिः पश्चादवाप्नोति निवृत्तयात्राम्[2] ॥ ४३
एवं सुमानुष्यमवाप्य दुःखाद्रूपादिभिश्चापि गुणैर्युतोऽपि ।
नृरत्नसारं यदि नादधीयं[3] मुग्धस्त्ववश्यं निहितो[4] भवेयम् ॥ ४४
मोहावृतो विस्मृतधर्मचेष्टो यद्याचरिष्याम्यहमत्र पापम् ।
योनिष्वनेकासु कृतान्तनीतो दुःखान्यनेकान्यहितानि लिप्स्ये[5] ४५
नायूंषि तिष्ठन्ति चिरं नराणां न शाश्वतास्ते विभवाश्च तेषाम्[6] ।
रूपादयस्तेऽपि गुणाः क्षणेन सविद्युदम्भोदसमानभङ्गाः ॥४६
समुत्थितोऽस्तं रविरभ्युपैति विनाशमभ्येति पुनः प्रदीपः ।
पयोदवृन्दं प्रलयं प्रयाति तथा मनुष्याः प्रलयं प्रयान्ति ॥ ४७
विज्ञाय चात्यन्तमनित्यभावमत्राणतामप्यशरण्यतां च ।
तपो जिनैरभ्युदितं यथावद्यद्यत्र कुर्यां न हि वञ्चितोऽस्मि ॥४८
किमत्र पुत्रैर्द्रविणोपहारैः संसारपाकाङ्कुरशोकमूलैः ।
दारैस्तु किं वा हृदयप्रहारैर्घोरारिसर्पप्रतिमैरशुद्धैः ॥ ४९
किं बान्धवैर्बन्धमयैः सशल्यैरनर्थसंसिद्धिसमर्थलिङ्गैः ।
आशावपाशैः किमनर्थमूलैरर्थैरपार्थैर्दुरितानुबन्धैः[7] ॥ ५०

---

१ म कृत्वा पनौ. २ क निवृत्ति°. ३ क नावदीयं. ४ [ निहतो ].
५ [ लप्स्ये ]. ६ म °सर्व°. ७ म °दनुबन्धैः.

राज्यैस्तु किं वा बहुचिन्तनीयैः संसारसंवर्धनहेतुभूतैः ।
भोगैः किमायासिभिरप्रशान्तैश्चतुर्गतिक्लेशफलप्रदैस्तैः ॥ ५१
कः कस्य बन्धुस्त्वथ कस्य मित्रं कस्याङ्गना कस्य बलं धनं वा ।
के कस्य पुत्राः कुलजातिदेशा रूपादयः के क्षणदृष्टनष्टाः ॥ ५२
स्वं जीवितं न प्रविगण्य चोरः कस्मै समं वाञ्छति तं प्रयासम् ।
कस्येह चित्तं विमतिं न धत्ते विद्युद्वपुश्चञ्चलजीवितात्मा ॥ ५३
तिर्यग्मनुष्यासुरनारकाणां योनिष्वनेकास्वशुभावहासु ।
अनन्तकालं बहुजीवराशौ वंभ्रम्यते कर्मरथाधिरूढः ॥ ५४
संसारवासे वसतामसूनां शोकाय संक्लेशसहस्रभाजाम् ।
जरा च जातिर्मरणं च तेषामवश्यमेतत्क्षयमभ्युपैति ॥ ५५
अलाभलाभादिवियोगयोगं मानापमानप्रसवात्मकं यत् ।
सुखासुखं तद्भवने समस्ते जीवा लभन्ते स्वपुरात्मकेन ॥ ५६
इत्येवमादीन्नृपतिर्विचिन्त्य निर्वेगसंवेगयुतासदर्थम् ।
आहूय तं सागरवृद्धिमाप्तं स्वचित्तसंकल्पितमर्थमूचे ॥ ५७
पिता ममासीन्नृपतिः क्रियातस्त्वं धर्मतो मे पितृतामुपेतः ।
वने भ्रमन्तं कृपया कृतार्थं प्रायुंयुजो मामिह बन्धुवर्गैः ॥ ५८
महायतां युध्यगमस्तदा मे सदाभिभूतं सुखदुःखमात्रम् ।
स्वतन्त्रमुत्सृज्य च मां गुणज्ञः प्रातिष्ठिपच्छ्रीमति राज्यभोगे ॥५९
ततो गुरुस्त्वं पितृमातृकल्प आपृच्छनीयश्च समर्चनीयः ।
निःशङ्कया तेन वदामि कार्यं तद्रोचतां ते यदि युक्तिमत्स्यात् ६०
यथैव मां स्थापितवान्नृपत्वे प्रजाहितायात्र गुणैरुदारैः ।
तथाग्रपुत्रं मम तं सुगात्रं राज्यश्रिया योजय साधु साधुम् ॥६१

१ म °प्रशान्त्यै°. २ [ तद्भुवने ]. ३ म निर्वेद°. ४ [ °संवेगयुतः ]. ५ [ सहायतां ].

मास्मत्स्मर[1] त्वं सुतरां कुमारं राज्यप्रकृत्या सह वर्धय त्वम् ।
अहं पुनः कामविरक्तभावस्तपश्चरिष्यामि विमुञ्च तात ॥ ६२
निशम्य वाचं वसुधाधिपस्य संसारनिर्वेदपरायणस्य ।
स्नेहेन तं सागरवृद्धिरित्थं प्रोवाच धर्माश्रयणीयमर्थम् ॥ ६३
स्वामिन्किमेवं त्वविचार्य कार्यं विचिन्तितं केवलमर्थदूरम् ।
अप्रार्थनीयं मनसापि तादृक् न संमतं स्यात्तदयुक्तिमत्त्वात् ॥६४
अदेशकाले प्रतिसंनिबद्धं बलाबलक्षेमविचारहीनम् ।
यत्स्वल्पमप्यत्र हि कार्यजातं प्रारब्धमज्ञैर्न हि सिद्धिमेति ॥ ६५
इदं हि राज्यं नृपतिर्विशालं[2] जनोऽप्रगल्भस्तरुणः सुतोऽपि ।
स्नेहश्च पित्रोर्जनतानुरागो विचन्तनीयः[3] खलु सर्वमत्र ॥ ६६
अरातिभिर्दुष्टतमैरनिष्टैः सामन्तराजैरटवीश्वरैश्च ।
पुरा त्वया साधु विराधितैस्तैः सद्यो विनश्यत्यथ राज्यमेतत् ६७
प्रमाणभूतस्त्वमिह प्रजानां नीतिप्रगल्भो विदितत्रिवर्गः ।
अतो भवन्तं शिरसाभियाचे मा साहसं कर्म कृथा[4] नरेन्द्र ॥६८
निशम्य तत्सागरवृद्धिनोक्तं वचः सदर्थं परिपाकतिक्तम् ।
महीपतिर्मन्दरतुल्यवीर्यः पुनर्बभाषेऽर्थमचिन्त्यमन्यैः ॥ ६९
नृणां च संपज्जलबुद्बुदाभा तद्यौवनं द्वित्रिचतुर्दिनानि ।
आयुः पुनश्छिद्रघटाम्बुतुल्यं शरीरमत्यन्तमपापिधर्मि[5] ॥ ७०
धनं शरन्मेघचलस्वभावं बलं क्षणेनाभ्युपयाति नाशम् ।
केशास्त्वशुक्ला[6] जरसा भवन्ति मन्दत्वमायान्ति तथेन्द्रियाणि ७१
प्रीतिः पराभावमियर्ति सद्यः सुखं च विद्युद्वपुषा समानम् ।
एकैकरूपैरुपयाति मृत्युर्न तस्य लोके विदितः[7] क्षणोऽस्ति ॥ ७२

१ [ मास्मान् ]. २ [ नृपतेर्विशालं ]. ३ [ विचिन्तनीयं ]. ४ क. कृथा.
५ [ अपायधर्मि ]. ६ [ केशास्तु शुक्ला ]. ७ [ विदितः ].

यान्ति क्षयं ते निचयास्तु सर्वे समुच्छ्रितास्तेऽपि च संपतन्ति।
वियोगमूलाः खलु संप्रयोगा मृत्योर्मुखं याति च जीवलोकः ७३
पिता च माता वहुबन्धुवर्गाः सहोदरा मित्रकलत्रपुत्राः।
नष्टस्मृतिं कण्ठगतात्मचेष्टं न मृत्युतो मोचयितुं समर्थाः॥ ७४
तादृग्विधैर्भोजनमात्रसंख्यैः किं बान्धवैर्मेऽस्ति हि कार्यमेभिः।
तानप्यहं कर्मपथान्तरस्थान् त्रातुं न शक्तोऽप्यथ निश्चितुं त्वाम्[1] ७५
निरन्तरं तस्य नृपस्य वाक्यं श्रुत्वाब्रवीत्सागरवृद्धिरेवम्।
यत्कर्तुमिच्छस्यनवद्यरूप तदात्मशक्त्या क्रियते मयापि॥ ७६
सन्मानमायावनिपैरतीव स्नेहं चकार स्वजनः परश्च।
वणिक्प्रभुत्वे खलु वर्तमानस्तव प्रसादान्नृपतिस्त्वभूवम्॥ ७७
मन्त्रे च युद्धे विपयार्थयोश्च सहायतां ते प्रतिपद्य पूर्वम्।
अहं त्विदानीं यदि धर्मकृत्ये परित्यजेयं त्वधमोऽस्मि राजन् ७८
एवं निगद्य स्थिरधैर्यवीर्यो विचार्य राजा विगतद्विपश्च।
अन्तःपुरं तस्य हि शासनेन आह्वाययां सागरवृद्धिरास॥ ७९
आहूयमानास्त्वरया विभूष्य समेखलानूपुरमन्द्रनादाः।
वराङ्गना भूपतिमभ्युपेत्य तस्थुः पुरस्ताद्विकृतोपचाराः॥ ८०
स्वभावभद्राः श्रुतिशीलशुद्धा भर्तृप्रियाचारवचोविभूषाः।
कृतापराधा इव ता विलोक्य क्षमध्वमित्येवमुवाच राजा॥ ८१
तद्वाक्यवाताहतविह्वलाङ्ग्यः प्रम्लानमाला इव दीनवक्त्राः।
आक्रम्ययन्तः[2] स्रवदश्रुनेत्रा निपेतुरुर्वीपतिपादयोस्ताः॥ ८२
हिमाहतानामिव पद्मिनीनां पद्मानि वातातपशोपितानि।
वियोगभीतानि मुखानि तासां प्रम्लानदृष्ट्याप्रियतां प्रजग्मुः ८३

१ [ निश्चिनु त्वम् ]. २ [ आक्रन्दयन्त्यः ].

प्रोत्थाप्यमाना वसुधेश्वरेण मुहूर्तमात्रादुपलब्धसंज्ञाः ।
सगद्गदाशक्तकलप्रलापा जजल्पुरित्थं विनयानताङ्ग्यः ॥ ८४

भवत्प्रसादोदितसर्वसौख्याः पादद्वयालम्बितजीविताशाः ।
त्यक्तास्त्वया किं करवाम हेऽद्य गच्छाम वा कां गतिमत्र नाथ ॥

आधानतः स्नेहनिबद्धरागा नाथेन चात्मप्रियबान्धवास्ताः ।
कृतापराधाश्च वनभर्त [–] कथं नु नस्त्यक्तुमियेष भर्ता: (?)८६

अनन्यनाथा विमतीरपुण्या जहीहि नास्मान्नगतीर्वराकाः ।
त्वया विना नेत्रनिमेषमात्रं न शक्नुवं स्थातुमपि क्षितीश ॥ ८७

जलेन हीना इव पद्मवत्यः करेणवो वोज्झितयूथनाथाः ।
जिजीविषाल्मो न वयं नरेन्द्र त्वया विमुक्ता ध्रुवमित्यवेहि ॥ ८८

इत्थं ब्रुवाणा नृपतिप्रियास्ताः सुताम्रनेत्रान्तजलाविलास्याः ।
स्वस्नेहपाशैरनुबन्धयन्त्यः प्रत्यब्रवीन्निर्गतरागबन्धः ॥ ८९

यमस्य नाथोऽपि महाप्रतापो वज्रायुधः प्रज्वलितप्रभावः ।
साक्षान्नवीं मृत्युमुखात्सुनालं स्थातुं परः कः पुरुषस्त्रिलोके ॥ ९०

अनेककोट्यप्सरसां समूहाः सामानिकाद्यास्त्रिदशेश्वराश्च ।
शक्रालयाच्छक्रमधः पतन्तं न जातु संतारयितुं समर्थाः ॥ ९१

ये चक्रविक्रान्तदशाङ्गभोगास्तदर्धभोगाश्च सितासिताङ्गाः ।
देवासुरेभ्योऽभ्यधिकप्रभावास्ते मृत्युनीता मम का कथेयम् ॥ ९२

गन्धर्वविद्याधरनागयक्षा योगीश्वराश्चाप्रतिसत्त्ववीर्याः ।
प्रियाः स्वका मृत्युमुखं प्रयान्ति त्रातुं न शेकुर्मम कास्ति शक्तिः ९३

जन्मार्णवे मोहमहातरङ्गे जरारुजामृत्युभयप्रकीर्णे ।
निमज्जनोन्मज्जनसंप्रयुक्तं वृथा हि किं मां शरणं वृणीध्वम् ॥ ९४

---

१ क. करवामदेद्य. २ [ भर्ता ]. ३ [ न शक्नुमः ]. ४ [ जिजीविषामो ]. ५ [ साक्षाद्रविः...स नालं ]. क. सनालं. ६ [ प्रदान्नीरन्तुं ].

इष्टैर्वियोगोऽप्रियसंप्रयोगो जातिर्जराव्याधिरनित्यभावः।
यदीह न स्युर्मरणानि लोके रतिर्नृजन्मन्यथ कस्य न स्यात् ॥९५
जवेन नृणां वपुरायुरर्थो धावन्त्युपस्थास्यति सा जरा च।
जरापरिक्षीणबलेन्द्रियाणां मृत्युस्ततो नेष्यति कोऽत्र रागः ॥९६
एका गतिर्निर्वृतिरस्ति लोके निरस्तरोगान्तकजन्मभीतिः।
यां प्राप्य नश्यन्ति जरादयस्ते महानदीं प्राप्य यथा तृषाद्याः ॥९७
तां प्राप्तुमिच्छा यदि विद्यते चेद्युष्माकमस्माभिरसमा समेताः।
उपाय एकोऽस्ति मनुष्यलोके धर्मोऽर्हतां प्रापयितुं समर्थः॥ ९८
अर्हत्प्रणीतश्रुतिसत्सहायाः सद्दर्शनोन्मीलितशुभ्रनेत्राः।
चारित्रसन्मार्गमभिप्रपद्य सुखाकरं मोक्षपुरं प्रयामः॥ ९९
पुरापि जैनेन्द्रमतप्रपन्ना नरेन्द्रवाक्यप्रतिबुद्धतत्त्वाः।
नृदेवदेव्यः समयं प्रयाय भर्त्रा सह प्रव्रजनं प्रपद्युः॥ १००
मृष्टान्नपानं वरभूषणानि चित्राणि वस्त्राण्यथ गन्धमाल्यम्।
प्रासादशय्यासनयानकानि दत्वा चिरं नो नृपते बभार ॥ १०१
चन्द्रांशवः सूर्यगभस्तयश्च खराश्च मद्यः पुरुपांश्च वाताः।
न पस्पृशुर्दुःखनिमित्तभूता भर्तृप्रदानान्न कदाचिदस्मान् ॥१०२
लताः स्वपुष्पस्तवकोत्थिताग्रा यथा न शोभां ददति प्रकृष्टाः।
द्यौश्चन्द्रहीना च यथा न भाति तथा भवामो नृपतौ प्रयाते॥१०३
अभूषणानादनगन्धमाल्यास्ताम्बूलधूपाञ्जनगन्धहीनाः।
अमित्रवर्गैः परिभूयमानाः किमास्महे प्रक्षरदक्षितोयाः॥ १०४
एवं विचिन्त्योत्तमधैर्यवन्त्यः कृतप्रतिज्ञा विगतस्पृहाश्च।
स्वानेकभक्तिस्थितिमानसाम्भाः प्रोचुर्नरेन्द्रं गतभोगतृष्णाः॥

१ क तृषाढ्याः. २ [ °रमा ]. ३ [ प्रपन्नाः ]. ४ [ नृपतिर्बभार ]. ५ [ पुरुषाश्च ]. ६ म °स्तवकोर्थिताग्रा. ७ क विचित्रोत्तम°. ८ [ स्वाम्येक° ].

यद्यत्र नाथ प्रविहाय राज्यं तपःक्रियायां मतिमादधीथाः ।
समं त्वयैवात्र तपश्चरित्वा संसारनिष्ठामभिसंव्रजामः ॥ १०६

इति नृपवनिता नृपेण सार्धं
प्रविकसितोत्पलचारुपत्रनेत्राः ।
भुवि सुखमपहाय ताश्च सद्य-
स्तपसि मनांसि समादधुर्वराङ्ग्यः ॥ १०७

अथ जिगमिषुतां नृपस्य बुद्ध्वा
नरपतयः परितः समेत्य तूर्णम् ।
ददृशुरधिकसंभ्रमा नरेन्द्रं
त्रिदशपतिं त्रिदशा इव प्रशान्तम् ॥ १०८

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
तारादर्शननिमित्ते राज्यभोगनिर्वेगो
नामाष्टाविंशतितमः सर्गः ।

---

## [ एकोनत्रिंशः सर्गः ]

श्रीधर्मसेनप्रमुखा नरेन्द्रा वयोऽनुरूपोज्ज्वलचारुभूषाः ।
सभागृहे रम्यतमे विशाले वराङ्गराजेन सुखं निषेदुः ॥ १
पिता वराङ्गस्य नरेन्द्रमध्ये स्नेहेन सद्भावपुरस्सरेण ।
परामृशंस्तस्य करं करेण प्रोवाच सान्त्वावचनीयमर्थम् ॥ २
राज्यं त्वदायत्तमिदं हि सर्वमाधारभूतस्त्वमिह प्रजानाम् ।
विशेषतो मे नयनं तृतीयं बहिश्चरप्राण इव द्वितीयः ॥ ३

माता च पत्न्यस्तव पुत्रकाश्च प्राणान्त्ययेऽरं[1] कथमत्र वत्स ।
त्वयि प्रयातेऽहमतोऽभियाचे नास्मद्वचो लङ्घितुमर्हसि त्वम् ॥ ४
विना शशाङ्केन नभो न भाति विना मघोना न विभासते द्यौः ।
विना दयां धर्मपथे[2] न भाति न भाति राज्यं च विना त्वयेदम् ५
भारो यथादौ सुकरः प्रवोढुं पश्चादशक्यः स तु गौरवेण ।
एवं तपःश्रीः सुकरावधर्तुं सुदुर्धरत्वं च शनैः प्रयाति ॥ ६
आरोहणाद्भारवतो नरस्य दोर्भ्यामपाराम्बुनिधिप्रतारात् ।
सरित्प्रवेगे प्रतियातनोऽपि[3] तपोऽतिकष्टं सुखमास्स्व पुत्र ॥ ७
स्मरानलार्चिःप्रतिदग्धवीर्या भृशन्ति[4] तिर्यग्मनुजासुरेन्द्राः ।
तं कामवह्निं शमितुं कुतस्त्वं शक्नोति[5] पञ्चेन्द्रियगोचरस्थः ॥ ८
वयं च सद्धर्ममथार्हतां हि वुद्ध्वापि तत्कर्तुमशक्नुवन्तः ।
गृहेषु जीर्णा विषये प्रसक्ताः[6] पुनस्तपस्ते विषमं प्रकर्तुम् ॥ ९
मास्मत्वरिष्टाः[7] कुरु धीर राज्यं जयारिवर्गान्विषयान्भजस्व ।
सहैव गत्वा च तपोवनानि तपश्चरिष्याम इहेत्यवोचत् ॥ १०
यथोपनीतक्रममादरेण निशम्य वाक्यं पितुरायतश्रीः ।
वराङ्गराजः स्थितधर्मचित्तः प्रत्यब्रवीदात्महिताय धीमान् ॥ ११
धर्मार्थकामागमसाधनानि व्रजन्ति पूतां सुतरां प्रसिद्धिम् ।
तान्येव तत्साधनसत्क्रियाभिर्विपत्तिमायान्ति गते युवत्वे ॥ १२
विशीर्णदन्तः शिथिलाङ्गसन्धिः कम्पच्छिरश्चञ्चलपाणिपादः ।
कराग्रदण्डो जरसा परीतः कथं तपस्तप्यति मन्दचक्षुः ॥ १३
नष्टश्रुतिर्लुप्तशरीरचेष्टः स्खलत्पदव्याकुलमन्दवाक्यः ।
क्षीणेन्द्रियः क्षीणबलः क्षितीश श्रुतार्णवान्तं कथमभ्युपैति ॥१४

१ [ प्राणात्ययेरन्, °न्वहेरन् ]. २ [ धर्मपथो ]. ३ [ प्रतियानतोऽपि ]. ४ [ भ्रश्यन्ति ]. ५ [ शक्नोषि ]. ६ क प्रशस्ता. ७ [ मा त्वं त्वरेथाः ].

गृहाद्बहिर्यातुमशक्तिमान्यो यात्वा पुनर्नैव निवर्तितुं वा ।
तादृग्विधः कायपरिग्रहस्य स्थानावियोगस्य च किं समर्थः ॥१५
भित्वार्गलं यान्ति चिरं वनान्तं यथा गजा वारयितुं न शक्याः ।
गृहार्गलं तद्वदहं विभिद्य व्रजामि मान्धी वैर[1] एष याचे ॥ १६
बहिर्ययासु[2]र्भवनात्प्रदीप्तात्क्षिपत्यरातिः पुनरेव तत्र ।
दुःखानलादेवमभिप्रयाँतु[3]मापीपतः पार्थिव शत्रुवन्माम् ॥ १७
क्षुब्धार्णवाद्दुर्गतिवीचिजालात्कृच्छ्रेण कूलान्तमुपागतं तम् ।
नुदत्यरातिस्तु यथैव तत्र मा नूनुदः संसृतिसागरे माम् ॥ १८
सुवर्णपात्रे परमान्नमिष्टं बुभुञ्ज्य[4]मानस्य विषं ददाति ।
यथा तथा राज्यविषं ददाति[5] धर्मामृतं भूमिप मे पिपासोः ॥१९
शुभक्रियाणां च विघातको यः पापक्रियाणां च सहायभूतः ।
स एव राजन्भवं[6]बद्धवैरो रिपो[7]र्श्चँ कष्टं त्वतुलो न शत्रुः ॥ २०
रिपुः कदाचि[8] [⏑⏑] दर्थमङ्गं बलं यशो वेह निहन्ति वा न ।
धर्मस्य ये विघ्नकरा नृशंसा निघ्नन्ति ते जन्मसहस्रसौख्यम् २१
आयुर्बलारोग्यवपुर्वयांसि प्रणश्वराणि क्षणिकं शरीरम् ।
धनानि विद्युद्वपुषा समानि द्वितीय एषोऽपि महांस्तु दोषः २२
राज्यं हि राजन्बहुदुःखबीजं चित्ताकुलं व्याकृति[9]शोकमूलम् ।
वैरास्पदं क्लेशसहस्रमूलं किंपाकपाकप्रतिमं तदन्ते ॥ २३
दुरन्तता राज्यधुरंधराणां धर्मस्थितानां सुखभागिनां च ।
विजानतः साधु[10]समुत्थितस्य कथं रतिः स्यान्मम राज्यभोगे २४

१ [ त्वां धीवर ]. २ [ बहिर्यियासुं ]. ३ [ °प्रयात° ]. ४ [ बोभुज्य° ].
५ [ ददासि ]. ६ म °बद्धवैरी. ७ [रिपुश्च...नु शत्रुः ]. ८ क. कदाचिदर्थं°.
९ म व्याकृति° १० क. °समस्थितस्य, [ °समं स्थितस्य ].

निरुक्तैरस्तैर्मधुरार्थगर्भैः सहेतुकैर्भूमिभुजो हि मध्ये ।
मनोहरैर्भूमिपतिर्वचोभिः प्रबोधयां तं पितरं बभूव ॥ २५
प्रवृद्धवैराग्यरसोदयस्य विशुद्धदृष्टेरविकम्पितस्य ।
पिता स्वपुत्रस्य वचो निशम्य प्रसन्नबुध्द्या तमुवाच वाचम् २६
सर्वान्तरायानतिलङ्घ्य वत्स धर्मान्तरायो[2] गुरुतामुपैति ।
जानन्नपि स्नेहपरायणत्वाद्बलादवोचं परिणामतिक्तम् ॥ २७
यदि प्रमादात्मनि मोहतो वा स्वकर्मणां गौरवतोऽतिरागात् ।
न्यायादपेतं वचनं यदस्ति क्षमस्व तत्सर्वमुदारबुद्धे ॥ २८
आबाल्यतः शान्ततमस्य तस्य धर्मानुरागोद्यतसत्क्रियस्य ।
सुनिश्चितां तामवगम्य बुद्धिं मुमोच कृच्छ्रात्तनयं महीन्द्रैः[3] ॥ २९
तथैव पौरान्स्वजनाङ्गनांश्च सेनापतिश्रेष्ठिगणप्रधानान् ।
स्वमातरं कृच्छ्रतरान्नृसिंहो विमोचयामास यथाक्रमेण ॥ ३०
आहूय तं पुत्रवरं विनीतं सुगात्रनामानमनङ्गरूपम् ।
निवेश्य पार्श्वे विनयाद्विनम्रं मध्ये नृपाणामिदमित्युवाच ॥ ३१
मातामहोऽयं तव संनिविष्टः पितामहस्त्वेष गुणैर्गरीयान् ।
गुरुद्वयस्यास्य नृपोत्तमस्य कुरुष्व शुश्रूषणमात्मशक्त्या ॥ ३२
वृद्धान्गुरून्प्राज्ञतमानुदारान् दयापरानार्यकलांश्च नित्यम् ।
विश्रम्भपूर्वं मधुरैर्वचोभिर्मन्यस्व मान्यानथ मानदानैः ॥ ३३
अरातिवर्गान्विजयस्व नीत्या दुष्टानशिष्टांश्च सदा प्रशाधि ।
कृतापराधान् शरणागतांस्तान् रक्ष स्वपुत्रानिव सर्वकालम् ३४
पङ्ग्वन्धमूकान्बधिरान्स्त्रियश्च क्षीणान्दरिद्रानगतीननाथान् ।
श्रान्तान्सरोगांश्च विधूष्व सम्यक्पराभिभूतान्परिपालयस्व ॥३५

---

१ म पुत्राः. २ म धर्मान्तराये. ३ म महेन्द्रः.

धर्माविरोधेन समर्जयार्थानर्थाविरोधेन भजस्व कामान् ।
कामाविरोधेन कुरुष्व धर्मं सनातनो लौकिक एष धर्मः ॥३६
दातव्यमित्येव जनाय चित्तं प्रदेहि सन्मानपुरस्सरेण ।
भृत्यापराधानविगण्य वत्स क्षमस्व सर्वानहमीशतेति ॥ ३७
निवद्धवैरानतिदोषशीलान्प्रमादिनो नीतिवहिष्कृतांश्च ।
चलस्वभावान्व्यसनान्तरांश्च जहाति लक्ष्मीरिति लोकवादः ॥३८
अदीनसत्त्वान् क्रियया समेतान् श्रुतान्वितान्क्षान्तिदयोपपन्नान् ।
सत्येन शौचेन दमेन युक्तानुत्साहिनः श्रीस्स्वयमभ्युपैति ॥ ३९
भृत्यांश्च मित्राण्यथ कोशदण्डानमात्यवर्गाञ्जनतां च दुर्गान् ।
बुधैश्च पूजां यदि वाञ्छसि त्वं कुर्वात्मनात्मानमतीव पात्रम् ॥४०
भूयोऽर्हतां शासनमागमस्थान्सज्ज्ञानचारित्रतपोविशुद्धान् ।
चतुर्विधं संघमथात्मशक्त्या भजस्व सन्मानय सादरेण ॥ ४१
गुणैरुपेता गुरवो वहुज्ञा ये शिष्ययन्त्यात्मसुतान् हिताय ।
सतत्त्वसर्वं वहु शिष्ययित्वा समर्पयामास सुतं गुरुभ्यः ॥ ४२
ततो नृपैर्मन्त्रवरप्रधानैः सामन्तमुख्यैरभिषिच्य सार्धम् ।
ववन्ध पट्टं स्वयमेव राजा प्रजाहितार्थं कुलवृद्धये च ॥ ४३
मुक्तावलीं रत्नपरीतमध्यां कण्ठे च देवेन्द्रधनुर्विचित्राम् ।
सूर्यप्रभाहेपितसत्किरीटं निधाय पुत्रस्य हि मूर्ध्नि तस्य ॥ ४४
श्वेतातपत्रं शरदभ्रशुभ्रं दधार भास्वद्वरहेमदण्डम् ।
अष्टार्धसच्चामरहेममूलं व्युत्क्षेपयामास स सुन्दरीभिः ॥ ४५
तेषां तु मध्ये वसुधाधिपानां स्वबाहुवीर्योर्जितसद्गुणानाम् ।
रेजे सुगात्रो नवराज्यलक्ष्म्या कान्त्या ग्रहाणामिव शीतरश्मिः ४६

१ [ वित्तं ]. २ [ सर्वानहमीशितेति ]. ३ [ शिक्षयन्त्यात्म ]. ४ [ शिक्ष-यित्वा ]. ५ क सत्किरीटं. ६ क हेमनालं.

नेदुः समन्ताद्बृहदभ्रनादा मृदङ्गभेरीपटहाः सशङ्खाः ।
उत्कृष्टनादां जनतां चकार लब्धेश्वरा भूवनिता तुतोष ॥ ४७
ततो नृपो निर्वृतिसौख्यरागः स्वपुत्रसंक्रामितराज्यभारः ।
विमुक्तसंगः स्वजनेन सार्धं जगाम तूर्णं जिनदेवगेहम् ॥ ४८
तत्रार्हतामप्रतिशासनानामष्टाह्निकां शिष्टजनैश्च जुष्टाम् ।
यमोपवासव्रतयन्त्रितात्मा चकार पूजां परया विभूत्या ॥ ४९
पूजावसाने प्रतिमापुरस्तात् स्थित्वा महीन्द्रः सुविशुद्धलेश्यः ।
स्तुत्वा जिनानां तु गुणानुदाराञ्जग्राह शेषां मुदितान्तरात्मा ५०
स्तोत्रावसाने प्रणिपत्य देवान्प्रदक्षिणीकृत्य जिनेन्द्रगेहम् ।
आरुह्य राजा शिविकामनर्घ्यां दिवाकरांशुद्युतिहारिणीं ताम् ५१
अत्युच्छ्रितैः केतुभिरुज्ज्वलाङ्गैः सितातपत्रैर्वरचामरैश्च ।
ध्वजैरनेकैर्नयनाभिरामैर्गच्छन्बभौ शक्र इवावनीन्द्रः ॥ ५२
मृदङ्गशब्दैः पटहस्वनैश्च शङ्खप्रणादैर्गजवाजिघोषैः ।
पुण्यैर्वचोभिर्वरमागधानामभूद्ध्वनिः क्षुब्धसमुद्रतुल्यः ॥ ५३
पौरैर्जनैर्वर्षचरैरमात्यैः सामन्तवर्गैर्नृपपुङ्गवैश्च ।
पदातिनागाश्वरथाधिरूढैर्वृतो गृहेभ्यो निरगान्नरेन्द्रः ॥ ५४
रथैश्च काश्चिद्वरवाजियानैर्मनोहराभिः शिविकाभिरन्याः ।
धर्मक्रियायां विनिवेश्य बुद्धिं नृपाङ्गना भूपतिनैव याताः ॥ ५५
नृपं प्रयातं प्रसमीक्ष्य केचिद्धर्मप्रियाः पौरजनाः प्रहृष्टाः ।
केचित्पुनर्मोहमहातमोऽन्धा दुर्बुद्धयोऽत्यल्पतमा निनिन्दुः ॥ ५६
मत्स्यामिषाभ्यां च यथा शृगालः प्रवञ्चितो लोभतया विमूढः ।
यथा च नारी युवरूपलब्धा भ्रष्टोभयाभ्यां पतितस्कराभ्याम् ५७

---

१ [ °नादाञ्जनता ]. २ [ °वर्षधरै° ]. ३ म °लब्धा.

तथा नरेन्द्रो विपुलांश्च भोगान्प्रत्यक्षभूतं प्रविहाय बालः ।
परोक्षमिच्छन्सुरसौख्यमोक्षं प्रवञ्च्यते जम्बुकपुंश्चलीवत् ॥ ५८
स्वर्गोऽस्ति नास्तीति कथं हि शक्यं श्रद्धानुसज्ज्ञानवचां वयो यत्
इतो गतो वा तत आगतो वा पुमान्यदि स्यात्तदिह प्रमाणम् ५९
विमुच्य हस्तागतमर्थकज्ञो वनेऽन्यमर्थं मृगयेति कश्चित् ।
इदं हि राज्यं प्रविसृज्य वाञ्छेददृश्यमिन्द्रत्वमवाप्तुमज्ञः ॥ ६०
सुसिद्धमन्नं प्रविहाय कश्चित्पुनः प्रपक्तुं घटते विचेताः ।
स्याद्वा न वा संशयितुं तदन्नं राज्यं तथा सिद्धमसिद्धमैन्द्रम् ॥६१
पञ्चेन्द्रियाणां विषयाश्च पञ्च ते सेवितव्या इति सत्प्रवादः ।
सत्स्विन्द्रियेष्वर्थतमेषु सत्सु किमन्यमर्थान्तरमार्गयेद्वा ॥ ६२
अहो नृपोऽयं निरपेक्षितार्थो व्यामोहितात्मा बत किं करोति ।
न कश्चिदस्यात्महितस्य वक्ता बन्धुः सखा वा खलु विद्यतेऽत्र ६३
इत्येवमादीनि वचांस्यथोच्चैः प्रभाषमाणानफलानभार्यान् ।
भद्राः प्रकृत्या श्रुतधर्मतत्त्वा विलोक्य तेभ्यः पुनरित्थमूचुः ॥ ६४
धर्मात्सुखैश्वर्यधनानि लोके लभन्त इत्येव कथा ततान ।
कुतो भवन्तः समुपागता वा जडा वराका श्रुतिबाह्यभूताः ॥ ६५
शालीक्षुगोधूमयवादिधान्यं बीजाद्विना नाङ्कुरतामुपैति ।
तपोमयं बीजमथायनीयैः स्वर्मोक्षसौख्यं लभते न कश्चित् ॥ ६६
पूजा तपः शीलमपि प्रदानं चत्वारि बीजानि सुखस्य लोके ।
उप्त्वा नरास्तानि महीतलेऽस्मिन् क्रमेण धीराः सुखभागिनः स्युः

१ [°भूतान्प्रविहाय]. २ क °वर्चा चचो, [°वर्तां वचो]. ३ [°गतमर्थ-मज्ञो, °गतमर्थकं यो]. ४ [मृगयेत]. ५ म स्याद्वाद्वासंशयितुं. ६ [संशयितुं]. ७ [°मार्गयेद्वा]. ८ [°फलानभद्रान्]. ९ [बीजमथायनीय].

निरुत्तरैस्तैर्मधुरार्थगर्भैः सहेतुकैर्भूमिभुजो हि मध्ये ।
मनोहरैर्भूमिपतिर्वचोभिः प्रबोधयां तं पितरं बभूव ॥ २५
प्रवृद्धवैराग्यरसोदयस्य विशुद्धदृष्टेरविकम्पितस्य ।
पिता स्वपुत्रस्य वचो निशम्य प्रसन्नबुद्ध्या तमुवाच वाचम् २६
सर्वान्तरायानतिलङ्घ्य वत्स धर्मान्तरायो गुरुतामुपैति ।
जानन्नपि स्नेहपरायणत्वाद्बलादवोचं परिणामतिक्तम् ॥ २७
यदि प्रमादात्मनि मोहतो वा स्वकर्मणां गौरवतोऽतिरागात् ।
न्यायादपेतं वचनं यदस्ति क्षमस्व तत्सर्वमुदारबुद्धे ॥ २८
आबाल्यतः शान्ततमस्य तस्य धर्मानुरागोद्यतसत्क्रियस्य ।
सुनिश्चितां तामवगम्य बुद्धिं मुमोच कृच्छ्रात्तनयं महीन्द्रः ॥ २९
तथैव पौरान्स्वजनाङ्गनांश्च सेनापतिश्रेष्ठिगणप्रधानान् ।
स्वमातरं कृच्छ्रतरान्नृसिंहो विमोचयामास यथाक्रमेण ॥ ३०
आहूय तं पुत्रवरं विनीतं सुगात्रनामानमनङ्गरूपम् ।
निवेश्य पार्श्वे विनयाद्विनम्रं मध्ये नृपाणामिदमित्युवाच ॥ ३१
मातामहोऽयं तव संनिविष्टः पितामहस्त्वेष गुणैर्गरीयान् ।
गुरुद्वयस्यास्य नृपोत्तमस्य कुरुष्व शुश्रूषणमात्मशक्त्या ॥ ३२
वृद्धान्गुरून्प्राज्ञतमानुदारान् दयापरानार्यकलांश्च नित्यम् ।
विश्रम्भपूर्वं मधुरैर्वचोभिर्मन्यस्व मान्यानथ मानदानैः ॥ ३३
अरातिवर्गान्विजयस्व नीत्या दुष्टानशिष्टांश्च सदा प्रशाधि ।
कृतापराधान् शरणागतांस्तान् रक्ष स्वपुत्रानिव सर्वकालम् ३४
पङ्ग्वन्धमूकान्बधिरान्स्त्रियश्च क्षीणान्दरिद्रानगतीननाथान् ।
श्रान्तान्सरोगांश्च विधृष्व सम्यक्पराभिभूतान्परिपालयस्व ॥ ३५

१ म पुत्राः. २ म धर्मान्तराये. ३ म महेन्द्रः.

धर्माविरोधेन समर्जयार्थानर्थाविरोधेन भजस्व कामान् ।
कामाविरोधेन कुरुष्व धर्मं सनातनो लौकिक एष धर्मः ॥३६

दातव्यमित्येव जनाय चित्तं[1] प्रदेहि सन्मानपुरस्सरेण ।
भृत्यापराधानविगण्य वत्स क्षमस्व सर्वानहमीशतेति[2] ॥ ३७

निबद्धवैरानतिदोषशीलान्प्रमादिनो नीतिबहिष्कृतांश्च ।
चलस्वभावान्व्यसनान्तरांश्च जहाति लक्ष्मीरिति लोकवादः ॥३८

अदीनसत्त्वान् क्रियया समेतान् श्रुतान्वितान्क्षान्तिदयोपपन्नान् ।
सत्येन शौचेन दमेन युक्तानुत्साहिनः श्रीस्स्वयमभ्युपैति ॥ ३९

भृत्यांश्च मित्राण्यथ कोशदण्डानमात्यवर्गाञ्जनतां च दुर्गान् ।
बुधैश्च पूजां यदि वाञ्छसि त्वं कुर्वात्मनात्मानमतीव पात्रम् ॥४०

भूयोऽर्हतां शासनमागमस्थान्सज्ज्ञानचारित्रतपोविशुद्धान् ।
चतुर्विधं संघमथात्मशक्त्या भजस्व सन्मानय सादरेण ॥ ४१

गुणैरुपेता गुरवो बहुज्ञा ये शिष्ययन्त्यात्मसुतान्[3] हिताय ।
सतत्त्वसर्वं बहु शिष्ययित्वा[4] समर्पयामास सुतं गुरुभ्यः ॥ ४२

ततो नृपैर्मन्त्रवरप्रधानैः सामन्तमुख्यैरभिषिच्य सार्धम् ।
बबन्ध पट्टं स्वयमेव राजा प्रजाहितार्थं कुलवृद्धये च ॥ ४३

मुक्तावलीं रत्नपरीतमध्यां कण्ठे च देवेन्द्रधनुर्विचित्राम् ।
सूर्यप्रभाहेपितसत्किरीटं[5] निधाय पुत्रस्य हि मूर्ध्नि तस्य ॥ ४४

श्वेतातपत्रं शरदभ्रशुभ्रं दधार भास्वद्वरहेमदण्डम् ।
अष्टार्धसच्चामरहेममूलं[6] व्युत्क्षेपयामास स सुन्दरीभिः ॥ ४५

तेषां तु मध्ये वसुधाधिपानां स्वबाहुवीर्योर्जितसद्गुणानाम् ।
रेजे सुगात्रो नवराज्यलक्ष्म्या कान्त्या ग्रहाणामिव शीतरश्मिः ४६

१ [ वित्तं ]. २ [ सर्वानहमीशितेति ]. ३ [ शिक्षयन्त्यात्म ]. ४ [ शिक्ष-यित्वा ]. ५ क सत्किरीटं. ६ क हेममालं.

नेदुः समन्ताद्वृहदभ्रनादा मृदङ्गभेरीपटहाः सशङ्खाः ।
उत्कृष्टनादां जनतां चकार लब्धेश्वरा भूवनिता तुतोष ॥ ४७
ततो नृपो निर्वृतिसौख्यरागः स्वपुत्रसंक्रामितराज्यभारः ।
विमुक्तसंगः स्वजनेन सार्धं जगाम तूर्णं जिनदेवगेहम् ॥ ४८
तत्रार्हतामप्रतिशासनानामष्टाह्निकां शिष्टजनैश्च जुष्टाम् ।
यमोपवासव्रतयन्त्रितात्मा चकार पूजां परया विभूत्या ॥ ४९
पूजावसाने प्रतिमापुरस्तात् स्थित्वा महीन्द्रः सुविशुद्धलेश्यः ।
स्तुत्वा जिनानां तु गुणानुदाराञ्जग्राह शेषां मुदितान्तरात्मा ५०
स्तोत्रावसाने प्रणिपत्य देवान्प्रदक्षिणीकृत्य जिनेन्द्रगेहम् ।
आरुह्य राजा शिविकामनर्घ्यां दिवाकरांशुद्युतिहारिणीं ताम् ५१
अत्युच्छ्रितैः केतुभिरुज्ज्वलाङ्गैः सितातपत्रैर्वरचामरैश्च ।
ध्वजैरनेकैर्नयनाभिरामैर्गच्छन्बभौ शक्र इवावनीन्द्रः ॥ ५२
मृदङ्गशब्दैः पटहस्वनैश्च शङ्खप्रणादैर्गजवाजिघोषैः ।
पुण्यैर्वचोभिर्वरमागधानामभूद्ध्वनिः क्षुब्धसमुद्रतुल्यः ॥ ५३
पौरैर्जनैर्वर्षचरैरमात्यैः सामन्तवर्गैर्नृपपुङ्गवैश्च ।
पदातिनागाश्वरथाधिरूढैर्वृतो गृहेभ्यो निरगान्नरेन्द्रः ॥ ५४
रथैश्च काश्चिद्वरवाजियानैर्मनोहराभिः शिविकाभिरन्याः ।
धर्मक्रियायां विनिवेश्य बुद्धिं नृपाङ्गना भूपतिनैव याताः ॥ ५५
नृपं प्रयातं प्रसमीक्ष्य केचिद्धर्मप्रियाः पौरजनाः प्रहृष्टाः ।
केचित्पुनर्मोहमहातमोऽन्धा दुर्बुद्धयोऽत्यल्पतमा निनिन्दुः ॥ ५६
मत्स्यामिषाभ्यां च यथा शृगालः प्रवञ्चितो लोभतया विमूढः ।
यथा च नारी युवरूपलुब्धा भ्रष्टोभयाभ्यां पतितस्कराभ्याम् ५७

१ [ °नादाञ्जनता ]. २ [ °वर्षधरै° ]. ३ म °लब्धा.

तथा नरेन्द्रो विपुलांश्च भोगान्प्रत्यक्षभूतं प्रविहाय वालः ।
परोक्षमिच्छन्सुरसौख्यमोक्षं प्रवञ्च्यते जम्बुकपुंश्चलीवत् ॥ ५८
स्वर्गोऽस्ति नास्तीति कथं हि शक्यं श्रद्धानुसञ्ज्ञानवचां वयो यत्
इतो गतो वा तत आगतो वा पुमान्यदि स्यात्तदिह प्रमाणम् ५९
विमुच्य हस्तागतमर्थकज्ञो वनेऽन्यमर्थं मृगयेति कश्चित् ।
इदं हि राज्यं प्रविसृज्य वाञ्छेददृश्यमिन्द्रत्वमवाप्तुमज्ञः ॥ ६०
सुसिद्धमन्नं प्रविहाय कश्चित्पुनः प्रपक्तुं घटते विचेताः ।
स्याद्वा न वा संशयितुं तदन्नं राज्यं तथा सिद्धमसिद्धमैन्द्रम् ॥६१
पञ्चेन्द्रियाणां विषयाश्च पञ्च ते सेवितव्या इति सत्प्रवादः ।
सत्स्विन्द्रियेष्वर्थतमेषु सत्सु किमन्यमर्थान्तरमार्गयेद्वा ॥ ६२
अहो नृपोऽयं निरपेक्षितार्थो व्यामोहितात्मा वत किं करोति ।
न कश्चिदस्यात्महितस्य वक्ता वन्धुः सखा वा खलु विद्यतेऽत्र ६३
इत्येवमादीनि वचांस्यथोच्चैः प्रभाषमाणानफलानभार्यान् ।
भद्राः प्रकृत्या श्रुतधर्मतत्त्वा विलोक्य तेभ्यः पुनरित्थमूचुः ॥ ६४
धर्मात्सुखैश्वर्यधनानि लोके लभन्त इत्येव कथा ततान ।
कुतो भवन्तः समुपागता वा जडा वराका श्रुतिवाह्यभूताः ॥ ६५
शालीक्षुगोधूमयवादिधान्यं वीजाद्विना नाङ्कुरतामुपैति ।
तपोमयं वीजमथायनीयः स्वर्मोक्षसौख्यं लभते न कश्चित् ॥ ६६
पूजा तपः शीलमपि प्रदानं चत्वारि वीजानि सुखस्य लोके ।
उप्त्वा नरास्तानि महीतलेऽस्मिन् क्रमेण धीराः सुखभागिनः स्युः

१ [ °भूतान्प्रविहाय ]. २ क °वचां वचो, [ °वतां वचो ]. ३ [ °गतमर्थमज्ञो, °गतमर्थकं यो ]. ४ [मृगयेत ]. ५ म स्याद्वादवासंशयितुं. ६ [संशयितुं]. ७ [ °मापयेद्वा ]. ८ [ °फलानभद्रान् ]. ९ [ वीजमथायनीय ].

कान्तिद्युतिज्ञानविभूतियुक्तं सुखान्वितं धान्यधनान्वितं च ।
समीक्ष्यमाणोऽपि नरो नरं तं सुपुण्यवानेष इति ब्रवीति ॥ ६८
पुरार्जितश्रीस्तपसां फलेन इहोपभुङ्क्ते मनुजः सुखानि ।
कृत्वेह पुण्यानि महाफलानि सुरासुराणां कुरुते तदैश्यर्यम्[1] ॥ ६९
एवं च पूर्वार्जितपुण्यपाकादिमां विदित्वा नृपतां नरेन्द्रः ।
विहाय तां देवपतित्वमीप्सुर्वनं प्रयातीति च केचिदूचुः ॥ ७०
त्यजन्ति येऽर्थान्महतश्च भोगांस्त एव धन्याः पुरुषाश्च लोके ।
वयं पुनस्तानसतोऽप्यपुण्यास्त्यक्तुं न शक्ता इति केचिदूचुः ७१
किमास्महे स्वामिनि संप्रयाते वयं हि तेनैव सहाभियामः ।
इति प्रतिज्ञामभिगृह्य केचित्प्रारेभिरे गन्तुमदीनसत्त्वाः ॥ ७२
एवं हि पौरैरपरीक्षितार्थैः स्वचित्तसंकल्पितवाक्प्रलापैः ।
निगद्यमानो नृपतिर्जगाम पुराद्बहिर्निर्गतरागबन्धः ॥ ७३
पुरं क्रमेणाप्रतिधीर्व्यतीत्य वनं च नानाद्रुमपुष्पकीर्णम् ।
रक्तोत्पलैर्वाकुलिताभ्रवृन्दैर्नृपः प्रपेदे मणिमन्त्रसिद्धम्[2] ॥ ७४
तं पर्वतं ज्ञानतपश्चरित्रैर्विस्तीर्णकीर्तिर्मुनिरध्युवास ।
गणाग्रकेतुर्वरदत्तनामा सविग्रहो धर्म इव द्वितीयः ॥ ७५
स केवलज्ञानविशुद्धचक्षुर्महर्षिविद्याधरदेवतार्च्यः ।
धर्मामृतं भव्यजनाय यच्छन्बभौ मुनिर्मेरुरिवातितुङ्गः ॥ ७६
अदूरतस्तं समवेक्ष्य भूपाः स्ववाहनेभ्यस्त्ववतीर्य तूर्णम् ।
प्रदक्षिणीकृत्य विशुद्धभावा नेमुः शिरोभिर्मुनिसत्तमं तम् ॥ ७७
वराङ्गराजः शमितात्मरागः प्रणम्य पादौ वरदत्तनाम्नः ।
स्थित्वा पुरस्तादभिजातहर्षः कृताञ्जलिर्वाक्यमिदं जगाद ॥ ७८

१ म तदैश्वम्. २ क मणिमत्त्व°.

सर्वज्ञ सर्वार्चित सर्ववन्द्य सर्वाश्रमाणां परमाश्रमस्थ ।
शरण्यभूत त्रिजगत्प्रजानां संसारभीतः शरणागतोऽहम् ॥ ७९
चतुर्गतीनामसुखान्वितानां योनिष्वनेकासु चिरं भ्रमित्वा ।
दुःखान्यनेकान्यनुभूय तत्र श्रान्तो भवन्तं शरणागतोऽस्मि ॥ ८०
नालिङ्गितो यो रजसा कदाचिन्नोपप्लुतो जन्मवियोगशोकैः ।
मृत्योरनालीढपदप्रचारो नयस्व मां देशमृपे तमाशु ॥ ८१
ततो मुनीन्द्रस्तदनुग्रहायावदन्महामेघगभीरनादः ।
यथा सुखं त्वं विपयेपु राजन्नास्स्व प्रसाक्षीरिति संदिदेश ? ॥ ८२
विशुद्धजात्यादिसुदुर्लभत्वं सद्धर्ममार्गे प्रतिवोधनं च ।
विमुक्तिधर्माभिसुदुष्करत्वं सर्वं तदाचष्ट गणप्रधानः ॥ ८३
चेष्टाप्रधाना जगतः क्रियाश्च चेष्टावतां कर्म न चास्त्यसाध्यम् ।
चेष्टस्व तस्माल्लभते[१] यदिष्टं स्वर्गादिकं मोक्षसुखावसानम् ॥ ८४
विशालवुद्धिः श्रुतधर्मतत्त्वः प्रशान्तरागः स्थिरधीः प्रकृत्या ।
तत्याज निर्माल्यमिवात्मराज्यमन्तःपुरं नाटकमर्थसारम् ॥ ८५
विभूपणाच्छादनवाहनानि पुराकरग्राममडम्बखेडैः ।
आजीवितान्तात्प्रजहौ स वाह्यमभ्यन्तरांस्तांश्च परिग्रहाद्यान् ॥ ८६
अपास्य मिथ्यात्वकपायदोपान्प्रकृत्य लोभं स्वयमेव तत्र ।
जग्राह धीमानथ जातरूपमन्यैरशक्यं विपयेपु लोलैः ॥ ८७
अन्येऽपि सामन्तनृपा महान्तः कौटम्बिकाश्च[२] द्विजसार्थवाहाः ।
नरेन्द्रभक्त्यार्पितमानसास्ते प्रवव्रजुस्तत्र सहैव राज्ञा ॥ ८८
नरेन्द्रदत्तो वसुमान्वनेशोऽप्यनन्तचित्रौ च मतिप्रगल्भाः ।
प्रवव्रजुः स्वाम्यनुरागवद्धा वणिग्वराः सागरवृद्धिमुख्याः ॥ ८९

१ [ लभसे ]. २ [ कौटुम्बिकाश्च ].

ये भूमिपालाः सुकुमारगात्रा विचित्रभोगप्रतिबद्धसौख्याः ।
राज्यानि संत्यज्य महर्द्धिवन्ति कुर्वन्ति चैतेऽपि तपांसि धीराः ९०
वयं प्रकृत्या विभवैर्विहीना नित्यं परप्रेपणतत्पराश्च ।
विशेपतः साधु तपश्चराम इत्येवमुक्त्वा हि परे प्रजग्मुः ॥ ९१
क्षितीन्द्रपत्न्यः कमलायताक्ष्यो विचित्ररत्नप्रविभूपिताङ्ग्यः ।
परीत्य भक्त्यार्पितचेतसस्ता नमः[1]प्रकुर्वन्मुनयो प्रहृष्टाः ॥ ९२
ततो हि गत्वा श्रमाणार्जिकानां समीपमभ्येत्य कृतोपचाराः ।
विविक्तदेशे विगतानुरागा जहुर्वराङ्ग्यो वरभूपणानि ॥ ९३
गुणांश्च शीलानि तपांसि चैव प्रबुद्धतत्त्वाः सितशुभ्रवस्त्राः ।
संगृह्य सम्यग्वरभूपणानि जिनेन्द्रमार्गाभिरता बभूवुः ॥ ९४
मन्त्रीश्वरामात्यपुरोहितानां पुरप्रधानर्द्धिमतां गृहिण्यः ।
नृपाङ्गनाभिः सुगतिप्रियाभिर्दिदीक्षिरे ताभिरमा तरुण्यः ॥ ९५

इति नृपतिरपास्य राज्यभारं
व्रतगुणशीलतपांसि संबभार ।
प्रमुदितमनसश्च राजपत्न्यः
परमतपांस्यभिदध्रिरे हिताय ॥ ९६
नृपनृपवनिताभिरुज्झितानि
वरमकुटाङ्गदहारकुण्डलानि ।
अवनितलमुपागतानि रेजुः
कुरुपु यथा तरुजानि भूपणानि ॥ ९७
नवशरदि भृशं सुपूर्णचन्द्रो
व्यपगतमेघमलीमसाश्च तारा ।

१ [ प्रचक्रुर्मुनये ].

ग्रहणमिह ता[1]मलेवछर्द्याः
प्रतिविरराज मही विभूषणैस्तैः ॥ ९८
यतिपतिमभिवन्द्य सादरास्ते तदनु मुनीन्नवसंयतांश्च भक्त्या ।
नरवरवनिता विमुच्य साध्वीशमुपययुः स्वपुराणि भूमिपालाः ९९

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
वराङ्गदीक्षाधिकारो
नामैकोनत्रिं[2]शतितमः सर्गः ।

---

## [ त्रिंशः सर्गः ][3]

गतेषु तेषु प्रियबान्धवेषु स्वेभ्यः पुरेभ्यो मुनिसंकथाभिः ।
दीक्षां प्रपन्ना[4] जहपुर्नृसिंहा वारीविमुक्ता इव मत्तनागाः ॥ १
निरस्तभूषाः कृतकेशलोचाः प्रसन्नबुद्धीन्द्रियशुद्धभावाः ।
धर्मानुरक्ता मुनिराजपार्श्वं प्रपेदिरे साञ्जलयो यथार्हम् ॥ २
उपाश्रितांस्तान्कृतमूर्ध्निहस्तान्विलोक्य साधून्विगतेन्द्रियाशान् ।
स्वभावतो भव्यजनानुकम्पी व्रतोपदेशं कथयांबभूव ॥ ३
स्थानानि जीवस्य चतुर्दशानि तथैव हि स्थातुचरिष्णुतां च ।
सम्यक्त्वमिथ्यात्वविमिश्रितत्वं शशंस सम्यक्त्व[5]फलं यतिभ्यः ॥४
दण्डांस्त्रिगुप्तीं[6]श्च चतुष्कषायान्द्रव्याणि षड्जीवनिकायभेदाः[7] ।
दशप्रकारं श्रमणेन्द्रधर्मं तेभ्यः समाचष्ट समाहितेभ्यः ॥ ५

---

१ [ ताम्रलेप° ]. २ [ °त्रिंशत्तमः ]. ३ क. म श्रीनेमिनाथाय नमोऽस्तु तुभ्यम् । नमोऽस्तु नारायणदर्पहारिणे ॥ ४ क. प्रसन्ना. ५ [ सम्यक्त्वफलं ]. ६ [ °गुप्तीश्च ]. ७ [ °भेदान् ].

सज्ज्ञानचारित्रगतिव्रतानि दशार्धभेदान्यवदत्स तेभ्यः ।
तपोविधिं द्वादशलक्षणं च संसारविच्छित्तिकरं समाख्यत् ॥ ६
संज्ञाश्चतस्रः करणानि पञ्च चेर्यापथादीन्समितीश्च पञ्च ।
आवश्यकाः षट्च षडेव लेश्या योगत्रयं चाप्यवदद्यथावत् ॥ ७
चतुर्विधन्यासपदप्रपञ्चं नयप्रमाणानि च मार्गणानि ।
अष्टप्रकारानुयोगभावांस्त्रिपञ्चकांश्चैव गुणप्रभेदान् ॥ ८
त्रिलोकसंस्थां[1]गतिमागतिं च स पुण्यपापास्रवसंवरांश्च ।
बन्धं च मोक्षं च[2] शिवप्रमेयं मुनिर्मुनिभ्यः कथयांबभूव ॥ ९
श्रुत्वा मुनीन्द्रोदितमप्रमेयमहीनसत्त्वाः शिवसिद्धिमार्गम् ।
शीलान्यथादाय महाव्रतानि सद्यस्तमाचारमधीयते स्म ॥ १०
ततः[3] सशान्तं शिवदत्तसंज्ञं दयापरं क्षा[4]न्तिमुदारवृत्तम् ।
आधारभूतं नवसंयतास्ते प्रपेदिरे संयमसाधनाय ॥ ११
ते भव्यसत्त्वा विदितार्थतत्त्वा जन्मान्तरे भावितमुक्तिमार्गाः ।
अनन्तवीर्याः श्रमणत्वमाप्ताः शिशिक्षिरे तच्च सुशिक्षितव्यम् १२
वराङ्गराजेन सह प्रयाताः समाहिताः क्षत्रियसंयतेन्द्राः ।
वैराग्यनिर्वेदपरायणास्ते प्रारेभिरे कर्मरिपुं विजेतुम् ॥ १३
ममत्वदेहप्रतिकारहीना न हि क्वचित्ते प्रतिबद्धरागाः ।
त्यक्तप्रमादा निरवद्यभावा समा बभूवुः प्रजने जने वा ॥ १४
त्रैलोक्यमप्येकमुहूर्तमात्रादुदीरितो नाशयितुं समर्थः ।
महाबलः क्रोधकषायमल्लः क्षमाबलेनाप्रतिमैर्निरस्तः ॥ १५
मानो महाशैल इवातितुङ्गः स मार्दवेनाप्रतिमेन जिग्ये ।
तथैव माया कुटिलस्वभावा जितेन्द्रियैश्चैव जितार्जवेन ॥ १६

१ [ °संस्थां ]. २ [मोक्षं शिवमप्रमेयं]. ३ [ ततश्च शान्तं ]. ४ [क्षान्त°].

लब्धास्पदः सर्ज इव प्रवृद्धः शाखोपशाखाप्रतिमानमूर्तिः ।
उ[1]न्मीलितो लोभकषायवृक्षः संतोषधृत्या क्रियविद्भिराद्यैः[2] १७
व्रणाः प्रशल्या[3] इव दुश्चिकित्स्या मिथ्यात्वमायासनिदानशल्याः ।
विमुक्तिमार्गाभिरतैरुदारैर्विवर्जितास्तै ऋषिभिर्विशेषात् ॥ १८
जिनेश्वराचार्यबहुश्रुतेषु संघे च धर्मे च जिनालये च ।
सम्यक्त्वचारित्रतपस्सु नित्यं भक्तिं प्रचक्रुस्तनुरागमोहाः ॥ १९
नैसर्ग्यमास्थाय[4] शुभप्रयोगा महर्षयो मन्दरसारधैर्याः ।
चकम्पिरे नैव परीषहेभ्यः प्रभञ्जनैस्तैरचला इवात्र ॥ २०
यथाजिभूमावरिसैन्यमुग्रं पुरा ममर्द स्वपराक्रमेण ।
परीषहारीन्विषयांस्त्रिदण्डांस्तथा ममर्दुर्[5]यतयो जिताशाः ॥ २१
अर्हद्वचःस्तम्भमुपागमय्य बध्वा तपोयोगमयैश्च पाशैः ।
मनोगजान्मानमदार्द्रगण्डान् ज्ञानाङ्कुशैस्ते[6] शमयांबभूवुः ॥ २२
दुष्टानिवाश्वानपथप्रपन्नान्पञ्चेन्द्रियाश्वान्विषयानुदारान् ।
संयम्य सम्यग्वररज्जुबन्धैर्महाधियस्ते स्ववशं प्रचक्रुः ॥ २३
यथा मदान्धाः करिणः प्रयोगैरुपायवन्तो वशमानयन्ति ।
तथेन्द्रियेभान् कुलजातिदृप्तान्[7] ज्ञानाङ्कुशेनात्मवशं प्रणिन्युः ॥२४
यथा पुरात्यन्तरदुष्टवर्गा[8]नपास्य राज्यं स्वमुखं प्रणिन्युः ।
तथैव रागादिरिपून्विजित्य सुखं निषण्णो मुनितामुपेत्य ॥ २५
शून्यालये देवगृहे श्मशाने महाटवीनां गिरिगह्वरेषु ।
उद्यानदेशे द्रुमकोटरे वा निवास आसीद्दपिसत्तमानाम् ॥ २६

१ [ उन्मूलितो ]. २ [ श्रुतविद्भिरार्यैः ]. ३ [ सशल्या ]. ४ [ दैसर्ग्य-मास्थाय ]. ५ क ममर्दुः. ६ क ज्ञानांकुशैः. ७ क °दैन्याः...दन्ताः. ८ [ पुरा-त्यन्तिकदुष्ट° ].

रात्रिंचरा भीमरवाः शकुन्ताः शार्दूलसिंहद्विपजम्बुकर्क्षाः ।
यत्राकुला भीमभुजंगमाश्च तत्रास वासो यतिपुङ्गवानाम् ॥ २७
वर्षासु शीतानिलदुर्दिनासु घोराशनिस्फूर्जथुनादितासु[1] ।
दिवानिशं प्रक्षरदम्बुदासु ते वृक्षमूलेषु निषेदुरार्याः ॥ २८
स्थलेषु निर्जन्तुषु वीतरागा निषद्य ते स्त्रीपशुवर्जितेषु ।
संसारनिस्सारदुरन्ततां च विचिन्तयामासुरनेकशस्ते ॥ २९
वने पुनर्भीमतमेऽन्धकारे शिवादिवान्धध्वनिरौद्ररूपे ।
जरारुजामृत्युभयातिभीता निद्रावशं रात्रिषु नैव जग्मुः ॥ ३०
धाराभिधौताङ्गमलाः सुलेश्याः खद्योतमालारचितात्ममालाः ।
विद्युल्लतावेष्टनभूषिताङ्गाः प्रज्ञाङ्गरागात्युपभोगशक्ताः ॥ ३१
हेमन्तकाले धृतिवद्धकक्षा दिगम्बरा ह्यभ्रवकाशयोगाः ।
हिमोत्करोन्मिश्रितशीतवायुं प्रसेहिरेऽत्यर्थमपारधैर्याः ॥ ३२
अस्पर्शयोगा मलदिग्धगात्राः प्रसारणाकुञ्चनकम्पहीनाः ।
उच्छ्वासनिःश्वासनिमेषलक्ष्याः[2] संततस्थिरं स्थाणुरिवाप्रकम्प्याः
भूतैः प्रभूतैः सपिपाससंघैः सडाकिनीभिः पिशिताशनीभिः ।
घोरैः पुनर्भीमरवानुकारैस्ते निश्चला[3] तस्थुरमा श्मशाने ॥ ३४
अस्नानभूरिव्रतयोगभाराः स्वेदाङ्गमासक्तरजःप्रलिप्ताः ।
निदाघसूर्याभिमुखा नृसिंहा व्युत्सृष्टगात्रा मुनयोऽभितस्थुः ३५
ऊर्ध्वो[4] दिवार्के प्रदहत्यभीक्ष्णं पार्श्वे च वायौ पौरुषे[5]ऽतिवाति ।
अधः पुनस्तप्तमहाशिलासु स्थित्वा प्रैठेकुर्घनकर्मकक्षम्[6] ॥ ३६
निदाघतीक्ष्णार्ककरप्रहारानुरस्स्वथादाय निरस्तपापाः ।
अस्तं प्रयाते च रवौ यतीशाः पराङ्मुखेरा विवनेवतेरुः[7] ॥ ३७

१ म °नादिकासु. २ क °लक्ष्म्या. ३ [ निश्चलं ]. ४ [ ऊर्ध्वं ]. ५ क पुरुषे°. ६ म प्रसेदकुर्घन°, [ प्रदेहुर्घन° ]. ७ [ विवरेऽवतेरुः ].

विशिष्टवातातपवर्षतृष्णाः क्षुद्व्याधिरोगारतिरोपणानि ।
प्रसेहिरे कर्मरजःक्षपाय महर्षयो मन्दरजःप्रकम्प्याः ॥ ३८
वीरासनस्वस्तिकदण्डशय्याः पल्यङ्कवज्रोत्कुटिकासना ये ।
स्थानव्रता मौनपराश्च धीरा महाद्रिकुक्षिष्वभिरेमिरे ते ॥ ३९
एवं तपःशीलगुणोपपन्ना व्रतैरनेकैः कृशतामुपेताः ।
अभग्नचर्याः स्थितसत्त्वसारास्तेपुः सुतीव्राणि तपांसि शूराः ४०
निवृत्तलोकव्यवहारिणस्ते जिनेन्द्रवाक्यानुनयप्रवीणाः ।
धर्मानुरागोद्यतधीरचर्या ध्यानैकताना: सततं बभूवुः ॥ ४१
तपोभिरापीडितसर्वगात्रा महर्षयो निश्चलमानसास्ते ।
पुरात्मसंक्रीडितकामभोगान्न चैव कांश्चिन्मनसा विदध्युः ॥ ४२
एकान्तशीला विगतान्तरौद्राः प्रशान्तरागाः श्रुतवीर्यसाराः ।
ध्याने पुनस्ते खलु धर्मशुक्ले दध्युः शुभे पापविनाशनाय ॥ ४३
जितेन्द्रियाश्च व्रतभूषिताङ्गाः क्षमाबलास्ते धृतिबद्धकक्षाः ।
दयार्थमेव प्रगृहीतसत्या महीं विजह्रुः समसौख्यदुःखाः ॥ ४४
ग्रामैकरात्रं नगरे च पञ्च समूपुरव्यग्रमनःप्रचाराः ।
ते किंचिदप्यप्रतिबाधमाना विहारकाले समिता विजह्रुः ॥ ४५
नैकप्रकाराकृतिजन्तुमालां चंचूर्यमाणां वसुधां मुनीन्द्राः ।
पीडां परप्राणिषु नैव चक्रुः पुत्रेषु मातेव दयालवस्ते ॥ ४६
यस्मिंस्तु देशेऽस्तमुपैति सूर्यस्तत्रैव संवासमुखा बभूवुः ।
यत्रोदयं प्राप सहस्ररश्मिर्यातास्ततोऽधा पुरि चाप्रसंगाः ॥ ४७
यत्रार्हतां जन्मपुराण्यभूवन्प्रवव्रजुर्यत्र च लोकनाथाः ।
यत्रैककैवल्यमभूदतुल्यं यत्रास निर्वाणमृषीश्वराणाम् ॥ ४८

१ [ ततो वायुरिवाल्पसंगाः ].

तांस्तांश्च देशानथ संविहृत्य विशुद्धवाक्कायमनःप्रयोगाः ।
समीक्षमाणाश्च तपोवनानि ववन्दिरे दुष्कृतपावनानि ॥ ४९
शय्यासनस्थानगतिक्रियासु निष्ठीवनोत्सर्गविधिष्वमूढाः ।
आदाननिक्षेपणभोजनेषु जन्तूनरक्षुः क्रियया समेताः ॥ ५०
नैष्ठुर्यपारुष्यनिरर्थकानि कार्कश्यपैशून्यविकारवन्ति ।
मर्मप्रहाराणि वचांसि वाचा न भाषमाणा यतयो विजह्रुः ॥५१
ससिंहविक्रान्तितवज्रमध्यान्भद्रोत्तरांश्चाम्लविवर्जितानि ।
चान्द्रायणाख्यप्रमुखानि सम्यगुपोपुरन्यानि च सत्तपांसि ॥५२
ते पारणां कर्तुमथ प्रविश्य बाह्यात्पुरस्य प्रतिसंनिवृत्ताः ।
कदाचिदन्तर्नगराच्चरुष्कादृथ्याप्रदेशात्त्रिकतश्च याताः ॥ ५३
एकान्तभिक्षां प्रविलभ्य याता भिक्षात्रयेण प्रतिमानिवृत्ताः ।
गृहेषु सप्तस्ववगृह्य केचिद्ग्रासार्धतोऽर्धोदरिणः प्रयाताः ॥ ५४
ग्रामान्तरोद्यानवनान्तरे च प्रथान्तरे घोषवति प्रदेशे ।
शिलान्तरे सैन्यनिवेशने च कान्तारदेशे जगृहुश्च भिक्षाम् ॥५५
संत्यज्य मृष्टाशनपानखाद्यं स्वाद्यानि वर्णेन्द्रियवर्धनानि ।
तपोऽभिवृद्ध्यै रसहीनमन्नं प्राभुञ्जताहं न च रात्रिभागे ॥ ५६
उत्पादनं चोद्गमनं सदोषं संयोजनं क्रीडकृतं पुराणम् ।
अज्ञातमन्नं हरितं त्वदृष्टं विवर्जितं तन्मुनिभिस्त्वयोग्यम् ॥ ५७
अस्वादुकं निर्लवणं विशुद्धं स्निग्धं च रूक्षं विरसं विवर्णम् ।
अशीतलं वाथ सुशीतलं वा ववलिभरे तच्च तपोऽभिवृद्ध्यै ॥५८
प्रतप्तलोहे पतितोऽम्बुबिन्दुर्यथा क्षयं तत्क्षणतोऽभ्युपैति ।
तथा विलिल्ये यतिभिः प्रभुक्तं कदन्नमप्यल्पतया शरीरे ॥ ५९

१ [ °चतुष्का° ]. २ [ पथान्तरे ].

अक्षस्य संरक्षणमात्रमन्नं ते भुञ्जते प्राणविधारणाय ।
प्राणाश्च ते धर्मनिमित्तमेव धर्मश्च निश्रेयसलब्धये सः ॥ ६०
सामान्यसत्काञ्चनशत्रुमित्रा मानावमानेषु समानभावाः ।
लाभे त्वलाभे सदृशा प्रयोगास्ते वीरचर्या यतयो बभूवुः ॥६१
अखण्डचारित्रमहाव्रतानामगूढवीर्योरुपराक्रमाणाम् ।
स्वकार्यसंपादनतत्पराणां कुतोऽपि नासीत्तपसि प्रसंगः ॥ ६२
तेषामृषीणां निरपेक्षकाणामनेकयोगव्रतभूरिभासाम् ।
क्लेशक्षयायैव समुत्थितानां तपोऽभिवृद्धिर्महती बभूव ॥ ६३
चतुर्थषष्ठाष्टमपक्षमासाचन्द्रायणाद्यैरुपवासयोगैः ।
आतापनैरभ्यवकाशवासैः सवृक्षमूलैः प्रतिमाप्रयोगैः ॥ ६४
तपोभिरत्युग्रतमैरुदारैः सत्त्वानुकम्पाव्रतभावनाभिः ।
संकल्प्यसंवार्धितधर्मरागैः कर्माणि तेषां तनुतामुपेर्दुः ॥ ६५
कर्मैस्तनुत्वं गतवत्सु तेषु महात्मनां सद्यशसां तपोभिः ।
गते पुनर्वर्षशते यतीनामृद्धिप्रवेका विविधा बभूवुः ॥ ६६
महर्द्धिभिर्नैकविधा निरीशा दुरासदाभिर्नृसुरासुरैश्च ।
प्रत्यक्षविज्ञानविभूतिभिश्च प्रभावयां जैनमतं बभूव ॥ ६७
अर्हत्प्रणीतागमदृष्टिसत्त्वाः सहेतुदृष्टान्तवचःप्रगल्भाः ।
नयप्रमाणप्रणिधिप्रवीणा विवादिनां वादमदं विनिन्युः ॥ ६८
केषांचिदक्षीणमहानसत्वं क्षीराश्रवत्वं वरकोष्ठबुद्धिः ।
संभिन्नता बीजपदानुसारा देवर्द्धिरिष्टैः सगुणस्वपेताः ॥ ६९
केषांचिदामर्शनमात्रमेव तथा परेषामथ विप्रुषन्तु ।
क्ष्वेलामलाश्चैव तपोधनानां सर्वं च भैषज्यमभून्परेषाम् ॥ ७०

१ [ सदृशप्रयोगा° ]. २ म °मगूढ°. ३ [ संकल्प° ]. ४ [ तनुतामुपेयुः ]. ५ [ कर्मस्वणुत्वं ]. ६ क क्षेला°.

केचिज्जले पुष्पदले च केचित्फलेषु पत्रेषु मरुस्थलेषु ।
श्रेण्यां च तन्तावथ जङ्घया च प्रयान्ति सम्यक्तपसः प्रभावात्
केचिद्वभूवुर्द्धिमहातपस्का उग्रैश्च दीप्तैश्च महातपोभिः ।
घोरैस्तथा घोरपराक्रमाश्च तपोऽधिकध्यानपराः कृतार्थाः ॥ ७२
विशिष्टनानर्द्धिगुणोपपन्ना महर्षयः क्षान्तिदयासमेताः ।
निदर्शनं तथ्यमभवत्परेषां धर्मार्थिनां भव्यजनोत्तमानाम् ॥ ७३

इत्येवं श्रुतविभवा महर्षयस्ते
सच्छीलव्रतगुणभावनाभिरिक्ताः[1] ।
त्यक्ताशाः स्थितमतयः प्रशान्तदोषा-
स्तीर्थानि प्रवरधियो बभूवुरुर्व्याम् ॥ ७४
संक्षेपात्पृथुयशसां तपांसि तेषां
प्रोक्तानि प्रथितमहागुणोदयानाम् ।
भूयोऽपि क्षितिपतियोषितां तपांसि
राजर्षेरमितगुणस्य चाभिधास्ये ॥ ७५

इति धर्मकथोद्देशे चतुर्वर्गसमन्विते ।
स्फुटशब्दार्थसंदर्भे वराङ्गचरिताश्रिते ॥
महर्षीणां तपोविधानवर्णनो नाम
त्रिशतितमः[2] सर्गः ।

---

१ [ °भिरक्ताः ]. २ [ त्रिंशत्तमः ].

## [ एकत्रिंशः सर्गः ]

नरेन्द्रपत्न्यः श्रुतिशीलभूषा निर्वेदसंवर्धितधर्मरागाः ।
विशुद्धिमत्यः प्रतिपन्नदीक्षास्तदा बभूवुः परिपूर्णकामाः ॥ १
दीक्षाधिराज्यश्रियमभ्युपेता अनर्घ्यसत्संयमरत्नभाजः ।
प्रीतिं परां प्रापुरदीनभावा दारिद्र्ययोपा इव रत्नलाभात् ॥ २
अर्थाननर्थप्रतिमान्विधिज्ञाः विषोपमांस्तान्विषयान्विदध्युः ।
ता मेनिरेऽरीनिव सांपरायांस्तत्त्वार्थदृष्ट्याहृतधर्मरागाः ॥ ३
व्रतानि शीलान्यमृतोपमानि दयादमौ मातृपितृत्वतुल्यौ ।
गुणा विशिष्टा वरभूषणेभ्यो ज्ञानं च दध्युर्नयनं तृतीयम् ॥ ४
ऐश्वर्यवीर्यद्युतिजातिवित्तैर्विज्ञानशिल्पैर्मदिरामदैश्च ।
पुरापि ता मुक्तिपथं प्रपद्य शान्ता बभूवुर्नरदेवपत्न्यः ॥ ५
तपोधनानाममितप्रभावा गणाग्रणी संयमनायिका सा ।
मुनीन्द्रवाक्याच्छ्रमणार्जिकाभ्यो दिदेश धर्मं च तपोविधानम् ६
ताश्च प्रकृत्यैव कलाविदग्धा जात्यैव धीरा विनयैर्विनीताः ।
आचारसूत्राङ्गनयप्रभङ्गानाधीयते स्माल्पतमैरहोभिः ॥ ७
महाबलानिन्द्रियकुञ्जरांस्तान् दर्पोच्छ्रितान्गर्वमदावलिप्तान् ।
वशं प्रपन्नान्विवशं प्रणिन्युर्वृद्धयङ्कुशैः क्षान्तिशिलानिशातैः ॥ ८
अनर्थसंपादनशक्तिमान्यो मनोमहादण्डधरो महात्मा ।
दूरंगमः प्रेरयितेन्द्रियाणां ताभिर्जितो मोहनृपाग्रयायी ॥ ९
वाक्कायचित्ते प्रणिधेः प्रयोगं क्षणेऽपि पापास्रवहेतुभूतम् ।
अनर्थकं तत्त्रिविधं गुणिन्यो नोचुर्न चक्रुर्न हि संस्मरंस्ते ॥ १०

---

१ [ गुणान्विशिष्टान् ], २ [ °शिल्पैर्मदिरा° ]. ३ क °नायका, [ °नायिका ]
४ क °निशान्तैः. ५ [ °शक्तिमान्यो ]. ६ क संस्मरंस्ते, [ संस्मरंस्ते ].

गणाग्रभूपाः पृथुशीलभारा विच्छिन्नकामाङ्कुरपुष्पवीजाः ।
स्वशक्तितः संपरिगृह्य योगं तनूनि ताः कर्मरजांसि चक्रुः ॥११
उपोष्य पञ्चत्रिपडष्टरात्रं पक्षश्च[1] मासानपि पट्चतुष्कान् ।
तपःकृशीभूतशरीरसंस्था आहारमाजह्रुरथाल्पमल्पम् ॥ १२
तपोऽग्निनिर्दग्धविवर्णदेहा व्रतोपवासैरकृशाः कृशाङ्ग्यः ।
विशीर्णवस्त्रावृतगात्रयष्टयस्ताः काष्ठमात्रप्रतिमा वभूवुः ॥ १३
पुरे वनेऽरातिजने जने वा मानापमानादिषु तुल्यभावाः ।
त्यक्तात्मसंगा निरवद्यचेष्टा धर्मानुरागा वसुधां विजह्रुः ॥ १४
यथा प्रसूता महतां कुलेषु यथैव वासन् भुवि राजपत्न्यः ।
यथैव विज्ञानपथं प्रपन्नास्तथैव शेप्तुः[2] सुतपांसि साध्व्यः[3] ॥ १५
अथैवमुक्तानि तपांसि तासां तपस्विनीनां वरशीलभासाम् ।
वराङ्गराजर्षितपोविधानं संक्षेपतस्तत्पृथगेव वक्ष्ये ॥ १६
विहाय राज्यश्रियमद्भुतश्रीस्तपःश्रियं संश्रयितुं कृताशः ।
निस्संगिनीं तां प्रतिपद्य दीक्षां जग्राह धीरः स महाव्रतानि १७
आचारमादौ समधीत्य धीमान्प्रकीर्णकाध्यायमनेकभेदम् ।
अङ्गानि पूर्वांश्च यथानुपूर्व्यामल्पैरहोभिः सममध्यगीष्ट ॥ १८
विधूय संकल्परतिप्रसंगं जिनेन्द्रवाक्याधिगतार्थतत्त्वः ।
नानाविधानं प्रतिगृह्य योगं तपश्चकारोग्रतपा महात्मा ॥ १९
सज्ज्ञानमत्तद्विरदाधिरूढो दयातपत्रोत्तमपट्टचिह्नः ।
सद्ध्यानचापेरितशीलवाणैर्विव्याध मोहारिमवार्यधैर्यः ॥ २०
चारित्रजात्यश्वमथाधिरूढः स धर्मवर्मा[4]वृतगात्रभूपः ।
विज्ञानकुन्तेन हि कर्मशत्रुं निपातयामास यतिर्विभिद्य ॥ २१

१ [ पक्षांश्च ]. २ [ तेपुः ]. ३ म साध्यः. ४ म °वर्मामृत°.

पञ्चेन्द्रियैरप्रतिलब्धवीर्यं रागानिलप्रेरितधूमजालम् ।
संकल्प्यसंवर्धितकामवह्निं ज्ञानाम्बुकुम्भैः शमयांबभूव ॥ २२
सम्यक्त्वतुङ्गव्रतनेमिवद्धं शीलोपलोत्तेजिततीक्ष्णधारम् ।
तपोऽनुग्रं वरधर्मचक्रं जघान संगृह्य हि कामशत्रुम् ॥ २३
कषायचोरान्विषयारिवर्गान्परीषहान्तःपरिमन्थितश्च ।
निर्वेदखड्गेन वलान्निगृह्य स खण्डशः कल्पितवाञ्छिताशः ॥ २४
उद्दामकामातिवलावलिप्तान्पञ्चेन्द्रियारण्यमतङ्गजांस्तान् ।
तपोऽर्गलैरप्रतिभिद्यरूपैः क्षमोरुवीर्यान्निरुरोध धीरः ॥ २५
स मानसानिन्द्रियदुष्टचोरान्सद्धर्मरत्नं प्रतिसंजिघृक्षुः ।
प्रज्ञातपःसंयमशृङ्खलाभिर्ववन्ध दुष्टानिव चोरवर्गान् ॥ २६
लोभोरुवैरान्सह रागभोगान्कामाशयान् क्रोधविपाग्रदंष्ट्रान् ।
इच्छास्फुटानिन्द्रियदुष्टसर्पान्दयाम्बुसेकैः शमयांबभूव ॥ २७
कूर्मो यथाङ्गानि निजे शरीरे स्पृष्टः पुनः संहरतेऽन्तरन्तः ।
तथैव संसारभयावकृष्टः स्वानीन्द्रियाण्यात्मनि संजहार ॥ २८
मोहातिरोगोद्भववातरोगं द्वेषाभिधानोद्भवपैत्तिकं च ।
तथैव हास्यानि च पञ्च धीमान्यमौषधैस्तान् शमयांबभूव ॥२९
कामोत्तरङ्गं रतिवेगतोयं कषायफेनं विषयोरुमत्स्यम् ।
अगाधसंसारमहार्णवं तं विशोषयामास तपोवलेन ॥ ३०
त्रिगुप्तिधारेण दयाप्रभासा चारित्रवेगातिसमीरितेन ।
सम्यक्त्ववज्रेण निहत्य धीमान्विचूर्णयामास स कर्मशैलम् ३१
अज्ञानतुम्बं विषयोरजानि मोहाभिरागप्रतिबद्धनेमिम् ।
कषायकृष्णायमतीक्ष्णधारं संसारचक्रं समनुजिगाय (?) ॥ ३२

१ [ संकल्प ]. २ क पासवह्नि. ३ म शीलोपलान्तेजित. ४ [ तपोऽरं ]. ५. [ परिपन्थिनश्च ]. ६ क दलान्विगृह्य. ७ म प्रमत्तौ. ८ क कृष्ट.

कषायवृक्षं विषयोरुकक्षं रागाम्बुसंवर्धितवल्लिगुल्मम् ।
ददाह संसारमहाटवीं तां तपोऽग्निना निष्कलुषान्तरात्मा ॥ ३३
यथा पुराभ्यन्तरदुष्टराशिं समूलका [–] विधिना चकार ।
तथा कषायप्रमुखान् दुरन्तान् धीरः समूलोद्धरणं चकार ॥३४
सम्यक्त्वचारित्रतपस्त्रिशूलैर्ध्यानावलीनो निशितैः सुतीक्ष्णैः ।
मनोवचःकायघनीकृतानि बिभेद मिथ्यापटलानि तानि ॥ ३५
क्रोधं ज्वलन्तं कृपया जिगाय मानं जिगायाप्रतिमार्दवेन ।
मायामृजुत्वेन जिगाय धीमान् लोभं विमुक्त्या मतिमान्विजिग्ये
शैलाग्रदुर्गान्तरकन्दरेषु नवैरगम्येषु च काननेषु ।
नदीतटस्थद्रुमकोटरेषु वने पितॄणामवसत्कदाचित् ॥ ३७
उद्यानमुत्कृष्टगृहान्तराणि तपोधनानां च पुनर्निवासान् ।
महाटवीं व्यालमृगाभिजुष्टां कदाचिदेको न्यवसन्नृसिंहः ॥ ३८
सद्ध्यानचारित्रतपःप्रकर्षैः प्रशान्तरागः प्रविधूतपाप्मा ।
विधिज्ञदेशे निरुपद्रवे च ज्ञानोपयोगं स मुनिश्चकार ॥ ३९
कदाचिदन्यैर्मुनिभिः प्रशान्तैः श्रुतार्णवान्तर्गतवद्भिरार्यैः ।
तपोऽधिकैर्धर्मधुरंधरैश्च सहोपविष्टः सुविशुद्धचेताः ॥ ४०
कदाचिदुन्मार्गनिरञ्जितानां दुर्वृत्तदुर्भाषणतत्पराणाम् ।
मिथ्यामहामोहतमोवृतानां चित्तप्रसादाय दिदेश धर्मम् ॥ ४१
कल्याणभाजां स कदाचिदीशो भव्यात्मनां भावितसत्कृतीनाम्
सद्धर्ममार्गश्रवणप्रियाणां हितोपदेशं प्रचकार धीमान् ॥ ४२
कदाचिदन्तर्गतशुद्धभावो विचित्रपञ्चेन्द्रियरागबन्धः ।
आस्थाय मौनव्रतमप्रकम्प्यस्तस्थौ स रात्रिप्रतिमामभीक्ष्णम् ४३

१ [ °महावनं तत् ]. २ म °मार्दनेन. ३ [ नरैरगम्येषु ]. ४ [ बद्धः ].

कदाचिदुत्कृष्टतपःप्रभावो विविक्तदेशे स चतुर्दिनानि ।
चतुर्मुखस्थानगृहीतयोगं निनाय निष्कम्पधृतिर्महात्मा ॥ ४४
कदाचिदुच्छृङ्गमहागिरीणां सूर्यांशुभिस्तप्तमहाशिलासु ।
प्रलम्बहस्तः समपादद्दष्टिस्तस्थौ महर्षिः स्वरजःक्षयाय ॥ ४५
कदाचिदाघूर्णितमण्डलानां सविद्युतां प्रक्षरतां घनानाम् ।
धाराभिधौताचलगात्रयष्टिस्तस्थौ महर्षिः स्वरजःक्षयाय ॥ ४६
कदाचिदाघूर्णितमण्डलानां सविद्युतां प्रक्षरतां घनानाम् ।
धाराभिधौताचलगात्रयष्टिस्तस्थौ रजन्यां स घनागमेषु ॥ ४७
गृही [⏑–][2] ग्योऽभ्यवकाशयोगो प्रवाति वातोयति शीतले च ।
तुषारपातातिविरूक्षिताङ्गः कदाचिदासैकमनःप्रविष्टः ॥ ४८
कदाचिदत्यर्थमहोपवासैश्चान्द्रायणाद्यैः प्रथितैरनेकैः ।
कृशीकृताङ्गो नियमैर्यमैश्च मुनिः प्रचक्रे सुतपोऽतिघोरम् ॥ ४९
जिनेन्द्रसूत्रोक्तपथानुचारी संयम्य वाक्कायमनांसि धीरः ।
सुदुर्धरं कापुरुषैरचिन्त्यं द्विषट्प्रकारं तप आचचार ॥ ५०
प्रसन्नभावात्तपसः प्रकर्षात्क्षमान्वितः स्वादशुभप्रणाशात् ।
अखण्डचारित्रवतो महर्षेरुत्पेदिरे तस्य हि लब्धयस्ताः ॥ ५१
सर्वौषधित्वं च महातपस्त्वं क्षीरास्रवत्वं च सचारणत्वम् ।
सुलभ्य लोकातिशयान्गुणौघान्सुखं विजह्रे भुवि वीतशोकः ॥५२
समाप्तयोगैः परिपक्वविद्यैर्विहर्तुकामैरविषण्णभावैः ।
दयात्मभिः साधुगणैरनेकैः क्षितिं विजह्रे स्वतपोऽभिवृद्ध्यै ५३
क्षान्त्या च दान्त्या तपसा श्रुतेन ऋद्ध्या च वृत्त्या व्रतभावनाभिः
प्रकाशयामास जिनेश्वराणां स शासनं शासनवत्सलत्वात् ॥५४

१ क धाराभि॰. २ क (॰तयो॰), [गृहीतयोग्यो॰]. ३ [॰ऽथवर्ति॰].
४ म ॰प्रकाशात्, [क्षमान्वितत्वात्सुत॰].

पुराणि राष्ट्राणि मटम्बखेटान् द्रोणीमुखान्खर्वडपत्तनानि ।
विहृत्य धीमानवसानकाले शनैः प्रपेदे मणिमत्तदेव ॥ ५५
तैः संयतैः सागरवृद्धिमुख्यैर्यथोक्तचारित्रतपःप्रभावैः ।
संन्यासतस्त्यक्तुमनाः शरीरं वराङ्गसाधुर्गिरिमारुरोह ॥ ५६
आरुह्य तं पर्वतराजमित्थं तपस्विभिः सार्धमुपात्तयोगैः ।
निर्वाणभूमौ वरदत्तनाम्नः प्रदक्षिणीकृत्य नमश्चकार ॥ ५७
पवित्रचित्तो गतरागवन्धः पल्यङ्कतस्तत्र निपद्य धीमान् ।
कृताञ्जलिः साधुगणान्समग्रान्क्षमध्वमित्येवमुवाच वाचम् ॥५८
अस्नानकण्डूव्रतमण्डिताङ्गैः प्रपण्डितैः पण्डितसाधुवर्गैः ।
प्रायोपयानं कृतवान्सहैव स पण्डितः पण्डितमृत्युमिच्छन् ॥ ५९
आजीवितान्तादशनादिभेदान्संसारसंवर्धनहेतुभूतान् ।
विहाय धीरः स तु मोक्षकाङ्क्षी कृतप्रतिज्ञः सुखमास तत्र ॥६०
अभ्यन्तरं वाह्यमपि प्रसंगं विमुच्य संक्लेशपदं सुधीमान् ।
द्वन्द्वैर्विमुक्तोऽप्रतिकारदेह आसीन्मुनिः संयमधाम्नि तस्मिन् ६१
स्वजीविताशां मरणानुरागं विहाय मित्रेषु ममत्वसंज्ञाम् ।
स चानुवद्धं वनिताकदम्वमभून्मुनिर्मुक्तिपथैकचेताः ॥ ६२
प्रणम्य पूर्वं तमरिष्टनेमिमरिष्टकर्माष्टकपाशमुक्तम् ।
शेषान् जिनेन्द्रानपि च प्रणम्य यथावदालोच्य मुनिः स तेभ्यः
उदन्मुखस्त्यक्तशरीरचेष्टः प्रसन्नवुद्धिः शमितान्तरात्मा ।
आराधनां तां च चतुष्प्रकारामाराधितुं प्रारभतानुसूत्रम् ॥ ६४
ज्ञानाश्रितां दर्शनकारिणीं च वहुप्रकारोग्रतपःश्रितां च ।
चारित्रभेदोपनिवन्धिनीं च प्रचक्रमे कर्तुमनुक्रमेण ॥ ६५

काले प्रधानैर्विनयप्रधानैस्सन्माननाचिह्नवशप्रयोगैः ।
ग्रन्थार्थयोरप्युभयप्रयोगैः साराधना ज्ञानविधिप्रणीता ॥ ६६
संध्यामहीकम्पतटित्प्रचारपर्वादिनिन्द्येषु च दुर्विनीताः ।
अध्यापनं चाध्ययनं च भूयो व्याम्रेडिताद्याः प्रतिपत्प्रदोषाः ६७
जीवादयो मोक्षपदावसाना भूतार्थतो येऽधिगताः पदार्थाः ।
नयप्रमाणानुगतक्रमेण सम्यक्त्वसंज्ञामिह ते लभन्ते ॥ ६८
अपोह्य शङ्कां विचिकित्सतां च काङ्क्षां निराकृत्य च वत्सलत्वम्
अमूढतास्थापनभावने च सद्दृष्टिलिङ्गान्युपगूहनं च ॥ ६९
शङ्का च काङ्क्षा मतिविप्लुता च परस्य दृष्टेरपि च प्रशंसा ।
भूयः सदानायतनस्य सेवा पञ्चातिचाराः खलु दर्शनस्य ॥७०
नित्याविरोध्युत्तमसंयमस्य खेदो महावाक्तनुमानसानाम् ।
पूर्वार्जितक्लेशविनाशहेतुस्तपः समुद्दिष्टमनाविलं च ॥ ७१
तद्द्विप्रकारं मुनिभिः प्रदिष्टं सान्तर्बहिर्भेदविशेषयुक्त्या ।
आध्यात्मिकं भेदमुपैति षोढा बाह्यं पुनः षड्विधमामनन्ति ७२
बहुप्रकारं हि तपोविधानं तद्विद्यमानाशयशुद्धिहेतोः ।
न्यांग्यं हि दोषान्यतमप्रकोपे विशेषभैषज्यविधानदृष्टम् ॥ ७३
रागात्मकानामुपवासयोगैर्गाढ्येषान्वितानां च विविक्तवासैः ।
षोढान्वितानां मुनिभिः प्रणीतो ज्ञानोपयोगः सततं तपस्त्वम् ७४
महाव्रतान्यप्रतिमानि पञ्च पञ्चैव सम्यक्समितिप्रयोगाः ।
त्रिगुप्तयो या अवशं विधात्र्यश्चारित्रमेतत्सकलं मुनीनाम् ॥ ७५
ईर्यासमादाननिसर्गयत्नो वाणीमनोगुप्तिरपि प्रकाशे ।
अनिन्द्यभुक्तिः प्रथमव्रतस्य ता भावनाः पञ्च मुनिप्रणीताः ७६

१ म न्यायं. २ म °दृष्टौ. ३ [ °वासयोगे ]. ४ म विभक्तवासैः. ५ [ मोहान्वितानां ].

क्रोधस्य लोभस्य भयस्य चापि हास्यस्य चात्यन्तमपोहनं च ।
वाचः प्रयोगोऽप्यनुवीचियुक्त्या पञ्चैव सत्यव्रतभावनास्ताः ७७
आदाय वक्रानुमतिस्तथैव तस्मिन्नसंगोऽपि च भुक्तिसेवा ।
सधर्मणश्चानुगृहीतिरेवमाहुस्तृतीयव्रतभावनास्ताः ॥ ७८
स्त्रीरूपसंदर्शनसंकथानां तदाकुलावासरतिस्मृतीनाम् ।
त्यागः प्रणीतः सरसस्य चापि ता भावना ब्रह्ममहाव्रतस्य ७९
मनोहरेष्वप्यमनोहरेषु मुनेरसंकल्प्यसमा मतेषु ।
शब्दादिषु स्यात्समवृत्तिचेतस्ता भावनाः पञ्चमसङ्गतस्य ॥ ८०
विसर्जनीयान्यथ वर्जयित्वा गुणानुपादाय यथाक्रमेण ।
ज्ञानोपयोगात्प्रशमेन तेन ज्ञानं समाराधितमात्मशक्त्या ॥ ८१
तथाभिचारातपनीयं सर्वं तद्भावनाश्चापि सुसाधयित्वा ।
नित्योपयोगोऽस्खलितैकदृष्टिः सम्यक्त्वमाराधितवान्यथार्थम् ॥
अध्यापकं चापि ततः पुरस्तात्कृत्वानुपूर्वोत्तरवार्धितं तत् ।
विजित्य सर्वान्स परीषहारींस्तपः समाराधितवान्महात्मा ॥८३
सभावनात्युग्रमहाव्रतानि रक्षन्स यत्नात्समितः समित्या ।
त्रिगुप्तिगुप्तो विगतप्रमादश्चारित्रमाराध्य यथोपदिष्टम् ॥ ८४
संहृत्य सर्वाण्यपि गोचराणि तथेन्द्रियाण्यात्ममनश्च तेभ्यः ।
अचिन्तयन्द्वादश चिन्तनीयान्याराधनोत्कर्षगतो यतीशः ॥ ८५
संध्यातडिद्वह्निशिखाम्बुदोर्मिं तृणाग्रलग्नाम्बुकणश्रियं च ।
समावृतीनीह च जीवितानि नृणामिति प्राहुरनित्यतायाः ॥ ८६
व्यादारितास्ये सति यत्कृताङ्गे न प्राणिनां प्राणमिहास्ति किंचित् ।
मृगस्य सिंहोग्रनिशातदंष्ट्रा यत्र प्रविष्टात्मतनोरिवात्र ॥ ८७

१ [ °मतिं तथैव ]. २ म मुक्तिसेवा. ३ [ तथातिचारानपनीय सर्वान् ]. ४ [ अचिन्तयद्द्वादश° ]. ५ क °तटिद्. ६ [ कृतान्ते ]. ७ [ त्राण° ].

जातौ तिरश्चामथ देवभावे मानुष्यके नारकदुःखयोनौ ।
जीवो घटीयन्त्रमिवास्वतन्त्रो वंभ्रम्यते संसृतिकल्पनैषा ॥८८
द्वन्द्वत्रयव्याप्तिषु सर्वकालमेकोऽयमात्मा स्वकृतोपभोगी ।
आध्यात्मिकं बाह्यमिहापि वस्तु न किंचिदस्त्यत्र विचिन्तनीयम् ॥
देहात्मनो भेदविकल्पनायां संज्ञादिभेदं स्फुटमन्यथात्वम् ।
विद्वानथैकं कथमत्र कुर्यात्संगं पुमान्भङ्गिनि कः शरीरे ॥ ९०
स्थानेन बीजेन तथाश्रयेण शश्वन्मलस्यन्दनसंप्रयोगात् ।
शरीरमावेदशुचीति मत्वा शुचित्वमस्मिन् विदुषा न कार्यम् ९१
आत्मा नु चेतोविवरेण तेन गृह्णात्ययं कर्म सहेन्द्रियेण ।
तथाम्बु नः छिद्रमतिस्तथैव प्रयोग एवं परिचिन्तनीयः ॥ ९२
संस्तम्भ्य चेतोविवरं यथावत्तथेन्द्रियद्वारमथो पिधाय ।
स्यात्संवृतस्याश्रवसंनिरोधो नावो यथा वारिणि संवृतायाम् ९३
यथापि दुर्वह्निशिखाभिमर्शान्निमेषमात्रेण सभस्मता स्यात् ।
तपोबलात्प्राक्तनकर्महानिस्तथा मुनेः सा खलु निर्जरोक्ता ॥९४
लोके[3] द्विधा कारणकार्यभावैरुत्पादभङ्गस्थितिसंप्रयुक्तः ।
पञ्चास्तिकायात्मकसंनिबद्धो विचित्ररूपस्त्विति लोकचिन्ता ९५
अनन्तशः संसरतोऽस्य जन्तोः सुदुर्लभा बोधिरिति प्रचिन्त्य ।
तां प्राप्य तस्मिन्न खलु प्रमादः कर्तव्य इत्येव हि बोधिभिन्ना॥
यत्प्राणिनां जन्मजरोग्रमृत्युर्महाभयत्रासनिराकृतानाम् ।
भैषज्यभूतो हि दशप्रकारो धर्मो जिनानामिति चिन्तनीयम् ९७
इत्येवमाद्या अनुचिन्तनीयाः प्रोक्ता यथार्थाः क्रमशो विचिन्त्य ।
प्रसन्नचेता विनिवृत्ततृष्णः समाहितः संयतवाक्प्रचारः ॥ ९८

१ [ नौश्छिद्रवती तथैव ]. २ [ नावो यथा वारिनिर्मितायाः ]. ३ [ लोको ]. ४ [ बोधिचिन्ता ].

मध्ये ललाटस्य मनो निधाय नेत्रभ्रुवोर्था[1] खलु नासिकाग्रे ।
एकाग्रचिन्ता प्रणिधानसंस्था समाधये ध्यानपरो बभूव ॥ ९९
संसारनिस्सारमपारतीरं[2] त्रिलोकसंस्थानमनादिकालम् ।
द्रव्याणि च द्रव्यगुणस्वभावान्स चिन्तयामास यतिर्यथार्थम् ॥
एकस्तु मे शाश्वतिकः[3] स आत्मा सद्दृष्टिसज्ज्ञानगुणैरुपेतः ।
शेषाश्च मे बाह्यतमाश्च भावाः संयोगसल्लक्षणलक्षितास्ते ॥ १०१
संयोगतो दोषमवाप जीवः परस्परं नैकविधानुबन्धि ।
तस्माद्विसंयोगमतो दुरन्तमाजीवितान्तादहमुत्सृजामि ॥ १०२
सर्वेषु भूतेषु मनः समं मे वैरं न मे केनचिदस्ति किंचित् ।
आशां पुनः क्लेशसहस्रमूलां हित्वा समाधिं लघु संप्रपद्ये ॥१०३
इत्येवमर्थान्बहुशो विचिन्त्य विधूय संकल्पमनल्पबुद्धिः ।
तपःकृशीभूतशरीरबन्धो महामुनिर्मासमथाध्युवास ॥ १०४
कृत्वा कषायोपशमं क्षणेन ध्यानं तथाद्यं समवाप्य शुक्लम् ।
यथोपशान्तिप्रभवं महात्मा स्थानं समं प्राप वियोगकाले ॥१०५
त्रिगुप्तिगुप्तेन दृढव्रतेन द्वारं नयानं [~]हितं[4] यथावत् ।
स्थितानि कर्माणि कृशीकृतानि तपःप्रभावान्मुनिसत्तमेन ॥१०६
स्थित्वापि सद्ध्यानपथे निरोधात्[5]कृत्वा च चारित्रविधिं यथावत् ।
कर्मावशेषप्रतिबद्ध[6]हेतोः स निर्वृतिं नापदतो महात्मा ॥ १०७
परीषहारीनपरिश्रमेण जित्वा पुनर्वान्तकषायदोषः ।
विमुच्य देहं मुनिशुद्धलेश्यः[7] आराधयन्तं[8] भगवाञ्जगाम ॥ १०८

१ [ नेत्रभ्रुवोर्वा ]. २ [ निस्सारसंसारमपार° ]. ३ म शास्वतकः. ४ [ पिहितं ]. ५ क निरोधो. ६ [ प्रतिबन्ध° ]. ७ [ मुनिरुच्च°, सुविशुद्ध° ]. ८ [ आराधनान्तं ].

यथैव वीरः प्रविहाय राज्यं तपश्च सत्संयममाचचार ।
तथैव निर्वाणफलावसानां लोकप्रतिष्ठां सुरलोकमूर्ध्नि ॥ १०९

शेषाश्च सर्वे जितरागमोहा
महाधियः संयतपुङ्गवास्ते ।
सज्ज्ञानचारित्रतपःप्रयोगाद्
विशुद्धलेश्याः सुरलोकमीयुः ॥ ११०

अनन्तरं केचन वैजयन्तं
ग्रैवेयकं ह्यारणमच्युतं च ।
माहेन्द्रकल्पं च ययुर्यतीशाः
सुरर्षयो ज्ञानपरायणास्ते ॥ १११

जिनेन्द्रपूजारतयः प्रकृत्या
विशुद्धसम्यक्त्वधियः प्रकृत्या ।
विशुद्धसम्यक्त्वधियः सुलेश्या
लोकान्तिकाः केचन संबभूवुः ॥ ११२

महेन्द्रपत्न्यः श्रमणत्वमाप्य
प्रशान्तरागाः परिणीतधर्माः ।
दयादमक्षान्तिगुणैरुपेताः
स्वैः स्वैस्तपोभिस्त्रिदिवं प्रजग्मुः ॥ ११३

इत्येवं नरपतिना वराङ्गनाम्ना
यत्प्राप्तं सुखदुःखमप्रचिन्त्यम् ।
राज्यान्ते कृतमिह सत्तपश्च तेन
तत्सर्वं परिकथितं मया समासात् ॥ ११४

# NOTES

## CANTO I

**4** तत् serves no special purpose here. **8-9** The author is as it were illustrating the use of विना with Abl., Acc. and Inst. **11** By sandhi श्रोत्रात्मनोरुप°. **14** Better शुश्रूषुता°. **16** न प्रतिलिप्समानो in the sense of अप्रति°. **17** Note the position of च. **22** नमः and कृत्वा are separably used, cf. शिशुपालवध I. 46. **23** In *b* better च for स; the reading भोगश्रिया is equally good rather better; पृथिव्याः would be better. **24** Possibly °नियमोच्चनिधिं. **25** गेह is usually neuter but here mas., see also xxi. 38, xxii. 66, 73. **27** अतिशाययन्ति is causal for primitive. **34** Better read अभ्यन्तरश्च. **38** Should we read in *c* & *d* °भूमिदेशैर्विन्यस्त° ? **43** Better शमेषु for समेषु. **44** Perhaps रत्नापगाजलधिभिः. **46** In *a* we have a सापेक्षसमास for which the author has too much inclination; note the use of the form आम independently. **51** Better न कुरुते for प्रकुरुते. **52** Are we to read क्षुत्क्षामसन्नयनोदरवक्त्रगण्डः ? **54** बद्धदृढवैरवतां is not a happy compound with the suffix वत्. **59** To be correct, we want °गर्वदत्यः and °विशुद्धिवत्यः in *a* and *b*; by violating Pāṇini's rule आनङ् ऋतो द्वन्द्वे, स्वमातृपितृ etc. is used irregularly for मातापितृगोत्रविशुद्धिवत्यः; is पर्याप्तश्रियः irregularly is used for पर्याप्तिन्यः? **60** What is the object of अनुभूय ? **61** °ग्रामस्थिताः would be a better reading. **64** The line *b* may be read धार्मिकभावरतिपर्वसमाजरागा, पर्वसमाज = पर्वशोभित irregularly. **68** Better °परितोषण° in *c*. **70** The gap may be filled by °भूप° or °नृप°.

## CANTO II

**2** न misplaced. **3** कल्पप्रतापं would be nearer the actual reading, but to qualify the moon as well as the prince कल्पप्रदं is better; are we to read भूपं ? **6** Better °नाम्नर्दन°. **11** अतुल्यनामा = अतुल्यानामा: her name is अतुल्या and the shortening of आ to अ is irregular. The shortening seen in रेवतिपुत्रः, अश्वपतिः etc. is not quite similar. In Prākrit, however, we have shortening of the

vowel under similar circumstances: खंडविसाहनामाओ विज्जाहरकुमारीओ, their names being खंडा and विसाहा; परितोसनामाए चेडियाए, her name being परितोसा. It is a statement put in the mouth of श्रेष्ठिन्, so note that the Perfect form बभूव is not justified. **13** Note तम is suffixed to a substantive. **14** उपोपविष्टाः is apparently an instance of double preposition, and the need of an additional preposition may be thus explained. विश् with उप, when it means 'to sit down,' develops slightly independent meaning, and hence the need of another उप to express the meaning 'to sit near'. We find this form in रामायण, अयोध्याकाण्ड i. 51, and अश्वघोष too has one instance in बुद्धचरित. IX.8 (JOHNSTON'S Ed., COWELL'S Ed. reads नृपोपविष्टं for उपोपविष्टं). **27** Better read द्रोणा य एतेन. **35** Better read विवाहत-न्त्राधिकृतान्; ससर्ज is in the singular for the subject in plural; perhaps the author might have used ससर्जुः irregularly for ससृजुः. **37** निशाम् 10 U. to see, निशम् 4 P. to hear; corresponding to this in 40 below निशम्य वाणीं च समीक्ष्य लेखम्. **39** Better read पतिं स्वमारोपित° or पत्या समारोपित° as suggested in the footnote. **43** Better read राजालयमुत्तमर्द्धिं, so that उत्तमर्द्धिं qualifies राजालयं. **47** शुचिमान् = शुचित्ववान्, or from शुचिः 'purity', 'honesty'. **48** Both एवम् and इत्थम् are used: one is redundant. **50** Read *d* thus: आह्वाययां कार्यविदो बभूव; our author is in the regular habit of separating the main verb of the perephrastic perfect from its auxiliary by an intervening word. We will note many such cases throughout this book. **53** Rather संव्यानवर्ती, संव्यानम् = a covering. **57** स्वामिः + अमा (= सह); the use of अमा is archaic. **71** In *b* °संवेष्टितदामलीलैः would be better. **73** फुल्ल = a flower; अक्ष perhaps means 'rice' here, cf. Kannaḍa अक्कि. **76** क्षितीन्द्रपुत्रीश्च would give a better sense; कथयांबभूवुः has no subject, are we to read °पौराः समेताः? **80** Rather श्रमः, केवलं being an indeclinable. **85** We should read सर्वजनावगम्यम् and तच्छ्रद्दधुः. **87** Almost uniformly the Mss. read सन्मान° for संमान. **88** चाहितराजलक्ष्म्या or चागत° as suggested in the footnote.

## CANTO III

**4** The spelling of मडम्ब and खेड is like that in Prākrit;

व्युपदेष्टुकामः gives better sense. **15** We want the form प्रहृष्टरोमा. **18** Sandhi is not observed between *c* and *d*. **21** चिचित्सवः stands either for चिकित्सवः or irregularly for चिचेतिषवः from चित् 1 p. **23** सिशंसवः perhaps irregularly for शिशमिशवः from शम् 4 p. **30** समाहार would have been better for हस्त्यश्वयानानि. **31** मत्तद्विपस्य connected with स्कन्धाधिरूढः, again a सापेक्ष compound. **39** Note the hiatus between *c* and *d*. **43** Rather व्युपदेष्टुकामः as suggested above in 4. **47** च misplaced, also in 36 above. **54** अधिक is used in the sense of अधिकत्व. **55** येऽधर्माश्रयात् would give better sense. **58** तीक्ष्णाङ्कुशवान् is कर्मधारय with वत्. **63** जिनानां for जनानां would give better sense.

## CANTO IV

**6** *d* is metrically defective. **7** Note *c* has nine syllables. **14** Note *c* has nine syllables. **22** Better द्वित्रान्वाथ ; c is metrically defective. **24** Note the hiatus between *c* and *d*. **29** *a* is metrically defective. **30** विघातयन्ति causal with primitive sense. **31** The position of लोभः occasions यतिभङ्गदोष. **34** Better तत् for तं. **37** Hiatus between *c* and *d*. **39** Hiatus between *a* and *b*. **41** Read आन्तर्मुहूर्तिकी. **44** Hiatus between *a* and *b*, also in 45. **52** स्वपन्कर्म would be a better reading. **61** Rather चातुर्वर्ण्यस्य ; hiatus between *c* and *d*, and also between *a* and *b* in 62. **68** Note उत्थान is Mas. **72** Hiatus between *a* and *b*. **77** Better प्रकृतिं तेन. **83** लपते Ātm. only in epics. **84** Hiatus between *a* and *b*. **85** Are we to read the first line thus : [illegible] ; hiatus between c and *d*. **98** Rather °विपाकान् हि वर्तन्ति शुभनामकाः. **102** Hiatus between c and *d*. **105** Hiatus between *a* and *b*. **106** Better read पटवद्देहेऽस्मिन्. **109** Nine syllables in *a*, so read [illegible] नरके घोरे. **114** समस् is 5 Ā, so the form समश्नुते (also in v. 95) is perhaps irregularly used for समश्नुवानानां or समश्नुवतां when it is Parasmaipada (vi. 16). ; note तरतम is used like an adjective.

## CANTO V

**5** पिहिताः = अपिहिताः, an epic usage. **8** Rather [illegible]. **12** Hiatus between *a* and *b*, also in 16. **21** Hiatus between *c*

and *d*. **30** Read °मुखेष्वेके ; hiatus between *a* and *b*. **32** Rather पूतिगन्धयः **33** Hiatus between *c* and *d*, also in 36. **37** Should we read शूलैस्ताडयन्त्यथ ? **42** प्राडु: पिशितकं would give some sense. **48** शङ्कु is mas., so शङ्कून् + मूर्धसु ; उत्खन् used in the sense of निखन्. **49** In the light of 57 below, the first line may be thus emended मक्षिका मशकांश्चैव वृश्चिकांश्च पिपीलकाः The rule that the causals of the roots अद् and खाद् govern the Instr. case is violated. Better read स्रवद्रुधिरपूयिनः. **53** Better विच्छिद्य. **56** Hiatus between *a* and *b*. **59** Rather ससंभ्रमम्. **60** Taking परस्त्रीणां etc. a सापेक्ष compound, we want °कर्कशैः or कर्कशान्. **61** Rather सोपचारमुपासृत्य and ब्रुवत्यः. **64** Better युवयो रतिविभ्रमम्. **68** श्वाभ्री *f*. hell, see 27 above. **71** Hiatus between *a* and *b*. **74** Read शैलात् + शीर्यमाणाङ्गान् + चूर्णयन्ति etc. **83** What is the object for अधिरुह्य ? **85** चूपयन्ति causal for primitive. **93** Rather उदाराण्युरुवक्षांसि. **94** भर्त्स् is rarely Parasmaipada. **96** Better read प्रावेक्ष्यद्ग्रीष्ममध्याह्ने वह्निं दुःखमलप्स्यत। **97** °प्राविक्ष्यच्चेद्विनिर्गतः...परं दुःखमलप्स्यत would be better. **101** Rather उपभुज्यात्मनः. **106** Are we to read जघन्यका for जघन्यकः ?

CANTO VI

**4** Rather कायांश्च. **15** गोण 'Ox' is a Prākrit word. **21** Better read न्यङ्केडकाद्याः परिपुष्टकायास्त्वङ्गांस°. **23** निपानदेशेष्वभिलीन° would be better. **24** अनुवाच्यमानाः does not give the necessary sense, unless it is a Sanskritisation from the Prākrit root वच्च to go ; so अनुधाव्यमानाः or अनुवाध्यमानाः would give the necessary sense. **26** Usually वराकी is the f. from वराक. **36** वसन्ति = विशन्ति ? **38** Rather सुसंयतान् ; ददते has no object ; and also note the position of हि at the beginning of a pāda. **40** Are we to take जलाश्रितां as the Gen. pl. of जलाश्रित्, जलमाश्रयतीति जलाश्रित् ? **42** Read पञ्चाशदुक्तं. **45** Rather शूल्ययुक्ता कोष्ठ्यः and प्रभञ्जनावात्मकयोश्च. **46** Hiatus between *c* and *d*. **52** जाल 'a net' is neuter, but mas. here. **53** The rule of समानकर्तृकत्व in the use of Gerund is violated here ; or are we to read त्वपरैरवाप्तं ?

CANTO VII

**16** दुन्दुभी f. is used in epics. **21** Note कर्मधारय with suffix वत्. **23** Rather कामलतावि°. **36** हेयमुदाहरन्ति would give better sense.

**40** Rather ते गुडशर्कराद्याः **48** We want °धीयशांसि, also in 49. **54** Hiatus between *a* and *b*. **66** Rather °पुण्य-प्रभवसुखं.

CANTO VIII

**1** साह्व like उपाह्व 'by name'. **4** Hiatus between *c* and *d*, also in 7 and 14. **8** Better सद्धर्ममतीव कृच्छ्रात्. **16** Hiatus between *a* and *b*; the verse is obscure. **17** Better अल्पार्थमन्यासु मतिं or as suggested there. **18** अनभिज्ञतत्त्वाः = तत्त्वानभिज्ञाः; better परप्रेष्यकराः, प्रेष्यकर is known to epics, see also 27 below. **22** परैस्तु may be substituted by परेषां or हत्वा is used with causal sense. **26** Better धनाशया क्लेश°. **28** Either कर्पटिनः or कार्पटिकाः; भिक्षयन्ति causal for primitive. **29** Are we to read स कर्मणां ?. **33** Rather अकल्पता 'Sickness'. **34** संश्रावयन्तः Causal for primitive. **36** तदवाप्नुवन्ति, तद् is unnecessary. **38** Rather ददत्तथार्थानपि. **39** च इह° a hiatus. **40** Rather लक्ष्मीवति; व्याप्तयशोदिगन्ते irregularly for यशोव्याप्तदिगन्ते; better सन्तस्तमाहुः. **41** Vocatives collectively put: मनाथ, वत्स, प्रिय, पुत्रकेति. **42** Should we read यो ना for यूना ? **43** Better संवसानः and गन्धान् सुगन्धीन्. **44** अमा = सह. **45** Better रात्रिंदिवं. **46** वादित्रवालाप° may be equally good. **50** Are we to read ग्रामनक्षत्रमेकः ? **53** Better °संपद्वपित्वमारोग्य°; आरोग्यता, a contaminated compromise between आरोग्य and अरोगता. **57** Note आर्हन्त्य for आर्हत्य, also in xxvii 47. **62** Better तथा or सदा for तदा; शुचि = शुचित्व. **69** *d* is wanting in two syllables, so read गदितुं स्पष्टतराक्षरं प्रवृत्तः.

CANTO IX

**15** Possessive suffix to कर्मधारय in *a*, also in *c* 45 below. **24** पर्यन्त° etc. irregularly for पर्यन्तस्थितवनान्तरस्पृहाः. **28** Are we to read ये कामतो ? **38** Hiatus between *a* and *b*; rather [illegible]. **49** Hiatus between *a* and *b*. **51** [illegible] ?. **60** Hiatus between *c* and *d*. **62** Rather सर्वांगन्तं......नान्यत्र.

CANTO X

**7** Rather रागविरागवर्जम्. **19** Rather [illegible]. **20** दिनेन, I think now, is a better reading. **28** [illegible] may stand for समं प्रकृत्य or irregularly for [illegible]. **31** *c* is obscure. **45** [illegible] = अभिहित. **52** Better परिकर्मसुखमन्दिर.° **63** Better [illegible] is [illegible] used irregularly for [illegible] ? **64** Better [illegible].

## CANTO XI

**6** Are we to read हिंसानुधर्मं त्वथ? **9** Rather श्रुतं यद्दर्थे. **12** Better °विपर्यये. **23** Usually समक्त, but here समजित. **25** सवेदकः, 'a man of knowledge', क being a स्वार्थे suffix. **30** विमग्नसंसार etc. would be better. **32** यतते, यत् 'to be prepared for or to strive after'. governs Acc., or better तपते which is sometimes Ātm. **33** Rather नैःश्रेयसीं. **34** धर्माभि° etc. irregularly for धर्माभिरागसत्क्रियोद्यताय. **36** Better तपश्चरन्ति, as that root is rarely Ātm. **44** Hiatus between *a* and *b*; better कृतसाध्यकस्तु. **45** Note the rhyme. **46** वयोपचारं stands either for नयोपचारं or यथोपचारं. **47** तपस्कः is used in the sense of 'a saint', if it is a correct reading. **48** Better स्म कार्यम्. **51** Note अपेत with Instr., not unusual in the Epics. **56** Rather वाक्यान्यनुमत्य. **57** Hiatus between *a* and *b*, also between *c* and *d* in 59. **58** Better सुतोरगा°. **61** Auxiliary separated in *d* also in 62 and 85. **64** आमात्य for अमात्य is known to Lexicographers; ते serves no special purpose. **65** Are we to read पुरस्कृतः श्रीयशसे? तानि appears to be used like a definite article, also in 72 below. **66** Better केशमाला for केतु°; and प्राकारकाञ्चिः. **70** रराज, the use of Perf. is not satisfactory. **75** Are we to read संजीवनान्नो or संजीवतां नो? **77** Better रूपान्वितो वा कृतिनां. **83** युवराज्य = युवराजत्व? Note एकादशम for एकादश in the colophon, which reminds one of the Prākrit usage.

## CANTO XII

**2** Hiatus between *c* and *d*, also in 4. **5** In both the Mss., almost uniformly, विसर्ग is retained before क and प and not changed to ष् as expected. **6** Better °धुरासमर्थे. **11** In *b* rather न वा न शक्तिः. **12** Hiatus between *c* and *d*, also between *a* and *b* in 13 and in 15. **18** Better पूर्वमुपाश्रिता श्री°. **19** Are we to read ये नात्मबुध्या? **21** प्रयाचमाना + आस सुतेन. **24** Rather परैरविज्ञात.° **28** Rather अभ्यर्थ्यमाना°. **29** Better read जात्यौ. **31** स and सो serve no special purpose; hiatus between *a* and *b*. **37** धारितवामशीलं would be a better emendation for वारित° etc. **39** Rather °वैपक्रिययाधिरुह्य. **40** Are we to read तथाऽविनीतः? **41** Rather अश्ववता. **42** Should we read सुकृतानि? **44** Read वार्तो यथौत्पातिक°. **49** The subject for आरुरोह

is omitted. **51** Rather शीतवनानिलेन. **55** Should we read विधाय for निधाय? **61** Rather च दुःस्थितस्य or सुदुःस्थितस्य. **62** Better शार्दूलयानं प्रति°. **65** Read ददंश कुम्भे. **69** Better तवोपकार°. **72** *c* stands irregularly for फुल्लोत्पल...संछन्नं. **74** If we accept the emendation ददृशुस्तिरस्तात्, it means ताः तिरोददृशुः = ताः तिरोदधुः, a rare usage indeed. **75** Rather क्षामतयाम्बु. **78** Are we to read रोरुह्यमाणो for आरुह्य? **79** Note सपाषाणमयं, or सपाषाणं + अयं. **83** Rather °मूर्छित or °मुच्छ्रित. **85** Read यद्भिण्डप्रचय, भिण्ड° = भेंड in Marathi. **87** Are we to read समानपुंसः **88** Rather धृति°...लम्भ्य. Note द्वादशम for द्वादश in the colophon.

## CANTO XIII.

**1** The compound in *a* stands irregularly for फुल्लोत्पल°. **10** Are we to read °दर्शनं जिनं? **13** Rather प्रपश्यतां for प्रशास्यतां. **15** शरण्यतां stands irregularly for शरणं. **17** Better read निस्तृपा for निस्तुपाः to agree with येन. **20** व्रतधारि° or वशधारितात्मकम्; auxiliary separated in *d*. **25** कर्मधारय with the suffix इन् in *b*. **31** In *b* the compound stands irregularly for दुर्लभप्रतिकारा. **34** Rather read *d* thus: परान्ववस्थापनबोधन°. **38** Read नापि for वापि. **39** As suggested there or परीक्षणायाकृपि गृह्यताम्. **43** Better वरे वने...°शोभिते. **45** Or we may improve on the reading of क thus: °वालुकाकुला. **51** Rather स्मरकृशेत. **56** Rather बहुप्रकारक्रिमि°; *c* is an इन्द्रवंशापाद in a वंशस्थ verse; should we read प्रमार्जनादि°? **60** Rather °निम्नुराहुताः. **62** Rather गुहः, and some verb like स्तुवान is omitted. **63** [illegible], Loc. for the usual Acc. **66** भूषण is usually Neu., but also Mas. in the Epics; ते in *b* serves no special purpose. **69** Are we to read °मिष्यतेऽश्रमैः? **70** Read यत्तदस्तु युक्ता°. **71** The reading of क is equally good; rather स्वदन्युसंगं. **74** Better °प्रतिमानपरिषद° **75** कार्योपस्थितिं suggested there disturbs metre, so better [illegible] or कार्योपहतिं. **78** Rather परीत्य चारुकः (also in 79). **87** [illegible] = संयाहननं. **88** Rather चतुर्भुर्यस्तदेभ्यः° which gives the necessary sense; I think, even this usage may be correct. Note [illegible] for त्रयोदशः in the colophon.

## CANTO XIV

**2** Are we to read [illegible]? **4** Note the [illegible]-

tive use of नृत. **6** Hiatus between *c* and *d*. **9** Better श्रुत्वापि तूर्यं. **12** प्रनिवर्पयन्तौ causal for primitive. **13** There is only one army of Pulindas, so we might better read thus: प्रत्यागतां तां वणिजः...°सेनां ज्वलदग्निकल्पाम्. **16** Auxiliary separated. **24** The form प्रदुद्रुवुः makes the last pāda one of वंशस्थ in an उपजाति verse, so better read इति दुद्रुवुस्ते. **29** Usually प्रपातः, so better °प्रपातानपि. **31** प्रजहार with Acc., cf. प्रहर्तुमभ्युद्यतमात्मयोनिम्, कुमारसं., iii 70 **37** Read °निरथैर्योत्स्ये as required by the metre; are we to read मा चल त्वम्? **45** नरेश्वरो द्रावितशत्रुपक्षः or as suggested there. **51** Is जघ्निथ irregularly used for जघन्थि? *d* is obscure. **52** Better प्रसह्य for प्रसव्य. **57** च misplaced. **70** धर्मकालं = कालधर्मम्; rather कश्चिद्रुद्रस्याप्रति°. **73** Hiatus between *a* and *b*. **78** Better ददस्व for दधस्व; note the hiatus in *d*. **79** Either विमुञ्च यामि or विवञ्चयामि. **84** Hiatus between *a* and *b*. **86** Hiatus between *c* and *d*. **87** Rather वियोगभी.° and मर्त्यानकृतश्रमांस्तु. **89** Better °पुण्यपण्यं. **90** Rather °प्रियतां पटुत्वं. **95** अद्धा means 'time', it is quite usual in Prākrit. **98** Rather पुरुर्धात्रैणिग्.

CANTO XV

**1** वृत्तान्तं, rarely neuter. **3** Rather अनुगम्याप्यपश्यन्तो or as suggested there. **8** Read °राजापवाहने. **9** Are we to read कुमारोऽभ्यन्तरात् स्वेन उत वाह्येन? **10** Rather °अल्पयुजा qualifying क्रिया. **15** Note the alliteration. **18** Hiatus between *a* and *b*. **24** पस्पृशे allowed by the Epic usage. **25** Hiatus between *a* and *b* **34** Rather श्रुतवत्यस्तु. **36** Rather रुदत्य°, also in 39; such forms are allowed in the epics, and अश्वघोष also uses this form, सौन्दरनन्द, vi. 6,35. **37** Rather °श्वेतनावत्यः. **47** How to explain the form कृतान्तः, which is apparently Voc. Sg.? **51** Rather त्वाद्य = त्वा + अद्य. **64** कल्पते or कल्प्स्यते. **65** Is मण्डल = मण्डलाग्र? **69** Rather स नौरिव ... तारयत्यापदर्णवम्।. **73** Rather °स्थितां. **74** प्रारब्धो in the sense of प्रारब्धवान्. **87** Rather शोककारिणः **104** Nine syllables in *b*; rather तत् त्रयं सेव्यते. **108** धध्वं or धत्त for धत्स्व, as we want plural. **111** Rather त्रिप्रकारं; hiatus between *c* and *d*, also in 112. **114** Rather कुले or खले for कले. **115** Rather °मातृस्नुषाप्रस्या. **126** Either ये is redundant or पालयन्ति for परिपाल्य. **128** Usually

